शौनक उवाच ।

सौते सुमहदाख्यानं भवता परिकीर्तितम् ।
भारतानां च सर्वेषां पार्थिवानां तथैव च ॥ १
देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
दैत्यानामथ सिद्धानां गुह्यकानां तथैव च ॥ २
अत्यद्भुतानि कर्माणि विक्रमा धर्मनिश्चयाः ।
विचित्राश्च कथायोगा जन्म चाग्र्यमनुत्तमम् ॥ ३
कथितं भवता पुण्यं पुराणं श्लक्ष्णया गिरा ।
मनःकर्णसुखं तन्मां प्रीणात्यमृतसंमितम् ॥ ४
तत्र जन्म कुरूणां वै त्वयोक्तं लोमहर्षणे ।
न तु वृष्ण्यन्धकानां वै तद्भवान्प्रब्रवीतु मे ॥ ५

सूत उवाच ।

जनमेजयेन यत्पृष्टः शिष्यो व्यासस्य धीमतः ।
तत्तेऽहं संप्रवक्ष्यामि वृष्णीनां वंशमादितः ॥ ६　C 17 B I I I P I I I

---

13* यो ददाति हरिवंशपुस्तक
ब्राह्मणाय विदुषे सदक्षिणम् ।
सोऽश्वमेधफलभाग्भवेन्नर
सत्यमेव कथित महर्षिणा ॥

14* चक्र यस्य भुजाग्रहस्तललित विद्युत्प्रभ राजते
शङ्खो यस्य विराजते करतले सपूर्णचन्द्रप्रभः ।
माला यस्य सचम्पका सतिलका साशोकनीलोत्पला
स त्वां पातु षडर्धविक्रमगतिस्त्रैलोक्यनाथो हरि ॥

[ ( 14*, L 1 ) $T_3$ भुजे गभस्ति- ( for भुजाग्रहस्त- ) $M_3$ विष्व-क्प्रभ ( for विद्युत्प्र° ) $T_{3\ 4}$ $M_4$ भ्राजते ( for रा° ) — ( 14*, L 4 ) $T_3$ $M_3$ [ऽ]स्मान्, $T_4$ $M_{2\ 4}$ व , $G_5$ न ( for त्वा ) ]

15* योऽविद्याद्यैरशेषैर्मनसि विनिहितैः क्लेशसंज्ञैस्त्रिदोषै-
रस्पृष्टो निर्गुणत्वात्परमगुरुरज कर्मभिस्तत्फलैर्वा ।
सर्वज्ञत्वादियुक्तो निरतिशयसुखप्राप्तिहेतुर्यतीना
सोऽनादिर्वासुदेवः शमयतु दुरित सर्वजन्मार्जितं व ॥

[ ( L 1 ) $M_2$ रत्याद्यैर् ( for ऽविद्या° ) $M_4$ तु ( for त्रि- ) — ( L 2 ) $T_3$ अस्पृश्यो ( for °ष्टो ) — ( L 3 ) $T_4$ $M_2$ सर्वज्ञ सति मु( $M_2$ यु )क्ते ( sic ) ( for °ज्ञत्वादियुक्तो ) ]

16* जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥

[ ( L 1 ) $T_{2\ 4}$ $G_1$ नमस्ते ( for जित ते ) — ( L 2 ) $T_4$ नम ( for महा- ) ]

17* शुक्लाम्बरधर विष्णु शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

[ ( L 2 ) $G_5$ -दुःखोप- ( for -विघ्नोप- ) ]

18* वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

19* इन्दिराकुचपाटीरपङ्कसंकलितोदरः ।
दद्यादमन्दमानन्दमचिरान्नो नृकेसरी ।
कालिन्दीजलकल्लोलकोलाहलकुतूहली ॥

20* असत्कीर्तनकान्तारपरिवर्तनपांसुलाम् ।
वाचं शौरिकथालापगङ्गयैव पुनीमहे ॥

[ ( 20*, L. 1 ) $M_4$ -कान्तारा ( for °र- ). ]

21* इन्दीवरदलश्याम इन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽह यदुनन्दनम् ॥

22* व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥
व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नम ॥

---

1 $M_3$ reads the ref before 14* $Ś_1$ शौनकादय. ( also श्रीजनमेजय. ), $M_1$ om ( for शौनक ) — [a] ) $D_2$ सूत तन्, $G_4$ श्रुत सु- ( for सौते सु- ) — [c] ) $Ñ_2$ $V_{1\ 2}$ $B_3$ $Dn_1$ Ds $D_2$ भरताना $Ś_1$ कुरूणा च, $K_{1-3}$ महज्जन्म, $D_1$ हि सर्वेषा ( for च स° )

2 $K_2$ om ( hapl ) 2 — [c] ) $T_{1\ 4}$ अपि ( for अथ ) $V_2$ यक्षाणां ( for सिद्धाना ) — [d] ) $K_4$ $Ñ_2$ $D_{1\ 4\ 5}$ $T_{3\ 4}$ च सर्वश , $D_3$ damaged ( for तथैव च )

3 [a] ) $T_2$ $G_1$ धर्माणि ( for क° ) $V_1$ अद्भुतानि च कर्माणि. — [b] ) $D_4$ $T_2$ $G_1$ विविधा ( for विक्रमा ) $G_4$ भवता कर्मनिश्चया — $G_1$ repeats $3^{cd}$ after 8 — [d] ) $Ds_1$ वा ( for च ) $D_1$ [ए]षाम् ( for [अ]ग्र्यम् )

4 [a] ) $M_1$ damaged for भवता K $D_6$ $T_{2-4}$ G $M_{2\ 3}$ पूर्वं, $M_4$ सर्वं ( for पुण्य ) — $M_4$ om $4^c$–$12^b$ — [c] ) $D_6$ मन्ये ( for मन- ) $Ś_1$ तस्मात्, $Ñ_{2\ 3}$ V B Dn Ds $D_{3\ 4}$ सौते ( for तन्मां ) — [d] ) $Ś_1$ -संमतम्, $M_{1\ 2}$ -संनिभम् ( for -संमितम् )

5 $M_4$ om 5 ( cf v l 4 ) — [a] ) $Ñ_3$ ( marg as in text ) $V_3$ अत्र ( for तत्र ) $D_{1\ 3\ 5}$ $T_1$ च, $M_3$ तु ( for वै ) — [b] ) $K_3$ यथा ( for त्वया ) $Ś_1$ $T_4$ $M_3$ रो( $Ś_1$ लो )महर्षणम्; some Mss रोमहर्षणे, लौम° or रौम° ( for लोम° ). — [c] ) $Ś_1$ $V_{1\ 3}$ $D_3$ तु, $K_4$ B Dn Ds $D_4$ $T_{3\ 4}$ च ( for वै ). — [d] ) $V_{1\ 3}$ $B_2$ ( marg as in text ) $_3$ Dn Ds $D_{2,3}$ $M_3$ तद्भवान्वक्तुमर्हति ( $Ds_1$ $D_2$ °सि ), $D_6$ T G तन्मे ( $D_6$ °त्व. ) प्रब्रूहि पृच्छत. .

6 $M_4$ om 6 ( cf. v. l. 4 ), $K_{1,3}$ $Ñ_{2,3}$ V B Dn Ds

श्रुत्वेतिहासं कात्स्र्न्येन भरतानां स भारतः ।
जनमेजयो महाप्राज्ञो वैशंपायनमब्रवीत् ॥ ७
महाभारतमाख्यानं बह्वर्थं बहुविस्तरम् ।
कथितं भवता विप्र विस्तरेण मया श्रुतम् ॥ ८
तत्र शूराः समाख्याता बहवः पुरुषर्षभाः ।
नामभिः कर्मभिश्चैव वृष्ण्यन्धकमहारथाः ॥ ९
तेषां कर्मावदातानि त्वयोक्तानि द्विजोत्तम ।
तत्र तत्र समासेन विस्तरेणैव चाभिभो ॥ १०
न च मे तृप्तिरस्तीह कीर्त्यमाने पुरातने ।
एकश्च मे मतो राशिर्वृष्णयः पाण्डवास्तथा ॥ ११
भवांश्च वंशकुशलस्तेषां प्रत्यक्षदर्शिवान् ।
कथयस्व कुलं तेषां विस्तरेण तपोधन ॥ १२
यस्य यस्यान्वये ये ये तांस्तानिच्छामि वेदितुम् ।
तेषां पूर्वविसृष्टिं च विचित्रामा प्रजापतेः ॥ १३

---

$D_{3-5}$ सौतिर्, $G_{1, 4}$ om (for सूत) — $^{a}$) Hypermetric $K_1$ यत्पृष्टं, $D_5$ $T_2$ $G_1$ $M_{1-3}$ सपृष्ट (for यत्पृष्ट°) — $^{b}$) N (except $Ś_1$ $D_{5, 6}$) $T_4$ $M_3$ धर्मवित् (for धीमत्.) — After $6^{ab}$, $D_6$ T G $M_{1-3}$ ins

23* धर्मवित्कथयामास कुलं तेषां सविस्तरम् ।

[ $M_3$ कथयामास यत्तेषां (for $^{a}$) $M_{1-3}$ विस्तरेण तपोधन (for $^{b}$) ]

— $^{c}$) $T_1$ तेषां (for तेऽहं) $Ś_1$ $K_{1, 3, 4}$ $Ñ_1$ कीर्तयिष्यामि, $K_2$ $V_2$ $B_{1, 2}$ (marg) वर्त($V_2$ °र्ण)यिष्यामि, $T_{3, 4}$ कथयिष्यामि (for संप्रवक्ष्यामि) — $^{d}$) $T_{1, 2}$ G उत्तमम् (for आदित.)

7 $M_4$ om 7 (cf v l 4) — $^{b}$) $K_{3, 4}$ $V_3$ $D_{2, 4-6}$ $T_{2-4}$ $G_{1, 3-5}$ $M_{1, 2}$ भारतानां (for भ°) $K_{1, 4}$ $D_4$ सभापते; $Ñ_2$ च भारत (for स भारत.) $D_1$ $T_1$ $G_2$ $M_3$ भारतानां स भारत ($T_1$ $G_2$ °तम्). — $^{c}$) Hypermetric

8 $M_4$ om 8 (cf v l. 4). Before 8, some Mss ins जनमेजय उवाच — $^{b}$) Ñ ($Ñ_1$ damaged) V B Dn Ds $D_{1-5}$ $T_{3, 4}$ $G_2$ श्रुति- (for बहु) K $G_1$ बह्वर्थं श्रुतिसम- ($K_{3, 4}$ $G_1$ °मि)तम्, $D_6$ $T_{1, 2}$ $G_{3, 4}$ बह्व($G_4$ यथा)र्थं श्रुतिसंहितम्. — $^{c}$) $K_3$ $Ñ_1$ Dn $D_6$ $T_{1, 2}$ G पूर्वं; $Ñ_{2, 3}$ V B Ds $D_{1-3}$ $T_{3, 4}$ पुण्यं; $D_4$ तद्वै, $D_5$ $M_{1, 2}$ सर्वं, $M_3$ चित्रं (for विप्र) — $^{d}$) $Ś_1$ $D_5$ यथा (for मया) $G_1$ (*inf lin*. as in text) कृतम् (for श्रुतम्) — After 8, $G_1$ repeats $3^{cd}$

9 $M_4$ om 9 (cf v l 4) — $^{a}$) $Ñ_3$ (marg as in text) $V_1$ यत्र (for तत्र) $Ñ_{2, 3}$ V $B_{1, 2}$ $D_{2, 3}$ महेष्वासा (for समाख्याता) — $^{b}$) $M_{1-3}$ बहव° ($M_3$ दृढास्त्रा) क्षत्रियर्षभाः — $^{d}$) $V_1$ -महायशाः (for °रथा°)

10 $M_4$ om 10 (cf. v. l 4). — $^{a}$) $D_3$ [अ]वदातानां, $D_6$ प्रधानानि; $G_{1, 3, 5}$ [अ]पदानानि (for [अ]वदातानि). $D_2$ $M_3$ तेषां कर्माणि नामानि; $T_1$ तेषामप्यपदानानि; $M_{1, 2}$ तेषां नामानि कर्माणि — $^{b}$) $Ś_1$ नरोत्तम; $D_6$ $T_{1, 2}$ G $M_{1, 2}$ द्विजर्षभ (for द्विजोत्तम). — $^{d}$) $K_{2, 4}$ $D_{1, 4, 5}$ $T_4$ तथा विभो; $Ñ_1$ च मे प्रभो; $Ñ_{2, 3}$ $V_{1, 2}$ $D_{3, 6}$ [ए]व मे ($D_6$ वा) विभो, $V_3$ $B_{1, 3}$ Dn [ए]व मे प्रभो; $B_2$ Ds $T_2$ $G_1$ च मे विभो, $D_2$ च वै प्रभो, $T_1$ [अ]पि वा विभो, $T_3$ कथा प्रभो (sic), $G_4$ [ए]व चाभित., $G_5$ [ए]व चापि भो, $M_{1-3}$ न चाभिभो (for [ए]व चा°)

11 $M_4$ om 11 (cf v l 4) — $^{a}$) $Ñ_2$ अस्तीति, $M_{1-3}$ अभवत् (for अस्तीह) — $^{b}$) $Ñ_3$ $V_{1, 3}$ B Dn Ds $D_{2, 3}$ $T_{1, 4}$ $G_{4, 5}$ $M_{1-3}$ कथ्यमाने (for कीर्त्य°) — $^{c}$) $Ñ_2$ [ए]ष, $V_3$ B Dn Ds [ए]व (for मे) $Ś_1$ एकशोऽप्यभवद्राजन् (sic) — $^{d}$) $T_1$ वार्ष्णेया. (for वृष्णय.) $Ś_1$ तदा (for तथा). $D_6$ $T_2$ G (except $G_2$) वृष्णयश्चान्धकाश्च ये

12 $M_4$ om $12^{ab}$ (cf. v l 4) — $^{a}$) $D_6$ $T_2$ $G_{1, 4, 5}$ वंशास्तु कुकुरा($T_2$ °रु)स्तेषां — $^{b}$) $D_6$ $T_{2-4}$ $G_{1, 3-5}$ $M_3$ स्वय (for तेषां) $Ś_1$ -दर्शिनाम् — $^{c}$) $K_4$ कथय त्वं (for °यस्व) $M_3$ प्रभवश्च पुनस्तेषां. — $^{d}$) $D_3$ यथाश्रुतम् (for तपोधन) — After 12, $T_{2, 3}$ $G_1$ ins 27*

13 $^{a}$) $Ś_1$ यथावच्च, $K_1$ $D_1$ $G_5$ $M_4$ [अ]न्ववाये ये; $K_2$ °या ये ये, $K_3$ $T_1$ °ये ये च ($T_1$ तु), $G_2$ °ये जातास् (for °ये ये ये). $T_3$ ये च यस्यान्वये जातास् — $^{b}$) $Ś_1$ तत्त्वम् (for तांस्तान्) — After $13^{ab}$, $Ś_1$ ins:

24* पूर्वं कथा समाख्याता विचित्रा च महीपते ।

while $K_{2-4}$ $Ñ_{2, 3}$ V B Dn Ds $D_{1-4}$ $T_4$ ins. after $13^{ab}$ $D_5$ after 13

25* सर्वमेतदशेषेण कथयस्व द्विजोत्तम ।

[ $Ñ_3$ $V_1$ $B_2$ Dn Ds $T_4$ स त्व सर्वम् (for सर्वमेतद्) $B_3$ स त्वं सर्वं विशेषेण (for $^{a}$). $Ñ_3$ $V_1$ B $D_3$ $T_4$ महामुने (for द्विजोत्तम) ]

$D_{2, 5}$ cont

26* येन वै शृण्वतां पुंसामपुत्रत्वं प्रणश्यति ।

$T_4$ cont after 25*. $T_{2, 3}$ $G_1$ ins. after 12 $D_2$ $G_4$ after 13

27* एवं संचोदितो राजा व्यासशिष्यो महामुने ।

[ $G_1$ स नोदितो (for सचो°). $T_{3, 4}$ महामुनिः; $G_4$ °मतिः (for °मुने) ]

— $Ś_1$ $K_2$ om. $13^{cd}$. — $^{c}$) $D_4$ पूर्वं (for पूर्व-). $D_6$ -प्रवृत्तिं

सूत उवाच ।

सत्कृत्य परिपृष्टस्तु स महात्मा महातपाः ।
विस्तरेणानुपूर्व्या च कथयामास तां कथाम् ॥ १४

वैशंपायन उवाच ।

शृणु राजन्कथां दिव्यां पुण्यां पापप्रणाशिनीम् ।
कथ्यमानां मया चित्रां बह्वर्थां श्रुतिसंमिताम् ॥ १५
यश्चैनां धारयेत्तात शृणुयाद्वाप्यभीक्ष्णशः ।
स्ववंशधारणं कृत्वा स्वर्गलोके महीयते ॥ १६
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् ।
प्रधानं पुरुषं तस्मान्निर्ममे विश्वमीश्वरः ॥ १७
तं वै विद्धि महाराज ब्रह्माणममितौजसम् ।
स्रष्टारं सर्वभूतानां नारायणपरायणम् ॥ १८
अहंकारस्तु महतस्तस्माद्भूतानि जज्ञिरे ।
भूतभेदाश्च भूतेभ्य इति सर्गः सनातनः ॥ १९
विस्तरावयवं चैव यथाप्रज्ञं यथाश्रुतम् ।
कीर्त्यमानं शृणु मया पूर्वेषां कीर्तिवर्धनम् ॥ २०
धन्यं यशस्यं शत्रुघ्नं स्वर्ग्यमायुर्विवर्धनम् ।
कीर्तनं स्थिरकीर्तीनां सर्वेषां पुण्यकर्मणाम् ॥ २१
तस्मात्कल्याय ते कल्यः समग्रं शुचये शुचिः ।
आ वृष्णिवंशाद्वक्ष्यामि भूतसर्गमनुत्तमम् ॥ २२ C 34 B 1 1 P 1 1

च, T2 G M1 2 -प्रसृष्टिं च, M3 -विसृष्टिं हि (for °ष्टिं च) — d) K1 4 विचित्रां तां, K3 Ñ V1 B Dn Ds D1-3 5 T3 4 विचिन्त्येमां, Ñ3 (marg) विचिन्त्यैतां, M3 °त्रार्थं (for °त्रामा)

14 T3 4 om the ref Some Mss सौतिर् (for सूत) — a) Dn1 प्रतिपृष्टस्, Ds D6 परितुष्टस् (for °पृष्टस्) Ś1 स, K1 2 4 D5 T3 4 सन्, D4 ऽसौ (for तु) K3 जनमेजयेन संपृष्ट (hypermetric) — b) V2 व्यासशिष्यो (for स महात्मा) Ś1 K Ñ2 D1 5 M3 महायशा (for °तपा.) D2 शिष्यो व्यासस्य धर्मवित् — c) K3 -पूर्व्या स, V1 D6 T1 2 4 G1-3 M4 -पूर्व्याच्च, D1 -पूर्वेण, G4 M3 -पूर्व्येण, G5 -पूर्व्याद्वा (for -पूर्व्या च) — d) Ś1 भागश., K1 (*sup lin* as in text) 3 4 T1 भारतम् (T1 °त), T2 G M भार्गव. (for तां कथाम्)

15 T3 om the ref — a) Ñ1 Ds D6 T1 2 G1 पुण्यां, Ñ3 V1 एतां, V3 एनां (for दिव्यां) — b) Ś1 K Ds D5 सर्व-, Ñ1 D6 T1 3 4 G2-5 M4 दिव्यां (for पुण्यां) K1 2 4 Ñ1 3 V1 3 B2 3 Dn D2 3 5 M1-3 -प्रमोच (V1 3 D3 °चि)नीम्, D4 6 T2 -प्रणाशनीम् (for °शिनीम्) — c) D4 कथां (for मया) — d) V3 -विश्रुताम्, D3 संमं°, D6 T1 2 G (except G4) -संहि° (for -संमि°) Ś1 बह्वर्थां श्रुतविस्तराम्, Ñ M4 °र्थश्रुतिविस्तरा (M4 °संहिता)म्

16 a) Ñ3 V B1 3 Dn D3 [इ]मां, D5 6 G2 4 M4 [ए]तां (for [ए]नां) D6 T1 2 G M1 2 4 कथयेत् (for धार°) Dn वापि; D2 3 नित्य, T3 पुण्यां; T4 पूज्यां (for तात) D1 यश्चैतां धारयेन्नित्यं — b) V D6 T1 2 G च (for वा) — After $16^{ab}$, D6 T1 2 G M4 ins

28* यश्चैनां धारयेद्विप्रः श्रावयेद्वा महात्मनाम् ।

[D6 G2, 4 [ए]तां (for [ए]ना) T1 विद्वान् (for विप्र)]

— c) G2 M4 -धारणां (for °ण) — d) M3 काले स्वर्गे (for स्वर्गलोके)

17 a) Ñ2 3 यत्तु; M1-3 नित्यं (for यत्तन्) — b) M1-3 यत्तत् (for नित्यं) — c) V1 प्रधान- (for °नं) Ds1 T3 4 G2 4 M1 2 पुरुषस् (for °ष) V3 यस्मान् (for त°) Ś1 प्रधानपुरुषस्त तु — d) Ś1 K1 3 4 लोकभावनम्, K2 Ñ1 V3 B Dn D1 T4 विश्वमीश्वरम्, D6 T1 G2-5 M महदीश्वर., T2 जगदी° (for विश्वमी°)

18 Ś1 transp $18^{ab}$ and $18^{cd}$ — c) D2 5 M1 2 4 -लोकानां (for -भूतानां) — d) D1 नित्यमात्मपरायणम्, T2 3 G1 नारायणमनामयम्

19 a) Ñ2 D5 च (for तु) — b) D1 निर्ममे (for जज्ञिरे) — c) Ś1 Ñ1 -भेदश्च, Ñ2 D1 T2 -सर्गस्तु, D2 T1 4 -भेदास्तु, D5 -सर्गास्तु, T3 -सर्गश्च (for -भेदाश्च) G5 भेदेभ्य (for भूतेभ्य) M3 भूतं भूताश्च भूतेभ्य — d) V2 पुरातन: (for सना°)

20 a) Ds D3 विस्तारावयवं चैव, D6 M4 विस्तरेण मया चैव — b) D3 यथाप्रज्ञा (for °प्रज्ञ) Ś1 K1 2 4 D1 यथाश्रुति, D4 °श्रुतिम्, D6 G2 °विधि (for °श्रुतम्) K3 यथावेदं यथाश्रुतिम् — d) Ś1 K Ñ2 V2 3 D1 2 4 5 M3 सर्वेषां (for पू°)

21 D4 reads $21^{ab}$ on marg — a) D5 G1 3 5 M3 आयुष्य (for शत्रुघ्नं) G4 धन्यं वशस्य माहात्म्यं — b) Ñ3 V1 2 B Dn Ds D3 T1 स्वर्ग्यमायु प्रवर्धनम्; D5 M3 शत्रुघ्नं स्वर्ग (M3 कीर्ति)वर्धनम्, T3 4 M2 स्वर्ग्यमायुष्यव (M2 °षि व)र्धनम् — c) Ñ2 D5 कीर्तितं (for कीर्तनं) T2 G5 स्थिति-, G1 गीत- (for स्थिर-) — d) Ñ1 2 -कर्मिणाम्

22 a) M4 कल्पाय (for कल्याय), M3 कल्प: (for

विष्णुः स्वयंभूर्भगवान्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥ २३
आपो नारा इति प्रोक्ता नाम्ना पूर्वमिति श्रुतिः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥ २४
हिरण्यवर्णमभवत्तदण्डमुदकेशयम् ।
तत्र जज्ञे स्वयं ब्रह्मा स्वयंभूरिति नः श्रुतम् ॥ २५
हिरण्यगर्भो भगवानुषित्वा परिवत्सरम् ।
तदण्डमकरोद्द्वैधं दिवं भुवमथापि च ॥ २६
तयोः शकलयोर्मध्यमाकाशमकरोत्प्रभुः ।
अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दधे ॥ २७
तत्र कालं मनो वाचं कामं क्रोधमथो रतिम् ।
ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन्प्रजापतिम् ॥ २८
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
वसिष्ठं च महातेजाः सोऽसृजत्सप्त मानसान् ॥ २९
सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
नारायणात्मकानां वै सप्तानां ब्रह्मजन्मनाम् ॥ ३०
ततोऽसृजत्पुनर्ब्रह्मा रुद्रं रोषात्मसंभवम् ।
सनत्कुमारं च ऋषिं पूर्वेषामपि पूर्वजम् ॥ ३१

---

कल्य·) Ś1 यस्मात्काल्याय ते काल्य., K Ñ1 3 V B1 2 D T G2 त( K1 3 Ds य )स्मात्कल्पाय ते कल्प. — b) K3 D1 G5 M3 समग्र. D4 सृजते (for शुचये) Ś1 समग्रा· शुचय· शुचेः (sic) — After 22ab, Ś1 K D1 3 4 6 ins.

29* तस्मै हिरण्यगर्भाय पुरुषायेश्वराय च ।
अजाय प्रथमायैव वरिष्ठाय प्रजापते ।
ब्रह्मणे लोकनाथाय गरिष्ठाय स्वयंभुवे ॥

[(L. 1) D1 6 महात्मने (for [ई]श्वराय च) —(L. 2) D3 अग्राय (for अजाय) Ś1 प्रजाभुवे, D1 महात्मने, D6 [ई]श्वराय च (for प्रजापते·) —(L. 3) Ś1 D1 6 -तन्त्राय (for -नाथाय) Ś1 नमस्कृत्य (for गरिष्ठाय) D1 लोकातीताय मानिने, D6 नमस्कृत्य महात्मने (for b).]

D1 cont.

30* प्रणम्य प्रभवे पूर्वं तस्मा अमिततेजसे ।

23 a) K4 Ñ1 2 3 (marg. as in text) V B D (except D6) T3 G2 ततः (for विष्णुः). — d) B2 3 D1 बीजम् (for वीर्यम्) K अथासृजत्, D2 अथाक्षिपत्, G1 महत्सृजत् (for अवासृ°)

24 b) G5 श्रुताः, M3 श्रुतम् (for श्रुतिः) Ś1 Ñ2, 3 V B D (except D6) T2–4 आपो वै नरसूनवः. — c) Ñ B2 3 D2 M4 तत् (for ता) V1 तत्तु (for पूर्वं) D6 G1 2 M1–3 ता यदस्यायनं पूर्वं, T1 G4 5 ताश्च (G4 °सां; G5 °सु) यस्यायनं पूर्वं, G3 corrupt. — d) Ñ3 (marg.) V3 M4 तस्मान् (for तेन)

25 a) G (except G2) हिरण्यमभवत्तस्मात् — c) Ñ2 V2 T3 4 तस्मिञ् (for तत्र) — d) Ñ1 विश्रुतम्, Ñ2 T4 G2 M4 नः श्रुतिः; T2 G1 3–5 विश्रुतः (for नः श्रुतम्).

26 a) Ś1 -वर्णं (for -गर्भो). — c) T G2 3 M3 द्वेधा (for द्वैधं) Ś1 तद्द्विधाण्डं विधायाशु·. — d) G2 दिव्यं (for दिवं). D3 भूमिम् (for भुवम्). Ñ3 V1 Dn1 D5 वा (for च) Ś1 दिव भूमिं च निर्ममे, G4 दिव विश्वमथोऽपि च.

27 a) K1 3 4 ततः (for तयोः) K Ñ V B Dn Ds D1–4 मध्ये, D5 T3, 4 G2 मध्य (for मध्यम्) — b) Ś1 Ñ2 Dn Ds T3 4 असृजत् (for अकरोत्) K2 T2 G1 3 5 विभुः (for प्रभुः). — c) Dn2 वारिप्लवा (for पारि°) Ñ1 उर्वीं (for पृथ्वीं) — d) D3 दिश (for दिशश्) D2 [अ]ष्टौ तथा (for दशधा) Ś1 तथा, Ñ2 [अ]धात् (for दधे)

28 a) Ś1 तत. (for तत्र). — b) Ñ D3 D2 G1 काम- (for कामं). T2 G1 3 4 अतो (for अथो) Ñ1 Ds D1 रति. Ś1 कामक्रोधावथो रते (sic), Ś1 (marg.) कामं क्रोधमथातनोत् — c) Ś1 (sup. lin. as in text) तत्रापां; K1 (also as in text) ब्रह्मरूपां (hypermetric), D3 तद्भूतां (for तद्रूपां). — d) T2–4 G M1, 3, 4 प्रजापतिः.

29 a) K Ñ V B3 Dn Ds D1 4 G2, 4 M1 3 अत्र्यङ्गिरसं; B1 2 अत्रिमङ्गिरसं (hypermetric). — c) Some MSS वशिष्ठं. — d) T1 G (except G3) M ससृजे (for सोऽसृजत्).

30 a) Ś1 K1 [ए]व (for [ए]ते). — b) Ś1 (sup. lin.) K1 D3 पुराणे निश्चयो मत.; D4 °णे निश्चया मता· — c) K3 Ñ2 3 V1 2 B2 D3 4 तु, K4 Ñ1 V3 D1 5 च (for वै). K1 (sup. lin. as in text) 2 नारायणात्मकास्ते वै — d) V1 द्विज- (for ब्रह्म-) D6 G3–5 M3 -योनिनाम्, T2 G1 -योगि°; G2 -वादि° (for जन्म°) Ś1 (sup. lin. as in text) सप्तानां ब्रह्मजात्मताम् (sic), K1 2 °पि ब्रह्मपूजका (K2 °तेजसः).

31 b) Ś1 K3 दोषात्मके (K3 °कं) (for रोषात्मसं-) M4 रुद्रं दोषात्मकं प्रभुम् — c) K4 Ñ3 V B Dn Ds D1–5 T3 4 M3 विभु, Ñ1 D6 T2 G1, 5 M1, 2 4 कृतिं; Ñ2 विभुः; T1 G2 3 मुनिं; G4 गतिं (for ऋषिं). — d) Ñ1 D1, 4, 5 G2 सर्वेषाम् (for पूर्वे°).

32 a) Ś1 (marg.) K2 4 B Dn Ds D1, 3–5 T3 4 सप्तैते जनयन्ति स्म; K1, 3 सप्तस्वेतेषु जायन्ते; Ñ2 सप्तैव ते व्यजा-

सप्त त्वेते प्रजायन्ते प्रजा रुद्रश्च भारत ।
स्कन्दः सनत्कुमारश्च तेजः संक्षिप्य तिष्ठतः ॥ ३२
तेषां सप्त महावंशा दिव्या देवगणान्विताः ।
क्रियावन्तः प्रजावन्तो महर्षिभिरलंकृताः ॥ ३३
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ।
यादांसि च ससर्जादौ पर्जन्यं च ससर्ज ह ॥ ३४
ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ।
साध्यांस्तैरयजन्देवानित्येवमनुशुश्रुमः ॥ ३५
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ।
आपवस्य प्रजासर्गं सृजतो हि प्रजापतेः ॥ ३६
द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स ससृजे विविधाः प्रजाः ।
दिवं च पृथिवीं चैव महिम्ना व्याप्य तिष्ठति ॥ ३७
विराजमसृजद्विष्णुः सोऽसृजत्पुरुषं विराट् ।

यन्त, Ñ3 V D2 सप्तस्वेता अ( Ñ3 °ता· प्र- , D2 °ता व्य )जायन्त, T2 G1 सप्त चेति प्रजायन्ते — $^{b}$) K3 प्रजां ( for प्रजा ) Ś1 ( marg as in text ) K1 4 V2 3 D3 रुद्राश्, Ñ2 रुद्र, Ñ3 V1 B2 G5 रुद्रांश् ( for रुद्रश् ) D4 प्रजा रुद्रेण वै सह — $^{c}$) Ś1 ( *sup lin* as in text ) K1 3 4 D3 अत·, D1 स्वय ( for स्कन्द· ) Ś1 ( *sup lin* as in text ) K1–3 तु ( for च ) — $^{d}$) K1 3 4 D1 3 4 तिष्ठति ( for °त. ) Ś1 तेजः सहृत्य तिष्ठति — T G M4 ins after 32 D6 after $33^{ab}$

31* सनश्च योगतत्त्वज्ञं सनकं च सनन्दनम् ।
एते सप्त समाख्याता ऋषय संशितव्रता ॥

[ ( L 1 ) T1 3 4 G2 4 तत्त्वज्ञ ( for °ज्ञ ) D6 सनन्दयोगतत्त्वज्ञौ ( for $^{a}$ ) D6 G3 सनातनम् ( for सनन्दनम् ) — D6 om line 2 — ( L 2 ) M4 मयाख्याता ( for समा° ) ]

33 $^{a}$) G3 5 समभवन् ( for सप्त महा- ) V1 -तेजा ( for -वशा ) G4 तेषां तेषां सप्त सप्त — $^{b}$) T2 G1 दिव्य-, G4 ( also as in text ) वंशा ( for दिव्या ) V1 B2 D1 3 T2 G5 -गुणान्विता ( for -गणा° ) Ś1 K1–3 दिव्या देवर्षिपूजिता· — After $33^{ab}$, D6 ins 31* — $^{d}$) D3 राजर्षिभिर् ( for मह° )

34 $^{a}$) D2 विद्युत्तोयानि मेघांस्तु — $^{b}$) G4 रोहितेन्द्रायुधानि च — M1–3 read $34^{cd}$ twice — $^{c}$) Ñ1 V B Dn Ds D1 3–5 वयांसि, D2 रक्षांसि ( for यादांसि ) K2 ससर्जादौ च पर्जन्यं, D6 T1 2 G M1–3 ( last three first time ) 4 उल्कानिर्घा( D6 °न्युत्पा )तकेतूंश्च — $^{d}$) K2 वयांसि ( for पर्जन्यं ) T2 तथैव च ( for ससर्ज ह ) Ñ2 3 ( marg ) V1 D2 पर्जन्यममितं ( Ñ3 V1 °पि स ) प्रभु, M1–3 ( all first time ) ससर्जादौ प्रजापति.

35 $^{a}$) Ñ2 सामादि ( for °नि ) — After $35^{ab}$, Ś1 K V2 Dn D3 ( marg ) 4 ins

32* मुखाद्देवानजनयत्पितॄंश्चैशोऽपि वक्षसः ।
प्रजनाच्च मनुष्यान्वै जघनान्निर्ममेऽसुरान् ॥

[ Ś1 transp line 1 and line 2 — ( L 1 ) K3 अजयत ( for अजनयत् ) Ś1 पितॄंश्चैव, K4 D4 पितृवशो ( for पितॄंश्चैशो ) — ( L 2 ) K1 प्रजननान् ( for °नाच्च ) Ś1 सुख ( for ऽसुरान् ) ]

— $^{c}$) V1 B1 G2 4 साध्यास् Ñ2 त्वजनयन् ( for तैरयजन् ) Ś1 V3 B2 3 D2 3 6 साध्यास्तैरजयन्देवान्, K1 Ñ1 V2 Dn D1 4 5 G1 साध्यानजनयद्देवान्, T1 2 G3 M साध्यास्तैरयजन्देवा, T3 साध्यास्ते त्वभवन्देवान्, T4 साध्यास्ते प्रथमं देवा — $^{d}$) K3 Ñ3 V B Dn1 Ds D1 5 T2–4 M1 2 -शुश्रुम ( for °म )

36 $^{a}$) Ñ2 रूपाणि ( for भूतानि ) — $^{b}$) Ś1 चैव; D2 तत्र ( for तस्य ) — After $36^{ab}$, D4 ins

33* ब्रह्माणं हृदय भित्त्वा निश्रितो भगवान्भृगुः ॥
स्तनं तु दक्षिणं भित्त्वा ब्रह्मजेन च विग्रह ।
निश्रितो भगवान्धर्म सर्वलोकसुखावह. ॥
त्रयस्तस्य वरा· पुत्रा. सर्वभूतमनोहरा· ।
कामः शमश्च हर्षश्च तेजसा लोकधारिणः ॥ [5]
कामस्य तु रतिर्भार्या शमस्य प्रीतिरङ्गना ।
नन्दा भार्या च हर्षस्य त्रयो लोका. प्रतिष्ठिता· ॥

— $^{c}$) Ñ2 आदावस्य, Ñ3 ( also as in text ) अप°, T2 G2 आप्लु°, G4 अप्लु° ( for आप° ) D6 प्रजासर्गं., M3 °सर्गं — $^{d}$) K4 D3 च, D1 4 5 तु, G3 ऽपि ( for हि ) D6 प्रजातोऽभूत्प्रजापते. — After 36, Ś1 K Dn D3 ( marg ) 4 G4 M2 ins

34* सृज्यमानाः प्रजा नैव विवर्धन्ते यदा तदा ।

[ Ś1 सृजमाना ( for सृज्य° ) K2 [ए]व, K4 [अ]नेन ( for [ए]व ) ]

37 $^{c}$) K4 Ñ2 D3–5 तस्यां च, Ñ3 V1 2 B1 Ds D2 T2 तस्यां तु, V3 तस्यास्तु, G1 2 तस्यासीत्, G3–5 यस्यां स, M3 तस्मात्सा ( for तस्यां स ) — $^{d}$) K4 Ñ2 V1 2 B Ds D2–5 T3 सोऽसृजद्, G2 स जज्ञे ( for ससृजे ) — $^{e}$) M3 नभश्च ( for दिवं ) D2 5 दिवं चैव तथा भूमिं — $^{f}$) Ś1 विश्वत, K1 धिष्ठित·, K2 4 Ñ1 2 V2 3 ( orig ) B1 3 Dn D5 M4 ति( Ñ1 वि )ष्ठतः, V3 ( *sup lin* ) वेष्टितः; M1 2 विष्ठितः, M3 विश्रुतं ( for तिष्ठति ) D6 महिम्ना प्राप्य तिष्ठतः

38 $^{a}$) D3 विष्णुं, M1–3 ब्रह्मा ( for विष्णुः ) — $^{c}$) K1–3 च ( for तं ) — $^{d}$) K1, 2 4 D3 4 तस्य; T1 2 G1 2 4 तस्मान् ( for तद्वै ). K1 श्रुतम्; G5 बत ( for स्मृतम् ).

पुरुषं तं मनुं विद्धि तद्वै मन्वन्तरं स्मृतम् ।
द्वितीयमापवस्यैतन्मनोरन्तरमुच्यते ॥ ३८
स वैराजः प्रजासर्गं ससर्ज पुरुषः प्रभुः ।
नारायणविसर्गः स प्रजास्तस्याप्ययोनिजाः ॥ ३९
आयुष्मान्कीर्तिमान्धन्यः प्रजावांश्च भवेन्नरः ।
आदिसर्गं विदित्वेमं यथेष्टां प्राप्नुयाद्गतिम् ॥ ४०

इति श्रीहरिवंशे प्रथमोऽध्यायः ॥ १ ॥

# २

वैशंपायन उवाच ।
स सृष्टासु प्रजास्वेवमापवो वै प्रजापतिः ।
लेभे वै पुरुषः पत्नीं शतरूपामयोनिजाम् ॥ १
आपवस्य महिम्ना तु दिवमावृत्य तिष्ठतः ।
धर्मेणैव महाराज शतरूपा व्यजायत ॥ २
सा तु वर्षायुतं तप्त्वा तपः परमदुश्चरम् ।
भर्तारं दीप्ततपसं पुरुषं प्रत्यपद्यत ॥ ३
स वै स्वायंभुवस्तात पुरुषो मनुरुच्यते ।

—$^{c}$) Ñ B2. 3 Ds D1. 2. 5 T2 मानसस्य, D4 मानवस्य, M3 तापसस्य (for आपवस्य). V3 (*sup lin*) B1 G1 द्वितीयं मानसस्यैवं (G1 °व); T1 G2–5 M1. 2. 4 °य तापस नाम.

39 $^{a}$) K3 T2 G वैराजं. K4 परः (for प्रजा-). —$^{b}$) K3 प्रभुम्, B3 परः; D2. 5 विभुः (for प्रभुः). — After 39$^{ab}$, D6 T G M4 ins.:

35* मनुं प्रजापतिं विद्धि ससर्ज प्रभुरीश्वरः ।

— T2 G1 M4 read 39$^{cd}$ twice. —$^{c}$) Ś1 K1. 3 D3 M4 (second time) -विसर्गस्य (M4 °स्थ.); D2 -परः सर्गः; D1 -पराः सर्गाः, T2 G1 (both second time) -निसर्गस्य, M2. 3 -विसर्गाच्च (M3 °न्स) (for °र्गः स). Ñ1 नारायणात्मकः सर्गः, T1. 2 (first time) 4 G1 (first time). 2–4 M4 (first time) प्रजापतेरयं सर्गः. —$^{d}$) D2 तस्याम् (for तस्यापि). T2 G1 (both second time) [अ]योनिजाम्.

40 V3 M4 om. 40$^{ab}$. T G transp. 40$^{ab}$ and 40$^{cd}$. —$^{a}$) K2. 4 Ñ2 D3 भव्यः, T2 G1 धीमान् (for धन्य). —$^{b}$) D6 भविष्यति, M1–3 भवत्युत (for भवेन्नर). K1–3 Dn G3 प्रजावाञ्छ्रुतवांस्तथा. — T G ins. after 40$^{ab}$ M1. 2. 4 after 40:

36* स्थिरवंशश्च भवति मृतः स्वर्गे महीयते ।

—$^{c}$) D2. 4. 5 [ए]नं, T2 G1 [ए]व (for [इ]म). —$^{d}$) K4 B3 M4 यथेष्टं (for °ष्टां). V1 D1. 6 T1. 2 G1–3. 5 M चाप्नुयाद् (for प्रा°). T3 G4 यथेष्टां गतिमाप्नुयात्.

COLOPHON. — *Mention of the Epic*: K1–3 Ñ3 B1 D1 T2. 3 G1. 3–5. — *Mention of Khila*: K Ñ3 V1. 3 B Dn D1. 4. 5 G1. 3. 4 M4. — *Sub-parvan*: B1 Ds आश्चर्यपर्व, T3 माथुर. — *Adhy. name*: Ś1 K4 Ñ3 V B D2. 4. 6 T1. 2 G M आदिसर्गः, K1–3 भूतसर्गः, K4 (also) प्रथमः सर्गः, Ñ2 Ds प्रथमसर्ग. — *Adhy. no.* (figures, words or both): K1 Ñ1. 2 V1 B Dn Ds D4–6 T G M1–3 1. — *Śloka no.*: K1 Dn1 46, K3 43, Ds1 53, D2 51, D4 59; T2 44.

## 2

1 D2 om. the ref. —$^{a}$) Ś1 सु-, K1–3 D3–6 M1–3 सं- (for स). V2 B T1. 2 G3 M3. 4 सृष्ट्वा तु (for सृष्टासु). K4 Ñ3 V1 Ds D2 T3. 4 G1. 2. 4. 5 स सृष्ट्वा तु प्रजास्त्वेवं. —$^{b}$) K1. 4 D1 मानसेन; Ñ1 D6 M1–3 आपवेन, T1 G3. 5 M4 °वेयः, T2 G1 ततो वेदाः, T3. 4 G2. 4 आपवो य (for °वो वै). —$^{d}$) Ś1 शतरूपाभिधानतः.

2 $^{a}$) D3 अथ सा स्व-, G3 आपवेय- (for °वस्य). T2 G5 आपवेयस्य महिम्ना. — T1 G2 om. 2$^{bc}$. —$^{b}$) D2. 3 G5 M3 तिष्ठति (for °तः). —$^{c}$) K1 (*sup. lin.* as in text) D1. 4 अर्धेनैव (D1 °न वै) (for धर्मेणैव). D6 M3 महिम्ना तु (for महाराज). —$^{d}$) D1 [अ]प्यजायत, M3 व्यराजत (for व्यजायत).

3 G4 om. (hapl.) 3$^{a}$–5$^{b}$. Ś1 repeats 3$^{ab}$ after 14$^{ab}$. —$^{a}$) Ś1 (first time) वर्षशतं (for वर्षायुतं). —$^{b}$) K4 Ñ2 D4. 5 -दुष्करम्, B3 -दारुणम् (for -दुश्चरम्). —$^{c}$) Ś1 (*sup. lin.* as in text) कर्तार (for भ°). Ś1 (*sup. lin.*) दीर्घ- (for दीप्त-). V1 D2. 4. 5 T3. 4 -वपुषं; D3 -मनसं (for -तपसं).

4 G4 om. 4 (cf. v. 1. 3). —$^{a}$) D1. 4. 5 राजन्; D2 ब्रह्मा (for तात). — K1 Ñ2 V3 om. (hapl.) 4$^{cd}$. —$^{c}$) T3. 4 [ए]वं (for [ए]क-). —$^{d}$) K4 अथ (for इह).

तस्यैकसप्ततियुगं मन्वन्तरमिहोच्यते ॥ ४
वैराजात्पुरुषाद्वीरं शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ वीरात्काम्या व्यजायत ॥ ५
काम्या नाम महाबाहो कर्दमस्य प्रजापतेः ।
काम्यापुत्राश्च चत्वारः सम्राट् कुक्षिर्विराट् प्रभुः ॥ ६
उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः ।
उत्तानपादाच्चतुरः सूनृता सुषुवे सुतान् ॥ ७
धर्मस्य कन्या सुश्रोणी सूनृता नाम विश्रुता ।
उत्पन्ना वाचि धर्मेण ध्रुवस्य जननी शुभा ॥ ८
ध्रुवं च कीर्तिमन्तं चाप्ययस्मन्तमयस्पतिम् ।
उत्तानपादोऽजनयत्सूनृतायां प्रजापतिः ॥ ९
ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि भारत ।
तपस्तेपे महाराज प्रार्थयन्सुमहद्यशः ॥ १०
तस्मै ब्रह्मा ददौ प्रीतः स्थानमात्मसमं प्रभुः ।
अचलं चैव पुरतः सप्तर्षीणां प्रजापतिः ॥ ११
तस्याभिमानमृद्धिं च महिमानं निरीक्ष्य च ।
देवासुराणामाचार्यः श्लोकमप्युशना जगौ ॥ १२
अहोऽस्य तपसो वीर्यमहो श्रुतमहो व्रतम् ।
यमद्य पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ १३
तस्माच्छ्लिष्टिं च मान्यं च ध्रुवाच्छंभुर्व्यजायत । C 67 B 1 2 14 P 1 2 14

5 G4 om $5^{ab}$ (cf v 1 3) M4 om $5^{a}$–$14^{b}$ —$^{a}$) Ś1 D6 T4 G2 वीराच्, D4 G1 वीरौ (for वीरं) K1 3 द्वौ राजन्पुरुषाद्वीरौ; D1 वैराजपुरुषाद्वीरौ —$^{c}$) K4 Ds1 प्रियवृत्तोत्तानपादौ —$^{d}$) Ś1 वीरौ कन्या, D4 (marg) 6 वीरात्कन्या, T3 अपरा च (for वीरात्काम्या)

6 M4 om 6 (cf v 1 5) —$^{a}$) Ś1 K1–3 महाभागा (for °बाहो). — After $6^{ab}$, T1 2 4 G ins

37* सुता सुतपसा युक्ता महती लोकधारिणी ।

[T1 नु (for सु-) T1 G3 -सारिणी (for -धा°)]

— B3 om $6^{cd}$ —$^{c}$) K4 D6 M1–3 कन्या (for काम्या-) K1–3 Ñ2 V3 B1 Dn Ds2 D2 4 T4 G2 4 तु (for च) —$^{d}$) Ś1 corrupt K3 चक्षुर् (for कुक्षिर्) — K2–4 Ñ2 3 V B1 2 D (D3 marg) T3 4 ins after 6 B3 after $6^{ab}$

38* प्रियव्रतं समासाद्य पतिं साजनयत्सुतान् ।

[K4 Ds1 प्रियवृत्त (for °व्रत) D4 पत्नी (for पतिं) K2–4 B1 Dn D1–6 सुषुवे (for [अ]जनयत्)]

7 M4 om 7 (cf v 1 5) Ś1 om (hapl) $7^{ab}$ —$^{b}$) T2 पुरुमित्रः (for पुत्रमत्रि॰) —$^{c}$) Ś1 K1 D6 T2 G चत्वार॰ (for चतुर॰) —$^{d}$) K1 (*inf lin*) 2 Ñ2 D1 3 5 G2 4 [अ]जनयत् (for सुषुवे) Ś1 प्रासृजदत्र मानसी, K1 सूनृताधत्त मानसी, K3 T G1 3 5 M1–3 °ताधत्त वाङ्मयी

8 M4 om 8 (cf v 1 5) —$^{c}$) T1 G (except G5) या च (for वाचि) K2–4 Ñ2 3 V B D T3 4 उत्पन्ना वाजिमेधेन (D3 °धे तु) —$^{d}$) K1 (marg) 2 पुरा, K3 परा, Ds श्रुता (for शुभा)

9 M4 om 9 (cf v 1 5) —$^{a}$) K4 om the first च —$^{b}$) K1 T1 G2, 3 om [अ]पि K2, 3 Dn शिवं (Dn2 °तं) शान्तम् (for [अ]प्ययस्मन्तम्) K4 Ñ2 3 V B Ds D1 3–5 Cnp आयुष्मन्तं वसुं तथा, Ñ1 D2 T3 4 आयुष्मन्तं महाद्युतिम्, G4 damaged

10 M4 om 10 (cf v 1 5) —$^{b}$) Dn1 om त्रीणि D3 T1 G2 दिव्यानि त्रीणि भारत —$^{c}$) V2 महाभाग (for °राज) —$^{d}$) D6 S (except G4, M4 om) विपुलं (for सुमहद्) D1 प्रार्थयत्सुमहायश

11 M4 om 11 (cf v 1 5) —$^{a}$) K4 ददौ स सु॰, T3 4 ददौ हरि (for ब्रह्मा ददौ) —$^{b}$) V2 विभु, Ds G2 भुवि (for प्रभु) K1–3 Dn स्थानमप्रतिमं भुवि —$^{c}$) Ñ1 अव्यय (for अचलं) T2 G1 पुरुष॰ (for पुरत) —$^{d}$) Ñ1 D2 कुलोद्वह (for प्रजापति)

12 M4 om 12 (cf v 1 5) —$^{a}$) Ś1 K1 3 4 Ñ1 Dn Ds D4 G1 [अ]तिमात्रम्, B1 [अ]तिमानम् (for [अ]भि°) V3 D1 6 T1 2 G2–5 वृद्धि (for ऋद्धिं) Ñ2 3 (marg as in text) D3 तस्याभिमानवृद्धिं च —$^{b}$) T4 च वीक्ष्य (for निरीक्ष्य) —$^{c}$) K1 4 तत्रासुराणाम्, Ñ3 V3 (both marg) M3 दैत्या°, D3 अथा° (for देवा°) —$^{d}$) K2 4 Ñ3 (marg.) B1 2 Ds D2 4 (marg) G4, 5 प्राग्, D1 T3, 4 अत्र; D5 चात्र (for अपि)

13 M4 om 13 (cf v 1 5) —$^{b}$) S1 धैर्यम्, Ñ3 (marg. as in text) श्रमम् (for श्रुतम्) Ś1 श्रुतम्, Ñ1 Dn D6 बलम्, Ñ2 गुणम्, Ñ3 V B D1 2 5 T1 2 G M1–3 ऽद्भुतम्, Ds हुतम् (for व्रतम्) D4 अहोऽस्य तपस॰ श्रुतम्; T3 4 अहोऽस्य श्रुतमद्भुतम् —$^{c}$) Ś1 येनेदं, K1–3 Ñ2 V1 2 D1 4 5 यदेन, K4 यमेन, D3 येनैन (for यमद्य)

14 M4 om $14^{ab}$ (cf v 1 5) —$^{a}$) K1 4 D1 क्लिष्टिं, G4 5 शिष्टं, M1–3 शिष्टिं (for श्लिष्टि) Ñ V2 3 B Ds2 D2 4 5 T3 4 भव्यं (for मान्यं) Ś1 तस्माच्छ्लिष्टिं दशाभ्यां च (sic), Dn °च्छिष्टं च धन्यं च, Ds1 °त्क्लिष्टिं च

श्लिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ।
रिपुं रिपुंजयं विप्रं वृकलं वृकतेजसम् ॥ १४
रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ।
अजीजनत्पुष्करिण्यां वैरण्यां चाक्षुषो मनुम् ॥ १५
प्रजापतेरात्मजायां वीरणस्य महात्मनः ।
मनोरजायन्त दश नड्वलायां महौजसः ।
कन्यायां भरतश्रेष्ठ वैराजस्य प्रजापतेः ॥ १६
ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवित्कविः ।
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेति ते नव ।
अभिमन्युश्च दशमो नड्वलायां महौजसः ॥ १७
ऊरोरजनयत्पुत्रान्पडाग्नेयी महाप्रभान् ।
अङ्गं सुमनसं स्वातिं क्रतुमाङ्गिरसं शिवम् ॥ १८
अङ्गात्सुनीथापत्यं वै वेनमेकं व्यजायत ।
अपचारेण वेनस्य प्रकोपः सुमहानभूत् ॥ १९
प्रजार्थमृषयोऽथास्य ममन्थुर्दक्षिणं करम् ।
वेनस्य पाणौ मथिते संबभूव महानृषिः ॥ २०

---

मन्युं च ; T2 °च्छिष्टिश्च धन्यश्च, G1 2 °त्सृष्टिश्च धर्म्य( G2 मान्य )श्च, G3 °च्छिष्टश्च मान्यश्च — $^{b}$) Ñ2 भव्याच्, D1 भार्या ( for ध्रुवाच् ) — After $14^{ab}$, Ś1 repeats $3^{ab}$ — $^{c}$) Ś1 श्रुष्टेर्, K4 V2 D2 सृष्टेर्, T1 2 G1 3–5 M1–3 शिष्टेर् ( for श्लिष्टेर् ) — K2 D2 ins after $14^{cd}$ K3 D1 after 14

39* प्राचीनगर्भं वृकातिं वृकलं वृकतेजसम् ।
पत्नी प्राचीनगर्भस्य सूनृता सुषुवे नृप ।
नाम्नोदारधियं पुत्रमिन्द्रो यः पूर्वजन्मनि ॥
उदारधीः सुतं भद्राजनयद्वै दिवंजयम् ।
रिपुं रिपुंजयं जज्ञे वराङ्गी सा दिवंजयात् ॥ [5]

[ D1 om ( hapl ) line 1 — ( L 4 ) K3 D2 उद्धेस्तु ( D2 °श्च ) ( for उदारधी ) ]

— K2 om ( hapl ) $14^{ef}$ — $^{e}$) Ñ3 V1 3 क्षिप्रं, Ñ3 ( marg ) D4 T1 M2 3 वृत्रं, V2 Dn पुण्यं ; D5 M1 पुत्रं, T3 वीरं ( for विप्रं ) Ñ2 रिपुं विश्वंजयं वृत्रं, D6 T2 G1–3 5 M4 रिपुंजयं रिपुं वृ( D6 G2 5 पु )त्रं, G4 पुरंजय रिपुं वृत्रं

15 Ñ1 M8 om ( hapl ) $15^{ab}$. — $^{a}$) T1 पृथिवी, T2 धहती ; G8 महती ( for बृहती ) — $^{b}$) K1 D1 सूर्य- ; M1. 2 सम- ( for सर्व- ). — $^{c}$) T2 G1 5 पुष्करण्यां — $^{d}$) Ś1 वारुण्यां ; K2–4 Ñ2. 3 V1 3 B1 D3–5 M3 4 वीरिण्यां, Ñ1 B2 3 Dn Ds D1 T3 4 G5 वीरण्यां, D2 G2 M1 2 वैरिण्यां, D6 T2 वैरणं ; T1 G4 वीरणं ; G1 वैरिणं ( for वैरण्या ) K3 om. चाक्षुषो मनुम् K1 D1 3 4 6 T1 2 M3 4 मनुः ( for मनुम् ). V2 वैरिण्या च महाप्रभुः

16 $^{a}$) M4 च जायायां ( for आत्मजायां ) — $^{b}$) Ś1 वारुण्यस्य, K4 D3 वरुणस्य ; Ñ V B Dn1 D3 ( *sup lin* ) 4 T1 4 G2 4 M3 अरण्यस्य, D2 5 वीरण्यस्य, D6 T2 G1 5 वैरणस्य ; G8 वैरि° ( for वीर° ). K1 अनरण्यस्य धीमतः — K3 reads $16^{c}$–$18^{a}$ twice. — $^{c}$) D3 G1 नव ( for दश ). — $^{d}$) V8 व्यजायत ; T4 महात्मनः ( for महौजसः ). Ds1 नड्वलायां महौजसम् — $^{e}$) T1 G4 M3. 4 भारत- ( for भ° ) Bom and Poona eds कन्यायामभवञ्श्रेष्ठा — $^{f}$) K3 ( also as in text ) Ds वीरणस्य, M3 रोहितस्य ( for वैराजस्य )

17 For the repetition in K3, cf v l 16 — $^{a}$) K1 कुरु, G4 पुरुः ( for ऊरुः ) — $^{b}$) K1 D1 सत्यजित, K1 ( *sup lin* ) V B2 3 Ds2 T4 °वाक्, K2 4 Ñ2 3 B1 Dn Ds1 D2 5 T3 °वान् ( for °वित् ) K3 ( both times ) D6 G4 M4 तपस्वी सत्यविक्रम , D3 4 °स्वी सत्यवाक्शुचि — $^{c}$) K3 ( both times ) अग्निध्रश्च, K3 ( also ) वाक्पतिर्, T1 2 G3–5 M3 4 अनुष्टुप्च ( for अग्निष्टुद् ) M1 ° अन्वरात्रश् ( for अति° ) Ñ2 3 अग्निष्टुरतिरात्र च ( Ñ3 °त्रिश्च ), D6 G1 2 अनुष्टुप्चातिरुद्र( G1 °रात्र )श्च — $^{d}$) K1 D4 प्रद्युम्नश् ( for सु° ) Ś1 वै ; Cal ed [अ]मी ( for ते ) G1 3 5 ऽनघ ( for नव ) — $^{f}$) Ñ3 ( marg ) D1 3–5 प्रजापतिः, T3 महात्मनः ( for महौजसः )

18 For the repetition in K3, cf v l 16 — $^{a}$) K1 कुरोर्, G4 पुरोर् ( for ऊरोर् ). — $^{b}$) K4 महाव्रतान्, D3 °त्मनः, D4 °तपाः ; M1 2 °प्रभा ; Cnp महौजसः ( for महाप्रभान् ) — $^{c}$) V2 ( marg ) D5 6 G2 4 ख्यातिं ; M3 स्वातीं ( for स्वातिं ). — $^{d}$) K1–3 D5 Cnp शिबिम् ; K4 Ñ2. 3 V B Dn Ds D1. 2 3 ( *sup lin* ) 4 6 T3 4 गयम्, Ñ1 शुभम् ; D3 नयम् ( for शिवम् )

19 $^{a}$) Ś1 K1 ( *sup lin.* as in text ) T1 G2 4 M1 2 मर्त्या वै, K3 M3 मान्या वै, K4 कन्या च, Ñ3 ( marg as in text ) B1 2 ( marg as in text ) कन्या वै ; D2 चापत्य ; T2 वत्सं वै ( for [अ]पत्यं वै ) Cal ed अङ्गः सुनीथकन्याया — G2 4 om $19^{b}$–$20^{c}$ — $^{b}$) Some Mss वेणम् ( for वेनम् ) G1 एनं ( for एकं ). Ś1 K1–3 Dn D1 T3 4 G3 अजायत ( for व्यजा° ) — $^{c}$) K1–3 Dn T1 3 अपचारात्तु ; D3 दुराचारेण ( for अप° ) Some Mss. वेणस्य ( for वेनस्य ).

20 G2 4 om $20^{abc}$ ( cf. v. l. 19 ). — $^{a}$) V3 प्रजार्थे ; Ds पुत्रार्थम् ( for प्रजा° ). Ś1 चास्य ; K1 3 V3 B1 Dn Ds D6 T1. 2 G1 M1 यस्य ; K4 ऽप्यस्य ; D8 T3. 4 तस्य ( for

तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः ।
करिष्यति महातेजा यशश्च प्राप्स्यते महत् ॥ २१
स धन्वी कवची जातस्तेजसा निर्दहन्निव ।
पृथुर्वैन्यस्तदा चेमां ररक्ष क्षत्रपूर्वजः ॥ २२
राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः ।
तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ ॥ २३
तेनेयं गौर्महाराज दुग्धा सस्यानि भारत ।
प्रजानां वृत्तिकामेन देवैः सर्षिगणैः सह ॥ २४
पितृभिर्दानवैश्चैव गन्धर्वैः साप्सरोगणैः ।
सर्पैः पुण्यजनैश्चैव वीरुद्भिः पर्वतैस्तथा ॥ २५
तेषु तेषु च पात्रेषु दुह्यमाना वसुंधरा ।
प्रादाद्यथेप्सितं क्षीरं तेन प्राणानधारयन् ॥ २६
पृथुपुत्रौ तु धर्मज्ञौ जज्ञातेऽन्तर्धिपालिनौ ।
शिखण्डिनी हविर्धानमन्तर्धानाद्व्यजायत ॥ २७
हविर्धानात्षडाग्नेयी धिषणाजनयत्सुतान् ।
प्राचीनबर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ ॥ २८
प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः ।
हविर्धानान्महाराज येन संवर्धिताः प्रजाः ॥ २९ C 84 B I 2 30 P I 2 30

---

ऽथास्य ) — $^{c}$) Some Mss त्रेणस्य ( for वेनस्य ) K2 Ñ2 V2 B1 2 T1 4 M3 वेनस्य मथिते पाणौ — $^{d}$) Ś1 Ñ2 D1 2 5 महानृप., V3 °मुनि., D4 T4 °न्पृथु ( for °नृषि. ) K1 3 Dn बभूव मुनिभिः पृथु

21 $^{a}$) G2 4 तद् ( for तं ) K1–3 D1 T1 ऋषय. ( for मुनयः ) B2 3 प्रोचुर्, D3 आहु , D5 सर्वे ( for प्राहुर् ) — $^{b}$) D3 सर्वा; D5 प्राहुर्, D6 एवं ( for एष ) Ś1 वै मोदिताः, D2 वो मुदिताः, T2 G1 2 4 5 वो वृत्तिद , G3 वै वृत्तिदः ( for वै मुदिता. ) — Ś1 T1 G4 M om $21^{cd}$ — $^{c}$) Ñ1 3 V1 3 च ( V3 [इ]ति ) धर्मात्मा ( for महातेजा ) — $^{d}$) D1 T2 G3 संप्राप्स्यते, G1 संप्राप्य वै, G5 स प्राप्स्यते ( for च प्रा° ) K2 D2 5 महान् ( for महत् )

22 D6 T1 2 G repeat $22^{a}$ after 22 — $^{a}$) K4 G3 ( first time ) खड्गी, D6 T1, 2 G ( all second time ) चैव ( for जातस् ) — T4 om $22^{bc}$ D6 T1 2 G repeat $22^{b}$ after 40* — $^{b}$) Ñ2 3 V1 3 B Ds D2 कराज्ज्व( D2 कालज्व )लनसंनिभः — M4 om $22^{cd}$ — $^{c}$) V1 Ds1 D2 5 वैण्यस् ( for वैन्यस् ) Ñ2 3 V Ds D4 T2 G ( except G4 ) तथा ( for तदा ) Ś1 D6 पृथ्वीं, V2 D2 4 धीमान्, D3 गां वै ( for चेमां ) — $^{d}$) D3 धीमान्स ( for ररक्ष ) G4 -पूर्वक ( for °जः ) D1 ररक्ष वसुधां नृप, T3 4 °क्ष च वसुंधराम् — D6 T1 2 G ins after the repetition of $22^{a}$ T4 after $22^{a}$

40* बद्धगोधाङ्गुलित्रवान् ।
प्रजारक्षाकृतोत्साह.
[ ( L 1 ) T4 G4 खड्ग- ( for बद्ध- ) ]

23 $^{b}$) D5 T2 G1, 5 मान्य· ( for आद्यः ) Ñ2 3 ( marg ) V1 D1 3 4 आद्यः स पृथिवीपति. — $^{c}$) D1 2 M4 तस्माद् ; D4 तस्मिन् ( for तस्माच्च ). D6 [ए]तौ, T2 G1 [ए]वं ( for [ए]व ). — $^{d}$) K4 नहुषौ, Cal ed विपुलौ ( for निपुणौ )

24 $^{a}$) V2 महाभाग ( for °राज ) — $^{b}$) D5 सर्व- ( for दुग्धा ) Ñ2 शस्यानि ( for स° ) G4 दुग्धान्यन्नानि भारत — $^{c}$) Ś1 हित- ( for वृत्ति- ) D6 S ( except T3 M3 ) -कामाना ( for -कामेन ) — $^{d}$) K1 ब्रह्मगणै , K3 Ñ2 Dn D3–5 ऋषि° ( for सर्षि° ) D2 देवैर्महर्षिभिस्तथा

25 $^{a}$) M1 2 विश्वैर् ( for चैव ) — $^{b}$) D3 T1 G5 M3 4 अप्सरोगणै , D2 4 चाप्स° ( for साप्स° ) K4 V2 D3 गन्धर्वाप्सरसां गणै — $^{c}$) T2–4 G1 4 साध्यै· ( for सर्पै. ) D6 T1 2 G ( except G4 ) M1 2 4 [अ]पि ( for [ए]व )

26 $^{a}$) Ñ1 3 V1 B3 T2 G1 3 5 M1–3 तु , D6 om ( for च ) — $^{b}$) D4 ( marg as in text ) दुग्धमाना ( for दुह्य° ) — $^{c}$) T4 यस्येप्सितं ( for यथे° ) — $^{d}$) B2 येन ( for तेन ) K2 प्राणम् ( for प्राणान् ) K3 V3 T4 G1 M3 अधारयत् ( for °यन् )

27 $^{a}$) Ñ2 D3 6 T1 2 G5 M1–3 पृथो· ( for पृथु- ) K2 सु , D6 च ( for तु ) K4 Ñ1 3 V B D2 4 पृथोस्तु ( B2 °श्च ) पुत्रौ धर्मज्ञौ, D1 5 पृथो सुपुत्रौ ध°, G2 M4 पृथोरेवास्य ( M4 °व तु ) ध° — $^{b}$) Ś1 T1 G3 5 M1 -सादिनौ, K1 3 -पायनौ; K2 Ñ1 Dn -पालितौ, B3 D1 ( marg ) -पादिनौ; D4 -पावतौ ( sic ), D4 ( marg ) पाजिनौ, T3 4 -यायिनौ, G2 -सादितौ, G4 -शान्दिनौ ( sic ) ( for पालिनौ ) — $^{c}$) G1 हविर्भानम् ( for °र्धानम् ) — $^{d}$) D1 अजायत ( for व्य° )

28 $^{b}$) Ś1 वृषेण ( for धिषणा ) — After $28^{ab}$, Ś1 ins an addl colophon with mention of Epic, followed by श्रीवैशंपायन· — $^{d}$) M3 गजं ( for गयं ) D6 कृष्णौ ( for कृष्णं ) Ś1 प्रजाविनौ, Ñ2 B1 प्रजाजिनौ; Ñ3 V1 3 गजा°; T1 व्रतानिनौ, G2 4 व्रताजिनौ, M वृका° ( for व्रजा° ) T2 गयं कृष्णवृकाजिनौ, G1 जयं कृष्णवृकाजितौ

29 $^{b}$) G4 आसीद्राजा ( for महानासीत् ) — $^{c}$) D2 M1, 4 हविर्धानिर्; G2 °र्धानं ( for °र्धानान् ).

प्राचीनाग्राः कुशास्तस्य पृथिव्यां जनमेजय ।
प्राचीनबर्हेरभवन्पृथिवीतलचारिणः ॥ ३०
समुद्रतनयायां तु कृतदारोऽभवत्प्रभुः ।
महतस्तपसः पारे सवर्णायां महीपतिः ॥ ३१
सवर्णाधत्त सामुद्री दश प्राचीनबर्हिषः ।
सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥ ३२
अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः ।
दश वर्षसहस्राणि समुद्रसलिलेशयाः ॥ ३३
तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहः ।
अरक्ष्यमाणामावव्रुर्बभूवाथ प्रजाक्षयः ॥ ३४
नाशकन्मारुतो वातुं वृतं खमभवद्द्रुमैः ।
दश वर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥ ३५
तदुपश्रुत्य तपसा युक्ताः सर्वे प्रचेतसः ।
मुखेभ्यो वायुमग्निं च तेऽसृजञ्जातमन्यवः ॥ ३६
उन्मूलानथ वृक्षांस्तान्कृत्वा वायुरशोषयत् ।
तानग्निरदहद्घोर एवमासीद्द्रुमक्षयः ॥ ३७
द्रुमक्षयमथो बुद्ध्वा किंचिच्छिष्टेषु शाखिषु ।
उपगम्याब्रवीदेतान्राजा सोमः प्रतापवान् ॥ ३८
कोपं यच्छत राजानः सर्वे प्राचीनबर्हिषः ।
वृक्षशून्या कृता पृथ्वी शाम्येतामग्निमारुतौ ॥ ३९
रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी ।
भविष्यं जानता तात धृता गर्भेण वै मया ॥ ४०

---

30 $^{c}$) All Mss (except Ś1) -बार्हिर् (for -बर्हेर्) K2 4 Ñ V B D T G M3 भगवान्, M4 अभवत् (for अभवन्) —$^{d}$) D6 T1 G2 4 M1–3 -तलमास्थित ; T2 G1 3 5 °माहितः, T3 4 °माश्रित. (for °चारिण) M4 पृथिव्यां तेन विश्रुत.

31 $^{c}$) K1 2 Ñ2 तमस (for तपस.) —$^{d}$) B3 सुवर्णायां (for स°) Ś1 K1, 2 T1 2 4 M1 4 महीपते, Ñ2, 3 V1 3 B2 3 Ds D4 T3 M2 3 प्रजापति· (for मही°)

32 $^{a}$) K3 समुद्रा (for सवर्णा). D3 सा पुत्रान्, D4 M4 सामुद्रा (for °द्री) T1 सवर्णायां तु सामुद्री —After $32^{ab}$, T1 2 G1, 3 4 ins

41* पुत्रान्वै जनयामास सर्वलोकाभिपूजितान् ।

—$^{c}$) K2 Ñ3 V3 B3 Ds D1 6 T1 G1 3 5 M4 सर्वान् (for सर्वे) G2 4 सर्वान्प्राचेतसो नाम —$^{d}$) K2 Ñ3 V3 B1 3 Ds D1 6 T2 G M4 पारगान् (for °गा·)

33 $^{a}$) K1 3 -कर्माणस् (for -चरणास्) D3 अकर्मक- (marg. °पृथक्क )मैकरणास् —$^{b}$) K2 ऽतप्यंस्तु ; Ñ2 ऽतप्यन्त च (hypermetric) (for ऽतप्यन्त) — T2 om (hapl) $33^{c}$–$35^{b}$.

34 T2 om. 34 (cf v l 33) —$^{b}$) K3 D5 प्राचेतःसु (for प्र°) —$^{c}$) Some Mss अरक्षमाणाम् Ñ1 अरक्ष्यमाणायां तस्यां, D5 T3, 4 °णा ववृधुर् —$^{d}$) M3 जनक्षय. (for प्रजा°) — After 34, Ñ2 V B2 Ds D3–5 ins ·

42* प्रत्याहृताः प्रजा. सर्वाश्चाक्षुषस्यान्तरे मनो. ।

[ V3 प्रत्याहिता. (for °हृताः). Ds1 D4 प्रजाचाराश्; D5 प्र जाश्चासश् (for प्रजाः सर्वाश्)·]

35 T2 om $35^{ab}$ (cf v l 33) —$^{a}$) D1 [अ]शक्नोन् (for °कन्) Ś1 K4 D3 मरुतो —$^{b}$) D3 व्याप्त (for वृत) —$^{d}$) B1 पालितुं (for चेष्टितुं)

36 $^{a}$) T3 उपस्मृत्य (for °श्रुत्य) Ś1 अथ संश्रुत्य तपसा. —$^{b}$) D6 T2 G1–3 5 M4 एते (for सर्वे) — For $36^{ab}$, Ñ1 subst

43* प्राचेतसमुपस्तव्य तपसः सर्वपर्वतैः ।

—$^{d}$) K4 D1 3 ससर्जुर्, Ñ1 D4 असृजञ् ; Ñ2, 3 V B Ds D2 5 ससृजुर् (for तेऽसृजञ्)

37 $^{a}$) T1 उन्मूलम् (for °लान्) K1–3 Ñ1, 3 Dn D2 तान्कृत्वा, Ñ2 B1 D1 3–5 T4 तान्वृक्षान् (by transp) —$^{b}$) K1–3 Ñ1 Dn T3 वृक्षान् (for कृत्वा). —$^{c}$) Ñ1 V3 D6 T2 घोरम् ; Ds1 वीर (for घोर). —$^{d}$) V3 प्रजाक्षयः (for द्रुम°).

38 $^{a}$) D1 T3, 4 G1 दृष्ट्वा (for बुद्ध्वा). —$^{b}$) K3 Ñ3 V1, 3 D1 6 T1 G1–3 M4 शेषेषु (for शिष्टेषु). —$^{c}$) Ds उपागत्य (for उपगम्य) Ñ1 M1, 2 एनान् (for एतान्). —$^{d}$) Ñ3 V B2 (marg as in text), 3 Ds अथ (for राजा) K4 Ñ V B Dn Ds D1–4 5 (marg) T3 4 M3 प्रजापतीन् ; D5 6 G2 5 M1 2, 4 प्रजापति. ; T1, 2 G4 प्रचेतसः (for प्रतापवान्).

39 $^{a}$) Ñ3 V1 क्रोधं (for कोपं) —$^{c}$) Ś1 K1 3 G2 वृक्षाः शून्ये (G2 °न्या) जनिष्यन्ति ; Ñ2 3 V1 Ds D1, 3 4 T2–4 G1, 3–5 वृक्षाः कन्यां प्रदास्यन्ति ; M वृक्षाः कन्यां प्रयच्छन्ति. —$^{d}$) K1 Ñ1, 2 T2 G1, 3, 4 M3 शाम्यताम् (for शाम्ये°).

40 $^{a}$) Ś1 (*sup lin.* as in text) न ; B2 हि (for च). V3 [ए]षा (for [इ]यं). —$^{c}$) K4 Ñ3 (marg.) V2 B Dn

मारिषा नाम नाम्नैषा वृक्षाणामिति निर्मिता ।
भार्या वोऽस्तु महाभागा सोमवंशविवर्धिनी ॥ ४१
युष्माकं तेजसोऽर्धेन मम चार्धेन तेजसः ।
अस्यामुत्पत्स्यते विद्वान्दक्षो नाम प्रजापतिः ॥ ४२
स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै ।
अग्निनाग्निसमो भूयः प्रजाः संवर्धयिष्यति ॥ ४३
ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ।
संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम् ॥ ४४
दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ।
दक्षो जज्ञे महातेजाः सोमस्यांशेन भारत ॥ ४५
पुत्रानुत्पादयामास सोमवंशविवर्धनान् ।
अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः ॥ ४६
स सृष्ट्वा मनसा दक्षः पश्चादसृजत स्त्रियः ।
ददौ स दश धर्माय कश्यपाय त्रयोदश ।
शिष्टाः सोमाय राज्ञे तु नक्षत्राख्या ददौ प्रभुः ॥ ४७
तासु देवाः खगा गावो नागा दितिजदानवाः ।
गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः ॥ ४८
ततःप्रभृति राजेन्द्र प्रजा मैथुनसंभवाः ।

C 105
B 1 2 50
P 1 2 50

D3 T1 G3 4 तत्त्वं, D1 चाथ, G1 तेन, M1 2 सा तु ( for तात ) T2 भविष्यते न तातेन ( sic ), M4 भविष्यता महाप्राज्ञि ( sic ) — d ) D6 ध्रुवा ( for धृता ) T3 4 मया गोभिर्विवर्धिता

41 a ) K1 3 Dn D2 3 कन्येयं, Ñ1 2 V3 B Ds कन्यैषा, D6 T1 2 G1–4 M मा रोषो, G5 दारार्थो ( for नाम्नैषा ) Ś1 मार्षाणामथ मार्षेण — b ) G5 निर्मितम् D3 वृक्षाणां मद्विनिर्मिता — c ) D2 5 [अ]स्तु वो ( by transp ) — d ) D4 5 T1 G1 5 M1 2 -विवर्धनी, T2 G2 M3 °र्धना ( for °र्धिनी ) Dn सोमवंशस्य वर्धिनी

42 D4 repeats $42^{ab}$ after $43^{ab}$ — a ) D4 ( second time ) तेजसोऽशेन ( for °सोऽर्धेन ) — b ) Ñ1 D4 ( second time ) 6 T2 G1–3 5 M4 [अं]शेन ( for [अ]र्धेन ) Ñ1 D2 3 5 तेजसा Ś1 सोमस्यांशेन तेजसा, T1 ममांशेन च तेजसा — c ) V3 G3 5 M1 उत्पद्यते ( for °त्स्यते ) K1–3 B2 ( marg as in text ) 3 Dn Ds D2 3 G2 पुत्रो, V2 3 धीमान् ( for विद्वान् )

43 T3 om ( hapl ) $43^{a}$–$45^{b}$ — a ) V3 Ds2 D6 T1 4 G2 4 य ( for स ) G1 धीमान् ( for इमां ) D6 देव- ( for दग्ध- ) D3 सर्वं दग्धमभूद्राष्ट्रं, T2 स धीमान्दमभूयिष्ठां, M4 सद्रुमा दग्धभूयिष्ठा — b ) Ś1 T1 युष्मत्तेजोबलेन वै — After $43^{ab}$, D4 repeats $42^{ab}$ — c ) B3 Ds D1 2 4 T4 भूत्वा ( for भूय. ) — d ) K2 G4 प्रजा, T4 भूय. ( for प्रजा )

44 T3 om 44 ( cf v 1 43 ) — a ) T2 G1 वचनं ( for °नाज् ) — c ) Ś1 K1 3 Ñ1 2 Dn2 D1 4 5 संगृह्य ( for संहृत्य ) D3 संगृह्य कोप वृक्षेषु — d ) Ś1 K1 Ñ2 D1 6 M3 पत्नी- ( for पत्नीं ) — After 44, N ( except Ś1 Ñ2 D6 ) T4 G2 ins.

44* मारिषायां ततस्ते वै मनसा गर्भमादधुः ।

[ Ñ3 ( marg ) V1 तु ते सर्वे, Dn D3 ततस्ते तु ( for °स्ते वै ) ]

45 T3 om. $45^{ab}$ ( cf v. l. 43 ) — a ) K1 च ( for तु ). — b ) Ś1 K1 मार्षायां तु ( for मारिषायां )

46 Ś1 K1 Ñ1 D1 4 M5 om $46^{ab}$ Ds D5 transp $46^{ab}$ and $46^{cd}$ — b ) K4 -विवर्धन, D3 -प्रवर्धनान् ( for -वि° ) — c ) T2 स ( for the first च ) G1 अचेता स्थावरांश्चैव, G3 स चरान्स्थावरा° — d ) D3 द्विपदांश्च ( for °दोऽथ ) Ñ1 2 V3 Ds D1–3 , चतुष्पदान् ( for °ष्पद )

47 a ) V3 T1 3 4 G2–4 दृष्ट्वा ( for सृष्ट्वा ) — b ) Ś1 K1–3 Ñ V2 3 Dn1 D3 G2 4 अप्यसृजत् ( for असृजत ) Ds T G1 3 5 M पञ्चाशदसृजत्स्त्रियः ❀ Cs अत्र दक्षस्य पञ्चाशत्कन्याकथनमन्यत्र षष्टिकन्याकथन सर्गान्तरत्वादविरुद्धम् । ❀ — After $47^{ab}$, V2 ins

45* तदा प्रजाविवृद्ध्यर्थं महातेजाः प्रजापति ।

— c ) D3 प्रादात् ( for ददौ ) K1 G3 M1–3 दश स ( by transp ), V2 दश च K4 धर्मात्मा ( for °य ) — d ) Some Mss काश्यपाय — e ) G1 M4 सृष्टा. ( for शिष्टा ) Ś1 K4 राज्ञे च, K1 2 B1 Dn T3 4 G4 5 राज्ञेऽथ ; Ñ2 3 D3 राजेन्द्र ( for राज्ञे तु ) Ñ3 V2 3 B2 ( marg as in text ) 3 Ds D2 सप्त( Ds D2 °प्ता )विंशति सोमाय — f ) Ś1 नक्षत्राणि ( for °त्राख्या ) D6 T1 G1–3 5 M1 2 4 विभु ( for प्रभु. ) G4 ददौ दक्ष स वै प्रभु.

48 a ) T2 G1 वसुदेवाः, M1 तासु यक्षा. ( for तासु देवा ) K1 2 Ñ3 V1 T3 खगा नागा, Ñ2 V3 D4 T4 च नागाश्च ( for खगा गावो ) D1 तेभ्यो देवाश्च नार्यश्च — b ) K1 2 Ñ2 3 V1 3 D1 4 T3 4 गावो ( for नागा ) M2 3 -मानवा ( for -दा° ) — c ) T2 G1 गन्धर्वाप्सरसां चैव — d ) Ñ1 ऽन्याः स्व-, M3 चाश्व- ( for ऽन्याश्च ) T2 भूतय· ( for जा° )

49 T1 partly damaged — a ) T3 तदा- ( for तत - ) — d ) K4 Ñ2 B Ds D2 पूर्वेषां प्रोच्य( Ñ2 जाय- ; B3 सृज्य )-ते प्रजा., Ñ3 V2 3 D1 3 5 6 T1 2 G M3 4 °षामुच्यते प्रजाः ; Ñ3 ( marg ) V1 T3 4 M1 2 °षामभवन्प्रजाः

संकल्पाद्दर्शनात्स्पर्शात्पूर्वेषां सृष्टिरुच्यते ॥ ४९

**जनमेजय उवाच ।**

देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
संभवः कथितः पूर्वं दक्षस्य च महात्मनः ॥ ५०

अङ्गुष्ठाद्ब्रह्मणो जातो दक्षः प्रोक्तस्त्वयानघ ।
कथं प्राचेतसत्वं स पुनर्लेभे महातपाः ॥ ५१

एतं मे संशयं विप्र व्याख्यातुं त्वमिहार्हसि ।
दौहित्रश्चैव सोमस्य कथं श्वशुरतां गतः ॥ ५२

**वैशंपायन उवाच ।**

उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु भारत ।
ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये जनाः ॥ ५३

युगे युगे भवन्त्येते सर्वे दक्षादयो नृप ।
पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ॥ ५४

ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीज्जनाधिप ।
तप एव गरीयोऽभूत्प्रभावश्चैव कारणम् ॥ ५५

इमां हि सृष्टिं दक्षस्य यो विद्यात्सचराचरम् ।
प्रजावानायुरुत्तीर्णः स्वर्गलोके महीयते ॥ ५६

इति श्रीहरिवंशे द्वितीयोऽध्यायः ॥ २ ॥

---

50 T2 om the ref — c) T3 4 सर्वो (for पूर्वं)

51 a) Ñ3 V1 दाक्षिणाज् (for ब्रह्मणो) — b) Dn प्रोक्तस् (for चो°) K3 Ñ2 3 V B2 3 Ds D2 4 5 तदा (V2 3 D2 °था) त्वया, D6 T1 2 G1-3 5 M1 3 4 त्वया पुरा; M2 त्वया तदा (for त्वयानघ) Ñ1 G4 दक्षः प्रोक्तस्त्वया तदा (G4 पुरा); D1 T3, 4 दक्षः प्रोक्तः पुरा त्वया, D3 प्रोक्तो दक्षस्तदा त्वया — After 51ab, N (except Ś1 Ñ1) T2 4 G M4 ins

46* वामाङ्गुष्ठात्तथा चैव तस्य पत्नी व्यजायत ।

[D4 ततश्, D5 तदा (for तथा). D3 पत्नी, M4 चोमा (for चैव) V2 D1, 2 पत्नी तस्य (by transp), M4 भवपत्नी D3 तस्य चैव प्रजायते (for b).]

— c) Ś1 D5 हि; Ñ1 V2 3 Dn1 D1, 2 च, Ñ2 3 V1 B1 D3-5 तु (for स) — d) M3 महायशाः (for °तपाः).

52 a) Ś1 T2 एवं, V3 तत्तन् (for एतं) T1 एवंविध (for मे संशयं) — b) T1 G आख्यातुं, M4 छेत्तुं वै (for व्याख्यातुं) Ś1 आख्यातु वै त्वमर्हसि, K1-3 Dn सम्यगाख्यातुम°; V2 प्रत्याख्यातुं त्वम° — c) T2 G1 एव (for चैव) — d) K4 ईश्वरतां (for श्वशु°)

53 a) D6 विनाशश्, T1 2 G1-3 5 M4 विपत्तिश् (for निरोधश्) Ñ1 तु (for the second च) — b) D6 नित्यं (for नित्यौ) K1 4 T3, 4 G4 पार्थिव (for भारत) Ś1 K3 Ñ V B Dn Ds D2-5 नित्यं (D3 स्थितो) भूतेषु पार्थिव; M3 नित्यो भूतेषु पञ्चसु — c) Ś1 ऽप्यत्र, D3 ऽत्र वि-, G3 नात्र (by transp) M3 मुह्यन्ते — d) B1 2 D3 5 ये नराः, M4 मानवाः (for ये जनाः) K1-3 Dn D1 विद्वांसश्चैव ये जनाः ❀ Cn भूतेषु पश्वादिषु उत्पत्तिर्निरोधः स्वाभाविकी । सापिण्ड्यनियमं विना प्रजोत्पादनं स्वाभाविकम् । तथा मनुष्येषु निरोधो नित्यः, असपिण्डां समुद्वहेदिति नियमः स्वाभाविकः । यद्यप्येवम्, तथाप्यत्र ऋषयः 'प्रजापतिर्वै स्वां दुहितरमभ्यधावत्' इत्यादिश्रुतिदर्शिनो विद्वांसश्च सापिण्ड्यशास्त्रस्य अनित्याङ्गमिवाचरणार्थत्वं जानाना न मुह्यन्ति । विश्वसृजां कार्यगौरवात् सापिण्ड्यशास्त्रस्याधुनिकस्योल्लङ्घने न दोष इत्यर्थः ॥ ❀

54 a) D4 भवे भवे (for युगे युगे) — b) Ñ1 3 V1 2 B Ds D2 5 6 T2-4 G नृपाः (for नृप) — c) Ś1 हि (for नि-) K3 D6 T1 2 G1 2 5 M4 -रुध्यन्ति (for °न्ते) — d) M3 मुह्यते

55 a) D6 M1-3 ज्यैष्ठ्य- (for ज्यैष्ठ्यं) T3 इति (for अपि) Ś1 ज्येष्ठं कनिष्ठमप्येषां, T2 ज्यैष्ठ्यकानिष्ठ्यमन्येषां. — b) D3 [अ]स्ति (for [आ]सीज्) Ñ2 3 V B2 Ds1 D4, 5 नराधिप (for जना°) Ñ1 Ds2 पूर्वमासीन्नराधिप — c) G1 एतद् (for एव) Ś1 ऽत्र (for ऽभूत्) — d) D6 T1 2 G1, 3 5 प्रभ(D6 °भा)वो न, G4 प्रभवे न (for प्रभावश्च) Ñ2 [अ]प्र-, Ñ3 V1 2 D1, 4 5 T3 4 [अ]त्र (for [ए]व) ❀ Cn यथा जातिकनिष्ठो विश्वामित्रस्तपोबलाद्ब्राह्मणोऽभूत्, एवं जन्मकनिष्ठोऽपि दक्षः अन्यङ्गिर साम्यं लब्ध्वा तत्संबन्धित्वं गत इति भावः ॥ ❀

56 a) N (except Ś1 D6) T1 3 4 G4 M3 4 वि- (for हि) — c) Ñ2 partly damaged Ś1 K3 4 Dn D1 4 6 प्रजानामापदुत्तीर्णः; D3 प्रजावान्पुरुषस्तीर्णः — After 56, D2 ins:

47* दिव्यान्भोगानवाप्नोति रम्भादिस्त्रीभिरावृतः ।

Colophon. — *Mention of the Epic*: K1-8 Ñ3 G3 — *Mention of Khila*: K Ñ1, 3 V B Dn2 D3 D1-5,

# ३

**जनमेजय उवाच ।**

देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
उत्पत्तिं विस्तरेणैव वैशंपायन कीर्तय ॥ १

**वैशंपायन उवाच ।**

प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा ।
यथा ससर्ज भूतानि तथा शृणु महीपते ॥ २
मनसा त्वेव भूतानि पूर्वमेवासृजत्प्रभुः ।
ऋषीन्देवान्सगन्धर्वानसुरानथ राक्षसान् ॥ ३
यदास्य यतमानस्य न व्यवर्धन्त वै प्रजाः ।
ततः संचिन्त्य तु पुनः प्रजाहेतोः प्रजापतिः ॥ ४
स मैथुनेन धर्मेण सिसृक्षुर्विविधाः प्रजाः ।
असिक्नीमावहत्पत्नीं वीरणस्य प्रजापतेः ।
सुतां सुतपसा युक्तां महतीं लोकधारणीम् ॥ ५
अथ पुत्रसहस्राणि वैरण्यां पञ्च वीर्यवान् ।
असिक्न्यां जनयामास दक्ष एव प्रजापतिः ॥ ६
तांस्तु दृष्ट्वा महाभागान्संविवर्धयिषून्प्रजाः ।
देवर्षिः प्रियसंवादो नारदः प्राब्रवीदिदम् ।
नाशाय वचनं तेषां शापायैवात्मनस्तथा ॥ ७
यं कश्यपः सुतवरं परमेष्ठी व्यजीजनत् ।
दक्षस्य वै दुहितरि दक्षशापभयान्मुनिः ॥ ८ C 124 B 1 3 9 P 1 3 9

— *Sub-parvan* Ds D3 आश्चर्यपर्व , T4 माधुर — *Adhy name* Ñ2 3 V Ds2 D1 2 4 5 दक्षोत्पत्ति , B2 दक्षजन्म , D3 प्रजासर्ग , M1 2 दक्षसृष्टि — *Adhy no* (figures, words or both) K3 Ñ3 V2 B1 2 Dn2 Ds D1 4 6 S 2 — *Śloka no* Ds 60 , D4 59

## 3

1 D4 om 1 — c) Ś1 K1–3 Dn M4 [इ]मां , T2 G1 2 5 M1 2 [इ]ह (for [ए]व)

2 a) T2 G1 3 5 चादिष्ट. (for व्या°) — M3 om $2^{c}$–$4^{d}$ — d) T4 महीवर (for °पते)

3 M3 om 3 (cf v l 2) — a) Ñ2 3 V B Ds D1 3–5 T1 3 4 च (for तु) K3 Dn D2 6 G2 मानसान्येव भूतानि ; Ñ1 मनसश्चैव भू° — b) G3 विभु· (for प्रभु.) — c) G5 ऋषि- (for ऋषीन्) — d) K3 D2 यक्ष- (for अथ) K4 Ñ3 B2 (marg) D1 2 (marg *sec m*) 4 6 S (M3 om) मानुषान् (for राक्षसान्) — After 3, K2 4 Ñ2 3 V B D ins

48* यक्षभूतपिशाचांश्च वयःपशुमृगांस्तथा ।

[ D2 (marg *sec m* as above) मानुषाश्च , D5 रक्षोभूत- (for यक्ष°) Dn -सरीसृपान् (for -मृगास्तथा) ]

4 M3 om 4 (cf v l 2) — a) T2 यथा (for यदा) Ś1 यदास्य ताड्यमानस्य (sic), K2 4 Ñ1 B1 2 (marg) D2 °स्य मानसी (B1 °स) तात , K3 B2 Dn D4 °स्य तास्तु (D4 [marg °श्च]) मानस्यो , Ñ2 3 Ds D5 °स्य तात मानस्यो , B3 D3 °स्य तप्यमानस्य , T3 4 यथास्य सृज्य° — b) K2 4 Ds1 M4 व्यवर्धत (for °न्त) Ñ3 V1 3 B2 Ds D1 3. 5 ता (for वै) D2 न व्यवर्धत्तथा प्रजा — After $4^{ab}$, Ś1 K V2 Dn D1 2 4 (marg) T2–4 G2 4 ins

49* अपध्याता भगवता महादेवेन धीमता ।

[ K4 D4 उ(D4 अ)पध्यातो , D2 प्रजा ध्याता (for अपध्याता) ]

— V3 om (hapl) $4^{c}$–$5^{b}$ , D4 reads the same on marg — c) V1 2 B1 2 (marg as in text) 3 Ds D2 6 T1 3 G M1 2 4 तदा , T2 तथा (for तत.). Ś1 तपन (sic), Ñ2 D6 T2 G1 3 4 M1 2 4 च पुन , Ñ3 V1. 2 B Ds धर्मात्मा (for तु पुन) — d) Ds पुत्रहेतो (for प्रजा°)

5 V3 om $5^{ab}$ (cf v l 4). D4 reads $5^{ab}$ on marg — a) Ñ1 D6 T G1 2 5 M1 2. 4 मैथुनेनैव (Ñ1 °नेह) धर्मे- (T4 मार्गे)ण — c) D6 T1 G3 अवहत् (for आ°) — e) Ś1 D3 T3 4 G4 तु (for सु-) Ñ1 सुतां तां सुमहायुक्तां — f) Ñ1 तपसा , Ñ3 (marg as in text) V1 3 D1 3–5 तापसीं (for महती) G2 -धारिणीम् T1 सर्वलोकस्य धारिणीम्

6 a) D3 तस्यां (for अथ) — b) Ś1 K1 3 Ñ1 V3 D3 5 M3 वीरिण्यां , K4 Dn D1 4 T1 वीरण्यां , Ñ2 3 V1 2 B1 Ds D2 6 T2 3 G M1 2 4 वैरिण्यां (for वैरण्यां) — c) V3 असिक्नीं (for °क्न्यां) — d) D1 दशपुत्रः (sic) (for दक्ष एव)

7 a) K4 D4 दृष्ट्वा स , Ñ2 दृष्ट्वा च , Ñ3 V1 3 दृष्ट्वा तु (by transp) G4 महाभाग , M3 °भाग· (for °भागान्) — b) Ś1 T3 G4 सविवर्धयिषु प्रजा — c) Ś1 K1 3 D3 कृत- (for प्रिय-) ❀ Cs प्रियसंवाद प्रियो विवाद· कलहो यस्य । ❀

8 a) Ñ1 M3 य. (for यं) Some Mss काश्यप. D3 सुतं वीरं (for सुतवरं). — b) K3 V3 D1, 3 T2 G1, 5 परमेष्ठ्यम-

अधर्मशङ्कुना तेन राजा त्रय्यारुणोऽत्यजत् ।
अपध्वंसेति बहुशो वदन्क्रोधसमन्वितः ॥ ९१
पितरं सोऽब्रवीत्त्यक्तः क्व गच्छामीति वै मुहुः ।
पिता त्वेनमथोवाच श्वपाकैः सह वर्तय ।
नाहं पुत्रेण पुत्रार्थी त्वयाद्य कुलपांसन ॥ ९२
इत्युक्तः स निराक्रामन्नगराद्वचनात्पितुः ।
न च तं वारयामास वसिष्ठो भगवानृषिः ॥ ९३
स तु सत्यव्रतस्तात श्वपाकावसथान्तिके ।
पित्रा त्यक्तोऽवसद्वीरः पिताप्यस्य वनं ययौ ॥ ९४

ततस्तस्मिंस्तु विषये नावर्षत्पाकशासनः ।
समा द्वादश राजेन्द्र तेनाधर्मेण वै तदा ॥ ९५
दारांस्तु तस्य विषये विश्वामित्रो महातपाः ।
संन्यस्य सागरानूपे चचार विपुलं तपः ॥ ९६
तस्य पत्नी गले बद्ध्वा मध्यमं पुत्रमौरसम् ।
शेषस्य भरणार्थाय व्यक्रीणाद्गोशतेन वै ॥ ९७
तं तु बद्धं गले दृष्ट्वा विक्रीयन्तं नृपात्मजः ।
महर्षिपुत्रं धर्मात्मा मोक्षयामास भारत ॥ ९८
सत्यव्रतो महाबाहुर्भरणं तस्य चाकरोत् ।

---

श्रुत्वा वचनं हि तेषा राजा क्रोधसमन्वित ।

91 $^{a}$) $K_1$ शंकिना ( for शङ्कुना ) $K_2$ अधर्मं कुर्वता तेन, °र्मशीलिनं तं तु, $M_{1-3}$ तमधर्मेण संयुक्त — $^{b}$) $K_3$ सत्यारुणो; $D_3$ $\tilde{N}$ B $Dn_1$ $Ds$ $D_{2\ 3\ 5}$ त्रैय्या° ( for त्रय्या° ) $T_4$ राजन्पुत्रं स चात्यजत् — For $91^{ab}$, $D_6$ $T_{1\ 2}$ G $M_4$ subst

193* तमधर्मेण संयुक्तं पिता सूर्यारुणो जहौ ।
[ $D_6$ त्रय्यारुणो ( for सूर्या° ) ]

— $^{c}$) $V_{1\ 3}$ अपसर्प ( for °ध्वंस )

92 $^{a}$) $\tilde{N}_1$ $V_2$ B Ds सोऽब्रवीत्पितरं त्यक्तः — $^{b}$) $K_{2\ 4}$ $\tilde{N}_{2\ 3}$ $V_{1\ 3}$ $D_{1-4}$ $T_{3\ 4}$ पार्थिव ( $D_2$ °वं ), $K_3$ Dn वै बहु, $V_2$ वै विभुः, $M_2$ वै पुनः ( for वै मुहुः ) — $^{c}$) $K_4$ [अ]प्येनम्, $V_2$ B Ds $D_3$ च तम्, $V_3$ त्वेवम् ( for त्वेनम् ) — $^{f}$) $\tilde{N}_2$ $V_{1, 2}$ -पांशुल ( for -पांसन )

93 $^{a}$) $Ds_2$ इत्युक्त्वा ( for °क्तः ) $Ś_1$ $K_3$ $T_2$ $G_{1\ 3}$ सन् ( for स ) — $^{b}$) $D_6$ $T_{1\ 2}$ G $M_{3\ 4}$ वचनान्नगरात्पितुः

94 $^{c}$) $K_2$ $\tilde{N}_{1\ 3}$ $Dn_1$ $Ds_2$ $D_5$ $T_{1\ 3\ 4}$ $G_{2-4}$ $M_{1\ 2}$ धीरः ( for वीरः ) — $^{d}$) $Ś_1$ $K_1$ $G_4$ त्वस्य, $V_2$ $T_4$ $G_3$ चास्य; $V_3$ $D_5$ $G_2$ तस्य ( for [अ]प्यस्य ).

95 $^{a}$) $K_{2\ 4}$ $\tilde{N}_2$ $V_3$ $D_{1\ 2\ 4\ 5}$ $T_{1\ 2}$ $G_{1\ 5}$ M तस्य; $D_3$ यतस् ( for ततस् ). — After $95^{ab}$, $K_4$ ins.

194* अचिरान्नरपतेर्वसिष्ठस्याविचारतः ।
परित्यागात्कुमारस्य नावर्षत्पाकशासनः ॥
यदा द्वादशवर्षाणि तेन नष्टाभवत्प्रजा ।
स्वाहाकारः स्वधाकारो वषट्कारोऽपि नाभवत् ।
राष्ट्रे तस्य महीपस्य धर्मनाशोऽभवत्तदा ॥

96 $^{a}$) $Ś_1$ चरंस् ( for दारांस् ) $D_3$ च ( for तु ). — $^{b}$) $K_{2, 4}$ $\tilde{N}_{2, 3}$ $V_{1\ 3}$ $D_{3\ 4}$ महायशा ( for °तपाः ) — $^{d}$) $D_6$ $T_{1\ 2}$ G परमं ( for विपुलं ) — After 96, $K_4$ ins

195* एतस्मिन्नेव समये विश्वामित्रस्य वै सुताः ।
चत्वारो वेदविद्वांसः क्षुधया परिपीडिताः ॥
विश्वामित्रे गते दूरं तपसेऽतिमहात्मनि ।
प्रोचुः प्राञ्जलयः सर्वे मातरं प्रति भारत ॥
विक्रीय तनयं मातर्जीव्यतां यदि रोचते ।
मरिष्यामोऽन्यथा सर्वे क्षुधया परिपीडिता ।
विक्रीय तनयं जीव यावदागमनं पितुः ॥
सर्वनाशे समुत्पन्ने अर्धं त्यजति मानवः ।
अर्धेन कुरुते कार्यमिति पौरातनी श्रुतिः ॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे सकलं त्यजेत् ॥
तस्माद्विक्रीय तनयान्मातर्जीव यथासुखम् ।
अन्यथा निधनं सर्वे गमिष्यामस्त्वया सह ॥
अयोध्याया महात्मानो ध्यानवन्तो महत्तराः ।
गृह्णन्ति मनुजाः सर्वे दासार्थं समुपागतान् ॥
तस्माद्विक्रीय मां मातः पूर्वं भक्षय पूर्वजम् ।
पश्चाद्विक्रीयता सर्वान्नो चेद्वर्षति वासवः ॥

97 $^{b}$) $T_1$ पुत्रं मध्यममौरसम् — $^{c}$) $D_3$ $T_{3\ 4}$ शेषस्य रक्षणार्थाय, $D_6$ $T_{1\ 2}$ $G_{1\ 3, 5}$ $M_4$ °स्य भरणार्थं वै — $^{d}$) $D_2$ विक्रीते ( for व्यक्रीणाद् ) $T_2$ द्वि- ( for गो ).

98 $^{a}$) $T_2$ $G_1$ ब( $G_1$ बु )द्ध्वा ( for दृष्ट्वा ). $K_{2, 4}$ $\tilde{N}_{2, 3}$ V $D_{1\ 3-5}$ $T_{3\ 4}$ तं तु ( $K_2$ सुतं ) दृष्ट्वा गले बद्धं — $^{b}$) $K_{1\ 4}$ $\tilde{N}_2$ $V_3$ $D_3$ $T_{3\ 4}$ $G_1$ विक्रीणन्तं ( $D_3$ °न्ती ), $\tilde{N}_3$ $V_{1\ 2}$ B Ds $D_{2\ 5\ 6}$ $G_1$ विक्रयार्थं ( for विक्रीयन्तं ) $K_2$ विक्रीयन्तीं नृपात्मजाम् — $^{d}$) $D_{2\ 3}$ मोचयामास भारत.

99 $^{b}$) $D_6$ $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_4$ चास्य ( for तस्य ). — $^{d}$) $Ś_1$ $K_{1\ 3}$ Dn $D_4$ -क्रोशार्थम् ( for -कम्पार्थम् ) — After 99, $\tilde{N}_2$ ins

196* महाव्रतं तदा रोषं वसिष्ठो मनसाकरोत् ।

100 $^{a}$) $D_6$ $T_{1\ 2}$ $G_{1\ 2}$ राजन् ( for नाम ) — $^{b}$) $K_{2, 4}$ $\tilde{N}_3$ $V_{1, 2}$ B Ds $T_{1\ 2\ 4}$ $M_4$ गले बन्धात् ( $K_{2, 4}$ $T_{1\ 2}$ $M_4$ °द्धो ), $D_6$ गलबद्धो ( for °बन्धात् ). $T_3$ $G_4$ महामनाः ( for

विश्वामित्रस्य तुष्ट्यर्थमनुकम्पार्थमेव च ॥ ९९
सोऽभवद्गालवो नाम गलबन्धान्महातपाः ।
महर्षिः कौशिकस्तात तेन वीरेण मोक्षितः ॥ १००

इति श्रीहरिवंशे नवमोऽध्यायः ॥ ९ ॥

# १०

वैशंपायन उवाच ।
सत्यव्रतस्तु भक्त्या च कृपया च प्रतिज्ञया ।
विश्वामित्रकलत्रं तद्बभार विनये स्थितः ॥ १
हत्वा मृगान्वराहांश्च महिषांश्च वनेचरान् ।
विश्वामित्राश्रमाभ्याशे मांसं तदवबन्धत ॥ २
उपांशुव्रतमास्थाय दीक्षां द्वादशवार्षिकीम् ।
पितुर्नियोगादवसत्तस्मिन्वनगते नृपे ॥ ३
अयोध्यां चैव राष्ट्रं च तथैवान्तःपुरं मुनिः ।
याज्योपाध्यायसंयोगाद्वसिष्ठः पर्यरक्षत ॥ ४
सत्यव्रतस्तु बाल्याद्वा भाविनोऽर्थस्य वा बलात् ।
वसिष्ठेऽभ्यधिकं मन्युं धारयामास नित्यदा ॥ ५
पित्रा तु तं तदा राष्ट्रात्परित्यक्तं प्रियं सुतम् ।
न वारयामास मुनिर्वसिष्ठः कारणेन हि ॥ ६
पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे ।
न च सत्यव्रतस्तस्माद्धृतवान्सप्तमे पदे ॥ ७
जानन्धर्मं वसिष्ठस्तु न मां त्रातीति भारत । C 787 B 1 13 8 P 1 13 8

°तपा ) — $^{c}$ ) $M_1$ ब्रह्मर्षि ( for महर्षि ). — $^{d}$ ) $D_{1\ 3}$ मोचितः, $D_6$ $T_2$ G $M_4$ रक्षित ( for मोक्षित. )

Colophon om in $K_4$ *Mention of the Epic* $K_3$ $Ds_2$. — *Mention of Khila* N ( $K_4$ om ) — *Adhy name* $K_2$ $\tilde{N}_{2\ 3}$ V $B_{1\ 2}$ $D_{1\ 2\ 4\ 5}$ त्रिशङ्कुचरितम् — *Adhy no* ( figures, words or both ) $K_1$ $D_{1\ 4}$ $T_{3\ 4}$ 10, $K_3$ $\tilde{N}_3$ $V_1$ $D_{3,6}$ 11, $V_{2\ 3}$ $B_{1\ 2}$ Dn $Ds_2$ 12, $T_{1\ 2}$ G $M_{1\ 2\ 4}$ 9 — *Śloka no.* $Dn_1$ $Ds_2$ $D_{3\ 4}$ 24, $D_2$ 25

## 10

1 $T_3$ $M_1$ om the ref — $^{a}$ ) $Dn_1$ om च — $^{b}$ ) $K_1$ $\tilde{N}$ $V_{1\ 3}$ $B_{1\ 2}$ $D_{1,4}$ $T_2$ $G_{4\ 5}$ [अ]थ, $D_6$ स्व- ( for च ) $K_3$ प्रतीक्षया ; $G_{4,5}$ यदृच्छया ( for प्रतिज्ञया ) — $^{c}$ ) $Ś_1$ $K_{1\ 3}$ $G_1$ -कलत्रं च ( $K_1$ स ) ; $T_1$ °त्राणि ( for °त्रं तद् ) — $^{d}$ ) $\tilde{N}_2$ विनय- ( for विनये ) $Ś_1$ $K_{1\ 3}$ पोषयामास वै तदा, $T_2$ $G_1$ बभार विनयान्वित

2 $^{c}$ ) $T_{3\ 4}$ विश्वामित्रवनाभ्याशे — $^{d}$ ) $K_{1\ 3}$ Dn मांसं स तु बबन्ध तत्, $K_2$ मांसं तच्च बबन्ध ह, $K_4$ $\tilde{N}_{2\ 3}$ V B Ds $D_{3\ 5}$ $T_4$ मांसं वृक्षे बबन्ध च ( $K_4$ $D_3$ $T_4$ ह, $D_5$ सः ), $D_6$ $T_{1,2}$ $G_1$ मांसं तत्तदबध्न( $T_1$ °ध्य- ; $T_2$ $G_1$ °न्ध )त, $T_{3\ 4}$ ( marg ) तांश्च सर्वान्पुपोष ह, $G_4$ कीटजग्धं बबन्ध स, $M_4$ मांसं तदवबध्यत

3 $^{a}$ ) $Ś_1$ आदाय ( for आस्थाय ) — $^{c}$ ) $Ś_1$ $\tilde{N}_3$ $V_{1\ 2}$ $B_3$ Ds $D_4$ अवहत्, $T_3$ एवेह ( for अवसत् ) — $^{d}$ ) $K_{1\ 2\ 4}$ $V_2$ $B_3$ Ds $D_{1,4,6}$ $T_2$ $G_{1,5}$ $M_{3,4}$ नृप, $D_2$ तदा ( for नृपे )

4 $^{a}$ ) $\tilde{N}_1$ $V_2$ $B_{1\ 3}$ Ds $D_2$ राज्यं ( for राष्ट्रं ) — $^{c}$ ) $T_2$ $G_{1\ 5}$ इज्योपाध्याय- ( for या° ) $Ś_1$ $K_{1-3}$ Dn $M_{1\ 2}$ -संबन्धाद् ( for -संयोगाद् )

5 $^{a}$ ) $Ś_1$ $T_1$ $G_3$ वै ; $K_{2\ 4}$ $\tilde{N}$ V B Ds $D_{1-3\ 5}$ $T_{3\ 4}$ $G_2$ च ( for वा ) — $^{b}$ ) $Ś_1$ $D_2$ वै बलात ; $K_{2\ 4}$ $V_2$ $T_3$ वानघ ; $\tilde{N}_{1\ 3}$ $V_1$ B Ds $D_{1\ 3\ 5}$ चानघ, $\tilde{N}_2$ भारत ( for वा बलात् ) — $\tilde{N}_2$ repeats $5^{c}$ after $8^{ab}$ — $^{c}$ ) $K_2$ $T_{3\ 4}$ $G_{2\ 4}$ वसिष्ठो ( for °ष्ठे ) — $^{d}$ ) $Ś_1$ $K_1$ Dn वै तदा, $K_4$ $T_{1\ 2}$ नित्यशः ; $D_6$ $G_2$ °त. ( for °दा )

6 $^{a}$ ) $K_{2\ 4}$ $\tilde{N}$ V B $D_{3-5}$ $T_4$ $M_{2\ 3}$ हि तं, Ds $D_1$ हि तत्, $D_2$ सुतं, $T_3$ हि तु, $G_{2\ 4}$ पुत्रं ( for तु तं ) $D_4$ $T_4$ तथा ( for तदा ) $Ś_1$ $\tilde{N}_3$ $V_{2\ 3}$ $D_5$ $T_4$ राज्यात्, $K_{2\ 3}$ $\tilde{N}_2$ Dn $D_{1\ 2}$ राजंस्, $K_4$ $V_1$ राज्ञा ( for राष्ट्रात् ) — $^{b}$ ) $K_{2,4}$ $\tilde{N}$ V B Ds $D_{3-5}$ $T_{3\ 4}$ त्यज्यमान, $D_1$ तप्यमानं ( for परित्यक्तं ) $D_6$ $T_2$ $G_{1\ 2\ 4\ 5}$ $M_4$ तमा( $T_2$ °दा )त्मजम्, $T_1$ $G_3$ महात्मना ; $M_{1-3}$ नृपात्मजम् ( for प्रियं सुतम् ) $S_1$ परित्यज्य तमात्मजम्, $K_{1\ 3}$ त्यज्यमानं स्वमात्मजम्, $D_2$ त्यज्यमानं प्रियं तदा — $^{d}$ ) K $\tilde{N}$ V B Dn Ds $D_{1-5}$ $T_4$ $G_{2\ 4}$ ह, $D_6$ $T_{1\ 2}$ $G_{1,3}$ $M_4$ तु, $G_5$ ते ( for हि ) $T_3$ वसिष्ठ· कारणै· सह

7 $^{a}$ ) $G_4$ -मन्त्रस्य ( for -मन्त्राणां ) — $^{b}$ ) $D_4$ निवृत्ति ( for निष्ठा स्यात ) — After $7^{ab}$, $Ś_1$ $K_3$ read $9^{cd}$ $Ś_1$ $K_{3\ 4}$ $\tilde{N}_2$ $D_{1\ 5}$ $T_1$ $G_{3\ 5}$ om ( hapl ) $7^{cd}$ — $^{c}$ ) $M_{2\ 3}$ तु ( for च ) $T_2$ $G_1$ सत्यव्रतात् ( for °व्रतस् ) $K_1$ $V_3$ Dn तस्य, $M_4$ तात ( for तस्माद् ) — $^{d}$ ) $K_1$ Dn तमुपांशुमबुध्यत

8 $^{a}$ ) $Ś_1$ $K_{1,3}$ Dn $D_{1\ 4}$ धर्मान्, $K_{2\ 4}$ $\tilde{N}_3$ V $D_{2\ 3,5}$

सत्यव्रतस्तदा रोषं वसिष्ठे मनसाकरोत् ॥ ८
गुणबुद्ध्या तु भगवान्वसिष्ठः कृतवांस्तदा ।
न च सत्यव्रतस्तस्य तमुपांशुमबुध्यत ॥ ९
तस्मिन्नपरितोषो यः पितुरासीन्महात्मनः ।
तेन द्वादश वर्षाणि नावर्षत्पाकशासनः ॥ १०
तेन त्विदानीं वहता दीक्षां तां दुर्वहां भुवि ।
कुलस्य निष्कृतिस्तात कृता सा वै भवेदिति ॥ ११
न तं वसिष्ठो भगवान्पित्रा त्यक्तं न्यवारयत् ।
अभिषेक्ष्याम्यहं पुत्रमस्येत्येवं मतिर्मुनेः ॥ १२
स तु द्वादश वर्षाणि दीक्षां तामुद्वहन्बली ।
अविद्यमाने मांसे तु वसिष्ठस्य महात्मनः ।
सर्वकामदुहां दोग्ध्रीं ददर्श स नृपात्मजः ॥ १३
तां वै क्रोधाच्च मोहाच्च श्रमाच्चैव क्षुधान्वितः ।
दशधर्मगतो राजा जघान जनमेजय ॥ १४
तच्च मांसं स्वयं चैव विश्वामित्रस्य चात्मजान् ।
भोजयामास तच्छ्रुत्वा वसिष्ठोऽप्यस्य चुक्रुधे ॥ १५

वसिष्ठ उवाच ।

पातयेयमहं क्रूर तव शङ्कुमयस्मयम् ।
यदि ते द्वाविमौ शङ्कू न स्यातां वैकृतौ पुनः ॥ १६
पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ।

$T_{3\cdot4}$ अपि ( for धर्मं ) $M_{1-3}$ च ( for तु ) — [b]) $Ś_1$ पालयामास भारत, $G_5$ नामन्त्रयति भा° — After $8^{ab}$, $Ñ_2$ repeats $5^c$

9 [a]) $G_{3\cdot5}$ गुण बुद्धा ( for गुणबुद्ध्या ) $D_3$ कृतवान् ( for भग° ) — [b]) $D_{3\cdot6}$ भगवास् ( for कृत° ) $K_{1\cdot2\cdot4}$ Ñ $D_n$ $D_s$ $D_{1\cdot4\cdot5}$ $T_{1\cdot3\cdot4}$ $G_{2\cdot4\cdot5}$ $M_{1\cdot2}$ तथा, $T_2$ $G_1$ तत ( for तदा ) — $Ś_1$ $K_3$ read $9^{cd}$ after $7^{ab}$, $K_1$ reads it on marg — [c]) $K_{1\cdot2}$ $Ñ_{2\cdot3}$ $V_1$ $D_{3\cdot4}$ $T_{3\cdot4}$ तात ( for तस्य )

10 [a]) $Ś_1$ $D_s$ $D_1$ $T_1$ $G_5$ ऽयं ( for यः ) — [b]) $D_1$ महाबल ( for °त्मनः ) — $D_3$ om $10^{cd}$ $Ś_1$ $K_1$ read $10^d$ after $13^a$ — [d]) $K_3$ तां दीक्षामवहद्बली

11 $Ś_1$ $K_1$ om $11^a$ — [a]) $V_3$ $T_{3\cdot4}$ महता, $G_{4\cdot5}$ गतवान् ( for वहता ). — [b]) $Ś_1$ तां दीक्षां ( by transp ) $T_{3\cdot4}$ दुर्लभां ( for दुर्वहां ) $K_1$ तां दीक्षामवहद्बली — For $11^{ab}$, $D_4$ subst

197* तेनार्थे चैव विहिता दीक्षास्तात हता भुवि ।

— [d]) $K_{2\cdot4}$ $Ñ_{2\cdot3}$ $V_1$ $D_{1\cdot4\cdot5}$ वै सा ( by transp ). $D_3$ वैषा $K_3$ इह ( for इति ) S ( except $T_{3\cdot4}$ ) कृता ते( $G_5$ $M_1$ °ताने )न भविष्यति

12 [b]) $K_{2\cdot4}$ $Ñ_3$ $V_{1\cdot3}$ $D_{1\cdot3\cdot4\cdot6}$ गुणबुद्ध्या, $Ñ_2$ तेन बुद्ध्या ; $D_2$ गुणवृद्ध्या ( for पित्रा त्यक्तं ) $T_1$ $M_4$ न्यवर्तयत्, $T_4$ अवार° ; $G_{3\cdot5}$ न्यवेश( $G_5$ °द )यत ( for न्यवार° ) — [d]) $V_2$ ममाप्येवं, $D_{2\cdot3}$ $G_{3\cdot5}$ अस्येत्येव, $M_{1-3}$ अस्येवेति ( for अस्येत्येवं ) $Ś_1$ $K_{1\cdot3}$ $Ñ_3$ $D_{1\cdot2\cdot4}$ मुनिः, $D_s$ मम ( for मुने ).

13 [a]) $Ś_1$ $K_{1\cdot3}$ $D_4$ तेन, $T_3$ यत्तद्, $T_4$ यस्तद् ( for स तु ) — After $13^a$, $Ś_1$ $K_1$ read $10^d$ — [b]) $V_2$ $B_{1\cdot3}$ $D_n$ $D_s$ ता दीक्षाम् ( by transp ) $K_4$ $Ñ_{1\cdot3}$ $V_3$ $D_n$ $D_{1-6}$ $T_{1\cdot3\cdot4}$ $G_{1-4}$ $M_4$ उद्वहद्, $Ñ_2$ $V_1$ $B_1$ $D_s$ अवहद् ( for उद्वहन् ). $D_5$ व्रती ( for बली ). $K_3$ नावर्षत्पाकशासन ( = $10^d$ ). — After $13^{ab}$, $K_4$ $Ñ_3$ $V_1$ $D_3$ ins :

198* उपांशुव्रतमास्थाय महत्सत्यव्रतो नृप ।
[ $K_4$ स तु, $D_3$ तत ( for महत् ) ]

— [f]) $Ñ_1$ $V_2$ B $D_s$ $D_{2\cdot4\cdot6}$ $T_{1\cdot2}$ $G_{1\cdot3-5}$ $M_4$ स ददर्श ( by transp )

14 [a]) $Ś_1$ श्रमाच् ( for क्रोधाच् ) — [b]) $K_{1\cdot3}$ $D_n$ क्षुधार्दितः, $K_{2\cdot4}$ $Ñ_{2\cdot3}$ $V_3$ $B_1$ ( marg ) $D_{1\cdot3\cdot4}$ $T_{3\cdot4}$ बुभुक्षितः ( for क्षुधान्वितः ) $Ś_1$ क्रोधाच्चैव क्षुधार्दितः ; $V_1$ श्रमाच्चैव बुभुक्षितः — [c]) $Ś_1$ दशवर्ष-, $D_1$ दस्युधर्म-, $D_{2\cdot3}$ देश°, $D_5$ $G_{2\cdot4}$ दश धर्मान्, $T_{1\cdot2}$ $G_{1\cdot3}$ M दाशधर्म- ( for दश° ) — $Ñ_3$ ( marg ) ins after $14^{ab}$ $D_n$ $D_6$ Cs after 14 :

199* मत्तः प्रमत्त उन्मत्त श्रान्तः क्रुद्धो बुभुक्षितः ।
त्वरमाणश्च भीतश्च लुब्धः कामी च ते दश ॥
[ ( L 1 ) $D_6$ भ्रान्त ( for श्रान्त ) ]

15 [a]) $K_2$ $Ñ_{2\cdot3}$ $V_{1\cdot3}$ $D_{1-6}$ $G_{3-5}$ M स तन्मांसं, $K_4$ स च मांसं, $V_2$ $B_{1\cdot3}$ $D_s$ तन्मासं तु, $T_{1\cdot2}$ $G_1$ स तु मासं ( for तच्च मासं ) $T_{3\cdot4}$ स तन्मांसं शृतं चैव — [b]) $K_2$ $T_2$ $G_1$ [आ]त्मवान्, $Ñ_1$ °जम् ( for °जान् ) — [d]) $K_2$ $T_{1\cdot2}$ $G_{1\cdot3}$ $M_4$ [अ]थ ( for [अ]स्य ) $T_1$ चुक्षुभे ( for चुक्रुधे ) — After 15, N ( except $Ś_1$ $K_1$ $Ñ_1$ ) $T_{2-4}$ G $M_4$ ins :

200* क्रुद्धस्तु भगवान्वाक्यमिदमाह नृपात्मजम् ।
[ $K_2$ त, $D_4$ च ( for तु ) ]

16 $D_s$ $T_2$ $G_{1\cdot2}$ om the ref — [a]) $B_1$ क्रूंर ( for क्रूर ). — [b]) K $Ñ_2$ $D_n$ $D_{3\cdot4}$ न संशय, $Ñ_{1\cdot3}$ V B $D_s$ $D_{2\cdot5}$ $T_{3\cdot4}$ असंशयम् ( for अयस्मयम् ) $D_6$ $T_{1\cdot2}$ G $M_4$ तव वंशमसंशयम् — [d]) $Ś_1$ $K_1$ पुरा ( for पुनः )

17 $K_1$ reads $17^a$–$18^b$ on marg — [a]) $D_s$ -तोषाच्च ( for -तोषेण ). $K_3$ पितुश्च परिरोषेण· — [c]) $D_3$ -भोगाच्

अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ॥ १७
एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः ।
त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः ॥ १८
विश्वामित्रस्तु दाराणामागतो भरणे कृते ।
तेन तस्मै वरं प्रादान्मुनिः प्रीतस्त्रिशङ्कवे ।
छन्द्यमानो वरेणाथ गुरुं वव्रे नृपात्मजः ॥ १९
अनावृष्टिभये तस्मिन्गते द्वादशवार्षिके ।
अभिषिच्य च राज्ये च याजयामास तं मुनिः ।
मिषतां देवतानां च वसिष्ठस्य च कौशिकः ॥ २०
तस्य सत्यरथा नाम पत्नी केकयवंशजा ।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ॥ २१
स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति स्मृतः ।
आहर्ता राजसूयस्य स सम्राडिति विश्रुतः ॥ २२
हरिश्चन्द्रस्य तु सुतो रोहितो नाम विश्रुतः । C 756 B I 13 26 P I 13. 26

(for -योगाच्) — $^{d}$) D6 त्रिविधस् (for त्रि°) Ñ2 तु (for ते) Ś1 त्रिविधास्ते व्यतिक्रमा , K4 त्रयश्चातो व्यतिक्रमा.

18 Before 18, some Mss ins वैशंपायन K1 reads $18^{ab}$ on marg — $^{a}$) K4 D1 4 5 च (D1 स) त्रीणि, G3 त्रीण्यथ (for °स्य) — $^{b}$) M3 कृत्वा (for दृष्ट्वा) Ś1 K1 3 Dn महायशा (for °तपा) — Dn1 om (hapl) $18^{c}$ — $^{c}$) Ñ1 V2 B Ds D2 तेन (for इति) — $^{d}$) V2 चाभवत्, D3 च स्मृत , T4 विश्रुत (for स स्मृत·)

19 $^{b}$) D4 भक्षणे (for भरणे) M4 आगतो भरतर्षभ — $^{c}$) Ś1 K2 4 Ñ3 V B2 (marg as in text) Dn2 Ds2 D1–5 T3 4 G2–4 स तु, K3 Dn1 स च (for तेन) — $^{e}$) T1 G4 5 चोद्यमानो, T2 चिन्त्य° (for छन्द्य°) — $^{f}$) Ś1 K Ñ2 3 V Dn D1–5 T1 3 4 G3–5 M4 वरं (for गुरुं) — After 19, all Mss (except Ś1 Ñ1 M1–3) ins

201* सशरीरो व्रजे स्वर्गमित्येवं याचितो मुनि· ।

[V3 सशरीर (for °रो) Ñ2 V2 3 B Ds D3 T3 4 वर (for मुनि)]

20 $^{c}$) K1 Ñ2 T3 4 पितृ (K1 °त्र्ये) राज्ये, K2 D2 राज्ये पित्र्ये, Ñ1 D1 राज्ये पै(D1 पि)त्र्ये च (D1 तु) (hypermetric), V1 B1 राज्ये पैत्र्ये, D3 [अ]थ राज्येऽपि, D5 स राज्ये तं, M1–3 च राज्येऽपि (for च राज्ये च) K3 Dn पित्र्येऽभिषिच्य राज्ये तु, K4 V2 3 B2 3 Ds राज्येऽभिषिच्य पित्र्ये तु (K4 च, V2 om, V3 वै) — $^{d}$) S1 T3 योजयामास (for याज°) — For $20^{cd}$, D6 T1 2 G M4 subst :

202* तं मुनिर्याजयामास पित्र्ये राज्येऽभिषिच्य तु ।

[G1 मुनिं T2 त मुनिर्योजयामास (for $^{a}$) T1 2 M4 पित्रे (for पित्र्ये)]

— After $20^{cd}$, V3 ins 204* — $^{e}$) M4 मिषतां सर्वदेवानां — $^{f}$) D2 महात्मन·, T1 G3 5 तु कौशिकः (for च कौ°) — After 20, S1 K1 3 4 Dn D4 ins

203* सशरीरं तदा तं तु दिवमारोपयत्प्रभु. ।

While Ñ2 3 V1 2 B Ds D2 6 T2–4 G1 4 ins after 20 V3 after $20^{cd}$ .

204* दिवमारोपयामास सशरीरं महातपा. ।

[Ñ2 D2 दिवमारोहयामास (for $^{a}$)]

21 $^{a}$) D3 T1 G3 5 सत्यव्रता, D6 T2 4 G1 M1 4 °रता (for °रथा) — $^{b}$) Ś1 K1 D5 6 T4 G2 भार्या (for पत्नी) Some Mss कैकय- and कैकेय- (for केकय-) G5 -नन्दजा (for -वंशजा) — $^{c}$) Ds2 चिरस्य (for कुमारं)

22 $^{a}$) M2 3 च (for वै) — $^{b}$) K3 B2 Dn श्रुत: (for स्मृत) K1 त्रैशङ्क इति विश्रुत — T3 4 om (hapl ?) $22^{cd}$, K2 reads it on marg — $^{d}$) Ñ2 V3 D2 transp. स and सम्राट् B1 इह (for इति) Ñ1 च श्रुतिः (for विश्रुत.) K2 सम्राडिति हि स श्रुत , K3 V2 Dn D1 सम्राडिति च (D1 हि) विश्रुत , D6 T1 2 G M साम्राज्य इति न. श्रुतम् (G3 विश्रुत , G5 विश्रुतम्)

23 $^{a}$) K Ñ2 3 V Dn D1–5 T1 3. 4 G2 पुत्रोऽभूद्, B2 च सुतो (for तु सुतो) — $^{b}$) K Ñ2 3 V Dn D1–3 6 T G M4 वीर्यवान् (for विश्रुत) D4 रोहिताश्व· स पार्थिव·. — After $23^{ab}$, K1 3 4 V Dn D3–6 M4 ins

205* येनेदं रोहितपुरं कारित राज्यसिद्धये ॥
कृत्वा राज्य स राजर्षि पालयित्वा तथा प्रजा ।
संसारासारता ज्ञात्वा द्विजेभ्यस्तत्पुरं ददौ ॥

[M4 om line 1 — (L 1) D6 [ए]व (for [इ]द) K3 Dn राष्ट्र- (for राज्य-) — (L 2) V1 च ता , D5 स्वय (for तथा) — (L 3) V1 स्व- (for तत्)]

K1 3 4 V Dn D3–6 cont K2 Ñ2 3 B Ds D1 2 T2–4 G ins after $23^{ab}$

206* हरितो रोहितस्याथ चञ्चुर्हारीत उच्यते ।
विजयश्च सुदेवश्च चञ्चुपुत्रौ बभूवतुः ।
जेता क्षत्रस्य सर्वस्य विजयस्तेन स स्मृतः ॥
रुरुकस्तनयस्तस्य राजधर्मार्थकोविदः ॥

After line $1^{a}$, D3 ins

206A* हरितो जज्ञिवास्तत ।
तथैव लोके धर्मात्मा,

रोहितस्य वृकः पुत्रो वृकाद्बाहुस्तु जज्ञिवान् ॥ २३
हेहयास्तालजङ्घाश्च निरस्यन्ति स्म तं नृपम् ।
नात्यर्थं धार्मिकस्तात स हि धर्मयुगेऽभवत् ॥ २४
सगरस्तु सुतो बाहोर्जज्ञे सह गरेण वै ।
और्वस्याश्रममासाद्य भार्गवेणाभिरक्षितः ॥ २५
आग्नेयमस्त्रं लब्ध्वा च भार्गवात्सगरो नृपः ।
जिगाय पृथिवीं हत्वा तालजङ्घान्सहेहयान् ॥ २६
शकानां पह्लवानां च धर्मं निरसदच्युतः ।
क्षत्रियाणां कुरुश्रेष्ठ पारदानां च धर्मवित् ॥ २७

जनमेजय उवाच ।

कथं स सगरो जातो गरेणैव सहाच्युतः ।
किमर्थं च शकादीनां क्षत्रियाणां महौजसाम् ॥ २८
धर्मं कुलोचितं क्रुद्धो राजा निरसदच्युतः ।
एतन्मे सर्वमाचक्ष्व विस्तरेण तपोधन ॥ २९

वैशंपायन उवाच ।

बाहोर्व्यसनिनस्तात हृतं राज्यमभूत्किल ।
हेहयैस्तालजङ्घैश्च शकैः सार्धं विशां पते ॥ ३०
यवनाः पारदाश्चैव काम्बोजाः पह्लवाः खशाः ।

—(L 2) G3 विरजश् (for विजयश्) K2 सुवेदश्, K3 सुवीरश्; D6 सुदेष्णुश् (for °वश्) —(L 3) V3 D1 4 6 जेता सर्वस्य क्षत्रस्य (for $^a$) Ñ2 D5 6 G1 3 5 सम्मृत, B1 संमत; T3 4 सोऽभवत् (for स स्मृत) — B1 3 Ds D2 T2–4 G1 3–5 om line 4 —(L 4) D1 रुचकम् (for रुरु°) K1 3 V1 Dn1 D3 4 राजा (for राज-) ]

— $^c$) K Ñ2 3 V B2 Dn D3–6 G2 रुरुकस्य, B1 2 (marg) 3 Ds D2 T2–4 G1 4 विजयस्य, D1 रुचकस्य (for रोहितस्य) — $^d$) K4 V2 D1 5 च (for तु) — After 23, K Ñ2 3 V B D1–5 T2–4 G1 4 ins

207* शकैर्यवनकाम्बोजै पारदै पह्लवै सह ।

[T4 -काम्भोजै (for -काम्बोजै). K1 पल्वलै., K2 V2 D5 पल्लवैः; K4 च प्लवै, D1 प्रह्लदै, T3 4 G4 पप्लवै (for पह्लवै) ]

24 $^a$) Some Mss हैहयास् (for हे°) — $^b$) K3 Dn D4 M1, 3 निरसान्ति (for °स्यन्ति) B1 मुनिम् (for नृपम्) — $^d$) K2 D1 4 सत्ययुगे; Ñ1 धर्मस्ततो, V3 °परो (for °युगे)

25 $^a$) K3 Ñ1 Ds D6 T1, 2 G M4 सगरं तु (G5 °रस्तु) सुतं बाहुर् (G4, 5 °हुं). — $^b$) T2 G M1 लेभे (for जज्ञे) M2 स हि (for सह). K1 3 Dn ह, Ñ2 3 T1 3 4 G2 च (for वै). D6 लेभे स सगरेण वै. — M4 om. $25^c$–$26^d$ — $^c$) D2 ऊर्वस्य (for और्°) Ś1 K1 3 T1 4 G2 4 आगम्य (for आसाद्य).

26 M4 om. 26 (cf v l 25) — $^a$) V2 [अ]थ; D3 M1 स; D6 G3 5 [अ]सौ, T1 2 G1 तु (for च) — $^c$) K2 4 Ñ2 3 V1 3 D2, 4 T3 4 सर्वां (for हत्वा) — $^d$) Ś1 G3 -केकयान्; some Mss हैह° (for -हेह°).

27 $^a$) K4 पह्लवानां; some Mss. पाल्ह°, पप्ल° and पह्लवानां (for पह्ल°). — $^b$) D2, 6 T2 G1, 4 M धर्मान् (for धर्मं) K3 Dn Ds न्यरसद् (for नि°) K2 Ñ3 V1 3 B1 D1 अच्युत; B2 अप्युत (for अच्युत). — T1 om. (hapl) $27^c$–$29^b$. — $^c$) D6 T2 G1–3 5 ह(D6 फ)लानां च (for क्षत्रियाणां) K2 4 Ñ2 3 V1 3 D1–3 नृप-, D4 द्विज- (for कुरु-) — $^d$) K1 3 4 Dn2 Ds T3 G2 4 5 स (for च) D3 सर्वंश (for धर्मवित्) — After 27, K2 4 Ñ2 3 V B Dn Ds D1–5 T3 4 ins an addl colophon [*Mention of Khila* K2 4 Ñ2 V2 3 B Dn Ds1 D1–4 — *Adhy name* K2 4 Ñ3 V B2 3 Ds D1–5 त्रिशङ्कुचरितम्, Ñ2 B1 शङ्कुचरितम् — *Adhy. no* Ñ3 V1 D3 12, V2 3 B2 Dn Ds2 13, D1 4 T3 4 11 ]

28 T1 om 28 (cf v l 27) — $^a$) Ñ1 2 स कथं (by transp) K2 4 Ñ2 3 V1 3 B2 (marg as in text) D1 4 T3 4 जज्ञे, G2 4 राजा (for जातो) — $^b$) K2 Ñ2, 3 V B1 2 D2 4 M1 [अ]च्युत, B3 [उ]च्यताम्, T3 [अ]नघ (for [अ]च्युतः) — M3 om (hapl) $28^c$–$29^b$ — $^c$) K1 T3 G4 शकानां स (for °दीनां) — $^d$) Ś1 महात्मनाम् (for महौजसाम्)

29 T1 om $29^{ab}$ (cf v l 27) M3 om $29^{ab}$ (cf v l 28) — $^a$) K2 Ñ2 3 V1 3 D1–5 T3 4 धर्मान्कुलोचितान्राजा; K4 धर्मात्कुलोचिताद्राजा — $^b$) K2 कस्मान्, K4 Ñ2 3 V1 3 D1–4 T3 4 क्रुद्धो, D5 om (for राजा) K2 Ñ1 3 V1 B D1 4 [अ]च्युत (for °तः). — $^c$) G1 एतस्मिन् (for °न्मे) Ñ1 आख्याहि (for आचक्ष्व) — $^d$) T2 G1 कथामिमाम् (for तपोधन).

30 $^b$) D4 राष्ट्रम् (for राज्यम्) — $^c$) Some Mss हैहयैस् (for हे°). — $^d$) Ś1 तात, M3 चापि (for सार्धं). D6 T2 G M4 समागतैः (for विशां पते)

31 $^b$) T2 3 G1 काम्भोजा (for काम्बोजा) N (except Dn Ds) T1 2 G1 3 5 M तथा (for खशा). — B1 D2 T3 4 ins after $31^{ab}$ T2 G1 4 after $37^{cd}$

208* कातिसर्पा माहिषिका पारदाश्चक्षणा. शकाः ।

[B1 G4 कोलि-; D2 केलि- (for कानि-). T3 महिषिका:

एते ह्यपि गणाः पञ्च हेययार्थे पराक्रमन् ॥ ३१
हृतराज्यस्तदा राजा स वै बाहुर्वनं ययौ ।
पत्न्या चानुगतो दुःखी वने प्राणानवासृजत् ॥ ३२
पत्नी तु यादवी तस्य सगर्भा पृष्ठतोऽन्वगात् ।
सपत्न्या च गरस्तस्या दत्तः पूर्वमभूत्किल ॥ ३३
सा तु भर्तुश्चितां कृत्वा वने तामध्यरोहत ।
और्वस्तां भार्गवस्तात कारुण्यात्समवारयत् ॥ ३४
तस्याश्रमे च तं गर्भं गरेणैव सहाच्युतम् ।
व्यजायत महाबाहुं सगरं नाम पार्थिवम् ॥ ३५
और्वस्तु जातकर्मादि तस्य कृत्वा महात्मनः ।
अध्याप्य वेदशास्त्राणि ततोऽस्त्रं प्रत्यपादयत् ।
आग्नेयं तं महाभागममरैरपि दुःसहम् ॥ ३६
स तेनास्त्रबलेनाजौ बलेन च समन्वितः ।
हेययान्निजघानाशु क्रुद्धो रुद्रः पशूनिव ।
आजहार च लोकेषु कीर्तिं कीर्तिमतां वरः ॥ ३७
ततः शकान्सयवनान्काम्बोजान्पारदांस्तथा ।
पह्लवांश्चैव निःशेषान्कर्तुं व्यवसितो नृपः ॥ ३८
ते वध्यमाना वीरेण सगरेण महात्मना ।
वसिष्ठं शरणं गत्वा प्रणिपेतुर्मनीषिणम् ॥ ३९
वसिष्ठस्त्वथ तान्दृष्ट्वा समयेन महाद्युतिः ।
सगरं वारयामास तेषां दत्त्वाभयं तदा ॥ ४०
सगरः स्वां प्रतिज्ञां च गुरोर्वाक्यं निशम्य च । C 779 B 1.14.15 P 1.14.15

---

( for मा° ) T2 G1 तोळिसर्पान्माहिषकान् ( for a ) D2 G4 खशा ( for शका ) ]
— c ) Ś1 K1 3 ह्यरि-, K4 दैत्य-, Ñ2 V1 क्षत्र-; D1 T1 ऽन्येऽपि, D2 चापि, D3 ह्यत्र, D4 रिपु- ( for ह्यपि ) — d ) Some Mss हैहयार्थे ( for हे° )

32 a ) Ds1 हत- ( for हृत- ) Ñ3 V1 T2 तथा ( for तदा ) M4 राजन् ( for राजा ) — b ) M4 च ( for वै ) Ñ3 V1 गत. ( for ययौ ) — c ) M1–3 दु खाद् ( for दु खी ) — d ) Ś1 K1–3 T3 G4 स वै, Ñ1 V2 B Ds तत्र, D3 तत: ( for वने ) — After 32, K4 ins

209* वृद्धं तं पञ्चतां प्राप्तं तत्पत्न्यनुमरिष्यती ।
और्वेण जानतात्मानं प्रजावन्तं निवारिता ॥

33 T1 M1 2 om $33^{ab}$ — a ) T3 4 पत्नी तु बाहोर्या चैव — b ) D3 ऽन्वियात्, D5 ऽन्वयात् ( for °गात् ) — c ) Ś1 Ñ2, 3 V1 3 B Dn Ds D1–4 6 T2 G1 3 5 M4 तु ( for च ) K2 T3, 4 गरं ( for गरस् ) Ñ2 V3 B Ds D5 तस्यै, M1 2 दत्तस् ( for तस्या ) — d ) K1 4 B3 Ds1 D2 दत्त-, K2 D4 T3 4 दत्तं ( for दत्त· ) Ś1 तत· किल, V2 किलानघ; B2 3 Ds1 तदा किल ( for अभूत्किल ) D6 T1 2 G M दत्तो ( M1 2 तस्या ) गर्भजि( T1 °र्भं जि )घांसया

34 a ) D5 च ( for तु ) Ś1 K3 Ñ2 3 Dn D1 6 T3 4 चितिं ( for चितां ) — b ) T2 G M2–4 वने समधि( T2 G1 °ति )रोहति — c ) Ś1 V1 M1 2 तु ( for ता ) — d ) V1 कारुण्यात्तामवारयत्.

35 a ) D3 तु ( for च ) S1 तद्गर्भौ, V2 गर्भश्च, B2 Ds गर्भ: स ( for तं गर्भं ) — c ) K2 Ñ3 V1 महाभागा, K4 Ñ2 D1–3 T3 4 °भाग, V3 °राज, D2 °तेजा., D4 °भागं ( for °बाहु ) — d ) S1 Ñ2 V2 3 B2 3 D5 T1 सगरो नाम पार्थिव

36 a ) M3 तज् ( for तु ) G5 कर्माणि ( for -कर्मादि ) — b ) D6 T1 2 G1 3 5 M1 4 कृत्वा तस्य ( by transp ) — c ) D6 T2 G1 5 M4 वेदाञ्, T1 वेदं ( for वेद- ). K2 ( marg ) 4 Ñ2 3 V1 3 Dn D1 3 4 T3 4 अध्याप्य ( T4 °धीत्य ) वेदानाखिलास् ( Dn1 °लं ), D2 °प्य वेदान्प्रबलांस् — d ) D4 ततोऽस्त्रं प्रत्यपद्यत — e ) S1 Ñ2 3 V1 3 B Dn Ds D1 T1 4 आग्नेयं तु, D2 °यं सु, D5 T2 G1 3 5 °यास्त्रं ( for °यं तं ) K4 Ñ2 Dn1 D4 बाहुम्, Ñ3 Dn2 D1 3 5 -बाहुर्, V1 -भीमम्, B1 2 ( marg ) Ds T4 -घोरम् ( for -भागम् ). — f ) Ñ2 वासवैरपि दुर्जयम्.

37 a ) T3 4 स तेनाजौ स्ववीर्येण — b ) D4 स्वस्त्रेणैव ( for बलेन च ). K2 दुर्जयो देवदानवै — c ) K2 4 Ñ2 3 V D1–5 T3 4 हैहयास्तालजङ्घांश्च — d ) K2, 4 Ñ2 3 V D1–5 T3 4 जघ्ने ( for क्रुद्धो ) — After $37^{cd}$, T2 G1, 4 ins 208* — e ) K3 च लोके तु, V2 ततो लोके ( for च लोकेषु ).

38 a ) K1 च ( for स- ) — b ) T G M4 तदा ( for तथा ) — c ) V2 3 B Ds [अ]पि; D6 T1 2 G स ( for [ए]व ) Ñ1 पारदाश्चापि नि शेषान्, M1–3 बाल्हिकांश्चापि नि:° — d ) Ś1 K1 3 Dn किल, G4 M तदा ( for नृप )

39 c ) K2 4 Ñ2 3 V1 D1–4 T3 4 प्राप्ता ( for गत्वा ) — d ) K2 4 Ñ2 3 V1 D1 2 4 प्रणेमुस्तं ( V1 D2 °स्ते ) ( for प्रणिपेतुर् ) B3 Ds D6 T1 G3 5 मनीषिण, T4 महामुनिम् ( for मनीषिणम् ) D3 प्रणेमुस्तं मुनिं क्षणात्

40 Ś1 om $40^{ab}$ — a ) B2 3 Ds D6 T1 2 G1 3 5 M ऽपि ( for तु ) D3 सर्वान्, D6 T2 G1 5 M कृत्वा ( for दृष्ट्वा ). — b ) K2 समये तान् ( for °येन ) M4 महाद्युतिम् ( for

धर्मं जघान तेषां वै वेषान्यत्वं चकार ह ॥ ४१
अर्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत् ।
यवनानां शिरः सर्वं काम्बोजानां तथैव च ॥ ४२
पारदा मुक्तकेशास्तु पह्लवाः श्मश्रुधारिणः ।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ॥ ४३
शका यवनकाम्बोजाः पारदाश्च विशां पते ।
कोलिसर्पा माहिषका दर्वाश्चोलाः सकेरलाः ॥ ४४
सर्वे ते क्षत्रियास्तात धर्मस्तेषां निराकृतः ।
वसिष्ठवचनाद्राजन्सगरेण महात्मना ॥ ४५
स धर्मविजयी राजा विजित्येमां वसुंधराम् ।
अश्वं विचारयामास वाजिमेधाय दीक्षितः ॥ ४६
तस्य चारयतः सोऽश्वः समुद्रे पूर्वदक्षिणे ।
वेलासमीपेऽपहृतो भूमिं चैव प्रवेशितः ।
स तं देशं तदा पुत्रैः खानयामास पार्थिवः ॥ ४७

°द्युति ) —$^{d}$ ) $K_1$ ( *sup lin* as in text ) $D_2$ $M_3$ वरं ( for [अ]भयं ) $Ś_1$ तत ( for तदा )

41 $^{a}$ ) $T_4$ $M_4$ ता ( for स्वां ). $Ñ_1$ $V_{2,3}$ B Ds $M_{1\,2}$ तु ( for च ) —$^{b}$ ) $Ñ_1$ ह, $B_3$ तु ( for च ) —$^{c}$ ) $V_3$ $B_1$ $D_3$ तेषां च, $D_1$ वै तेषां ( by transp ) $M_{1\,2}$ तेषां जघान धर्मान्वै ( $M_1$ °र्मं वै ) —$^{d}$ ) $K_1$ तेषामन्यं, $Ñ_{1\,3}$ V $B_{1\,3}$ वेषानन्याश् ( for °न्यत्व ) $Ś_1$ च ( for ह ) $D_2$ वेषत्यागं चकार च

42 $^{b}$ ) $Ś_1$ $K_1$ $D_5$ $T_1$ मुण्डं कृत्वा ( for मुण्डयित्वा )

43 $^{a}$ ) $K_2$ V B Ds $D_{3\,6}$ $T_2$ $G_{1-3\,5}$ $M_4$ पा( $G_2$ दा )-रदान्मुक्तकेशांश्च ( $B_3$ $D_6$ $T_2$ $G_{1-3\,5}$ $M_4$ °स्तु ) —$^{b}$ ) $G_1$ corrupt $M_{1-3}$ बाह्लिका, some Mss पह्लवान् ( for पह्लवा ) $M_4$ पह्लवाञ्शस्त्रधारिण —$^{d}$ ) $Ś_1$ ( marg as in text ) महा-मुने, $K_{1\,3}$ °रथा ( for °त्मना )

44 $M_2$ om ( hapl ) 44–45 $M_{1\,3}$ om $44^{ab}$. —$^{b}$ ) $K_{2\,4}$ $Ñ_{2\,3}$ V $B_{2\,3}$ Ds $D_{1-5}$ $T_3$ पारदा पह्लवास्तथा —$^{c}$ ) $Ś_1$ $K_{1,3}$ कोलिस्पर्शा, $Ñ_1$ Dn कोलसर्पा, $D_{2\,6}$ काल°, $D_3$ काळशापाः, $T_2$ $G_{1\,2}$ तोळिसर्पा; $T_3$ काति°, $G_3$ कालि°, $M_4$ तोळिंसका ( for कोलिसर्पा ) $Ñ_2$ $V_{2\,3}$ $B_1$ Dn $D_{1-5}$ $T_{1\,3\,4}$ $G_4$ समहिषा, Ds $D_6$ $G_1$ माहिषि( $D_6$ °षी )का; $M_{1\,3}$ महिषका ( for माहि° ) $K_{2\,4}$ कौन्ति( $K_4$ कालि )सर्पा समहिषा —$^{d}$ ) $K_1$ $V_1$ Dn $D_{1-3}$ दार्वाश्, $Ñ_1$ Ds दर्पाश्, $Ñ_{2\,3}$ द( $Ñ_3$ दा )-र्दाश्; $D_{4,5}$ $T_{1,4}$ $G_4$ दार्घाश् ( for दर्वाश् ). $Ś_1$ खशै सह, $G_4$ सपह्लवा. ( for सकेरला ) $D_6$ अवाक्क्षोला सपह्लवा ; $T_2$ $G_1$ $M_4$ दर्पा· क्षोला ( $M_4$ दर्पाश्चोळा ) सपह्लवा, $T_3$ दाराश्चोरा सकेरला, $G_{2\,3\,5}$ दर्वा क्षोळा स( $G_3$ दर्पाक्षोलस )पह्लवा ; $M_{1\,3}$ दर्पाश्चोलाश्च पह्लवाः — After 44, $K_4$ ( first time ) $D_5$ ins 210*

45 $M_2$ om 45 ( cf v l 44 ) $D_2$ repeats 45 after 210* —$^{a}$ ) $T_2$ $G_1$ ते सर्वे ( by transp ) — $G_3$ om $45^{cd}$ $T_2$ repeats $45^{cd}$ after the repetition of 210* —$^{c}$ ) $D_6$ $T_{1\,2}$ ( both times ) $G_{1\,4\,5}$ $M_{1\,3}$ तात ( for राजन् ) — $K_{1-3\,4}$ ( second time ) $Ñ_{2,3}$ V B Dn Ds $D_{1\,3-5}$ $T_2$ ( first time ). $_{3,4}$ $G_4$ ins. after 45 : $K_4$ ( first time ) after 44 · $D_2$ after the first occurrence of 45 : $D_6$ $G_{2,3\,5}$ after $45^{ab}$ $T_2$ ( second time ) $G_1$ cont after 213*

210* खशास्तुषाराश्चीनाश्च मद्रा· किष्किन्धकास्तथा ।
कौन्तलाश्च तथा वङ्गा शाल्वा कौङ्कणकास्तथा ॥

[ ( L 1 ) Dn $D_{1\,3\,5}$ $T_2$ ( first time ) खशास्तुपाराश्ची-ना( $T_2$ °श्चोला )श्च, $D_4$ खशास्तुखारान्दरदान् ( for $^{a}$ ) $Ñ_2$ $V_3$ $B_1$ $D_6$ $G_{2-4}$ कैष्किन्ध( $G_{2\,3}$ °न्धि )कास्, $T_2$ ( second time ) रैवन्धिकास् ( sic ), $T_4$ कर्पन्ति° ( for किष्किन्ध° ) Dn $D_{1\,3\,5}$ $T_2$ ( first time ) मद्रान्किष्किन्धकास्तथा, $D_4$ मद्राश्च पुण्ड्रका-स्तथा, $G_1$ मद्राश्चैव डिशास्तथा ( for $^{b}$ ) — ( L 2 ) $K_1$ $D_{4\,5}$ कोशलाश्, $K_2$ $T_4$ कुन्त°, $B_1$ Dn Ds $T_2$ ( first time ) कौन्तलाश्, $D_3$ केरलाश्, $D_6$ $T_3$ $G_5$ कुन्तलाश् ( for कौन्तलाश् ) $Ñ_3$ $V_1$ तु ( for च ) $V_1$ [अ]म्बष्ठा, Dn $D_{1\,3}$ वङ्गान्, $D_4$ वीरान्, $T_3$ अङ्गा ( for वङ्गा ) $K_3$ शाल्वान्, $D_2$ शत्का ( for शाल्वा ) $K_2$ कुङ्कुणकास, $V_3$ कौङ्कण° ( for कौङ्कणकास् ) Dn $D_{1\,3}$ $T_2$ ( second time ) शा( $T_2$ सा )ल्वान्कोङ्कणकास्तथा, $G_1$ विन्ध्या कोङ्कणकास्तथा ( for $^{b}$ ) ]

46 $^{b}$ ) $Ñ_2$ $D_6$ [ए]नां ( for [इ]मां ) —$^{c}$ ) $K_{1\,3}$ $Ñ_3$ $V_{1\,3}$ $D_4$ $T_1$ $G_{3-5}$ $M_4$ वै, $Ñ_{1\,2}$ $V_2$ B Dn Ds $D_5$ $T_{3\,4}$ प्र-, $M_3$ हि ( for वि- ) $D_2$ $M_2$ अश्वं वै मोच( $M_2$ निश्चार )-यामास

47 $^{c}$ ) $K_3$ ऽथ ( for ऽप- ) —$^{d}$ ) $B_3$ भूमौ, Ds भूम्या ( for भूमिं ) — After $47^{cd}$, $K_4$ ( marg ) ins :

211* तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरंदर ।
हृत्वा कपिलपार्श्वे त बद्ध्वागान्नगरी पुन. ॥
सुमत्यास्तनया दक्षाः पितुरादेशकारिणः ।
तानि षष्टिसहस्राणि हयरक्षणतत्परा ॥

—$^{e}$ ) $G_3$ तान्देशास् ( for तं देशं ) $Ś_1$ $V_2$ $G_{1\,3}$ तथा ( for तदा ). —$^{f}$ ) $T_{3\,4}$ वीर्यवान् ( for पार्थिव ). $D_6$ शोधयामास पार्थिवः

48 $^{a}$ ) $K_1$ तत्र, $K_3$ $Ñ_1$ $V_{2\,3}$ B Dn Ds $D_5$ तदा ( for ततस् ). $D_6$ $T_2$ $G_{1\,3}$ $M_4$ आसेदुस्तत्र देशे तु —$^{b}$ ) $Ñ_1$ रसा-तले ( for महार्णवे ). —$^{c}$ ) $D_6$ -पूरुषं ( for -पुरुषं ) $B_1$ दिव्यं ( for देवं ) $K_{2-4}$ $Ñ_2$ Dn $D_{1\,2,4\,5}$ $T_{3,4}$ तमादिदेवं पुरुषं. —$^{d}$ ) $D_6$ $T_{1\,2}$ G विष्णुं ( for कृष्ण ) $Ś_1$ सनातनम् ( for

आसेदुस्ते ततस्तत्र खन्यमाने महार्णवे ।
तमादिपुरुषं देवं हरिं कृष्णं प्रजापतिम् ।
विष्णुं कपिलरूपेण स्वपन्तं पुरुषं तदा ॥ ४८
तस्य चक्षुःसमुत्थेन तेजसा प्रतिबुध्यतः ।
दग्धाः सर्वे महाराज चत्वारस्त्ववशेषिताः ॥ ४९
बर्हकेतुः सुकेतुश्च तथा बार्हद्रथो नृपः ।
शूरः पञ्चजनश्चैव तस्य वंशकरा नृप ॥ ५०
प्रादाश्च तस्मै भगवान्हरिर्नारायणो वरम् ।
अक्षयं वंशमिक्ष्वाकोः कीर्तिं चाप्यनिवर्तिनीम् ।
पुत्रं समुद्रं च विभुः स्वर्गे वासं तथाक्षयम् ॥ ५१
समुद्रश्चार्घ्यमादाय ववन्दे तं महीपतिम् ।
सागरत्वं च लेभे स कर्मणा तेन तस्य ह ॥ ५२
तं चाश्वमेधिकं सोऽश्वं समुद्रादुपलब्धवान् ।
आजहाराश्वमेधानां शतं स सुमहायशाः । C 794 B I 14 30 P I 14 30

प्रजापतिम् ) — [e] ) $D_6$ $T_1$ G $M_4$ कृष्णं ( for विष्णुं ) — [f] ) $K_{2\ 4}$ तपन्तं ( for स्वपन्तं ) $T_{3\ 4}$ तथा ( for तदा ) $K_{1\ 3}$ $B_{2\ 3}$ Dn Ds $D_4$ $G_{2\ 4}$ स्वपन्तं पुरुषोत्तमम्, $D_6$ $T_{1\ 2}$ $G_{1\ 3\ 5}$ °न्तं पुरुषर्षभम्, $M_{1-3}$ साक्षान्नारायणं तदा — After 48, $K_4$ ins :

212* हयमन्वेषमाणास्ते समन्तात्व्यखनन्महीम् ।
प्रागुदीच्या दिशि हय ददृशु कपिलान्तिके ॥
एष वाजिहरश्चोर आस्ते मीलितलोचन ।
हन्यता हन्यतां पाप इति षष्टिसहस्रिण ।
मुष्टिप्रहारैरहनन्नुन्मिमेष तदा मुनि. ॥ [5]

While $D_6$ $T_{1\ 2}$ G M ins after 48

213* स्रष्टारं सर्वभूताना साध्यं नारायणं तथा ॥
तस्य गत्वा समीपे तु सोऽय चोर इति ब्रुवन् ।
गृह्यता बध्यतामेष नोऽश्वहर्ता सुदुर्मति ॥
ततस्ते पाशमुद्यम्य ग्रहीतुं त महाद्युतिम् ।
उपाक्रामंस्तदा सर्वे सागरा कालचोदिता ॥ [5]

[ $T_1$ $M_{1-3}$ om ( hapl ) line 1 — ( L 1 ) $G_2$ साक्षान् ( for साध्यं ) $D_6$ $G_4$ तदा ( for तथा ) — ( L 2 ) $D_6$ समीप ( for °पे ) — ( L. 3 ) $G_4$ ग्रस्यता ( for गृह्य° ) $D_6$ भर्त्स्यतांम्, $G_{2\ 4}$ $M_4$ भक्ष्यताम् ( for बध्य° ) $G_3$ सोऽय ( for एष ) $T_2$ $G_{1\ 5}$ ऽश्व हृत्वा ( for ऽश्वहर्ता ) $G_{3-5}$ $M_4$ तु ( for सु- ) — ( L 4 ) $M_{2,3}$ ग्रहीतुं ते समुद्यता, $M_4$ om ( for [b] ) — $M_{1-3}$ om line 5 — ( L 5 ) $M_4$ उपक्रान्तास् ( for उपाक्रामस् ) ]

— After the above, $T_2$ ( second time ) $G_1$ cont 210*, which is followed in $T_2$ by the repetition of 45[cd] While $T_3$ ins after 48

214* ददृशु सागरा· सर्वे सायुधास्तं प्रदुद्रुवुः ।

49 [b] ) $K_{2-4}$ $V_1$ $D_2$ तेजसा प्रति( $K_4$ $D_2$ °त्य )बुध्यत, $D_6$ $G_5$ प्रत्य( $G_5$ °ति )बुध्यत तेजसा, $T_{1\ 2}$ $G_{1\ 3\ 4}$ $M_4$ प्रतिबुद्धस्य तेजसा — [c] ) Ś1 $K_{1\ 3}$ Dn $T_1$ $G_{2\ 5}$ ते वै ( for सर्वे ) — [d] ) $S_1$ तेऽव-, $K_1$ चाव-, $D_3$ त्वेव ( for त्वव- )

50 [a] ) Ś1 $K_{1\ 3}$ $V_2$ हर्षकेतुः, $D_{4\ 6}$ $T_2$ $G_{1\ 5}$ बर्हि° ( for बर्ह° ) — [b] ) $S_1$ K $\tilde{N}_{2\ 3}$ V Dn $Ds_2$ $D_{1-3}$ धर्मरथो, $D_{4\ 5}$ $T_{3\ 4}$ धर्मरतो ( for बार्हद्रथो ) — $B_3$ om ( hapl ) 50[cd] — [c] ) Ś1 कुरु ( for शूर. ) $\tilde{N}_1$ $V_3$ $B_{1\ 2}$ पञ्चनदश्, $G_{2\ 3\ 5}$ $M_{1\ 3\ 4}$ °वनश् ( for °जनश् ) $K_{2\ 4}$ $\tilde{N}_3$ $V_{1\ 2}$ Dn $D_{1-5}$ $T_3$ नाम ( for चैव ) $\tilde{N}_2$ शूर पञ्चबलो नाम — [d] ) $\tilde{N}_1$ $B_1$ Dn $Ds_2$ $D_{3\ 4}$ $T_{1\ 4}$ $G_{2\ 4}$ $M_{2-4}$ वशकरो ( for °करा ) $K_{1\ 4}$ $\tilde{N}_{2\ 3}$ $V_{1\ 3}$ $D_{1\ 2\ 6}$ नृपा, $K_2$ $T_3$ सुता, $\tilde{N}_1$ $V_2$ $B_1$ ऽभवन्; $T_4$ सुत ( for नृप ) — After 50, $T_3$ ins

215* अंशुमन्तं तदाज्ञाप्य पात्रमश्वार्थमच्युतम् ।
प्रतीक्षमाणस्तत्रैव दीक्षित संव्यतिष्ठत ॥
पितॄणा पदवी गत्वा स ददर्श हरिं प्रभुम् ।
मूर्ध्ना प्रणम्य तं देव प्रह्वीभावेन चास्थित ॥

51 [a] ) $K_{2\ 4}$ $\tilde{N}_3$ $V_1$ $D_{1-4}$ स तस्मै, $\tilde{N}_2$ $V_3$ तस्मै स ( for च तस्मै ) — [b] ) Ś1 $K_{1\ 3}$ Dn $D_{3\ 4}$ $T_4$ $G_2$ वरान् ( for वरम् ) — [c] ) $T_2$ अक्षय्यं ( for °यं ) — For 51[abc], $T_3$ subst

216* तत. स भगवान्देवो दत्त्वा चाश्वं वरं ददौ ।
सगराय महाराज

— [d] ) Ś1 [अ]स्य ( for [अ]पि ) $K_{2\ 4}$ [अ]तिवर्तिनीम्, $K_3$ Dn [अ]नपायिनीम्, $D_{4\ 5}$ $T_3$ $G_4$ [अ]निवर्तनीम्, $D_6$ $T_2$ $G_{1-3\ 5}$ $M_4$ [अ]विनाशिनीम्, $T_1$ damaged ( for [अ]निवर्तिनीम् ) — [e] ) $S_1$ प्रभु, $D_3$ $M_{1-3}$ विभु ( for विभुः ) — [f] ) $K_{3\ 4}$ $\tilde{N}$ Dn $Ds_2$ $D_{2\ 3\ 5\ 6}$ $T_{1\ 3\ 4}$ $G_{2-4}$ स्वर्ग- ( for स्वर्गे ) $K_2$ कुलम् ( for [अ]क्षयम् ) — After 51, $K_3$ Dn $T_3$ ins

217* पुत्राणा चाक्षयाल्लोकांस्तस्य ये चक्षुषा हता ।

52 [a] ) $D_6$ [अ]श्वम्, some Mss [अ]र्घम् ( for [अ]र्घ्यम् ) — [b] ) Ś1 ह ( for तं ) — [c] ) Ś1 तदा लोके, $K_1$ $D_1$ $M_4$ तदा ( $M_4$ °तो ) लेभे, $B_2$ च लेभे वै ( for च लेभे स ) — [d] ) Ś1 $V_2$ $Dn_2$ M तस्य तेन ( by transp ) Ś1 $K_{1\ 3}$ $B_{2\ 3}$ Dn Ds $G_{2-4}$ वै; $G_1$ स·, $M_4$ हि ( for ह )

53 [b] ) $D_6$ $T_{1\ 2}$ G $M_4$ समुद्राल्लब्धवांस्तथा ( $D_6$ $T_1$ $G_{3\ 5}$ °दा ) — [d] ) $D_6$ $T_2$ G $M_4$ शतानि ( for शतं स ) $K_2$ तु; $V_2$ च ( for सु- ) $M_{1-3}$ -महाबलः ( for °यशाः ) — [e] ) Dn Ds $D_1$ तु ( for च ) $K_2$ सहस्राणां ( for °णि ) — [f] ) $K_{1-3}$

पुत्राणां च सहस्राणि षष्टिस्तस्येति नः श्रुतम् ॥ ५३

जनमेजय उवाच ।

सगरस्यात्मजा वीराः कथं जाता महाबलाः ।
विक्रान्ताः षष्टिसाहस्रा विधिना केन वा द्विज ॥ ५४

वैशंपायन उवाच ।

द्वे भार्ये सगरस्यास्तां तपसा दग्धकिल्बिषे ।
और्वस्ताभ्यां वरं प्रादात्तन्निबोध नराधिप ॥ ५५
षष्टिं पुत्रसहस्राणि गृह्णात्वेका तरस्विनाम् ।
एकं वंशधरं त्वेका यथेष्टं वरयत्विति ॥ ५६
तत्रैका जगृहे पुत्राँल्लुब्धा शूरान्बहूंस्तथा ।
एकं वंशधरं त्वेका तथेत्याह ततो मुनिः ॥ ५७
राजा पञ्चजनो नाम बभूव सुमहाबलः ।
इतरा सुषुवे तुम्बं बीजपूर्णमिति श्रुतिः ॥ ५८
तत्र षष्टिसहस्राणि गर्भास्ते तिलसंमिताः ।
संबभूवुर्यथाकालं ववृधुश्च यथासुखम् ॥ ५९
घृतपूर्णेषु कुम्भेषु तान्गर्भान्निदधुस्ततः ।

Ñ2 V2 D1–4 षष्टिं (for षष्टिस्) M1 3 श्रुति. (for श्रुतम्) —After 53, D6 ins 218* While N (except Ś1 K1 Ñ1) T3 4 M4 ins (D6 after 218*) an addl colophon [ *Mention of the Epic* K3 Dn Ds2 T3 M4 —*Mention of Khila* K3 V3 B Dn Ds1 D1–4 6 M4 —*Adhy name* K2 Ñ2 V3 Ds2 D1–4 स(Ñ2 सा)गरोत्पत्तिः, K3 4 Ñ3 V1 2 B2 3 Ds1 D5 स(K3 सा)गरोत्पत्तिचरितम्, B1 सगरोपाख्यानम् —*Adhy no* K3 Ñ3 D1 4–6 T3 4 12, V1 D3 13, V2 3 B2 Dn Ds2 14]

54 $^{a}$) K2 4 Ñ2. 3 V1 D1 3 4 6 T1 2 G M1 4 विप्र; D2 पुत्रा., M2 ब्रह्मन् (for वीरा) —$^{b}$) K3 Dn D5 G4 महात्मन. (for °बला·) —$^{c}$) T1 M1 2 -साहस्रं, G3 5 -पुत्रा हि (for -साहस्रा) G4 विक्रान्तं षष्टिसाहस्रं —$^{d}$) M1 2 निहता (for विधिना) K1 ते; D6 T1 2 G1 3 5 M4 वै (for वा) M3 निहना केन वा हता.

55 D6 om $55^{ab}$ K Ñ2 3 V B Dn Ds D1–5 T3 4 G1. 4 ins after $55^{ab}$. D6 after 53

218* ज्येष्ठा विदर्भदुहिता केशिनी नाम विश्रुता ।
कनीयसी तु या तस्य पत्नी परमधर्मिणी ।
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ॥

[(L. 1) T3. 4 G1 4 सुकेशी (for केशिनी) V2 B1 2 Ds D6 नामत, B3 भारत (for विश्रुता). —(L 2) K1 3 Dn सा तस्य, V2 B Ds महती (for या तस्य). T4 सती (for पत्नी) K1 -रूपिणी, K2 -धर्मिण, K3 -धार्मिका (for -धर्मिणी). C*sp* ईलिनी नाम नामत (for $^{b}$) ❀ Cs कनीयसी पत्नी ईलिनीसञ्ज्ञा । ❀]
—$^{c}$) K3 भृगुपुत्रो, Ñ1 V2 B1 2 Ds और्वस्तयोर् (for °स्ताभ्यां) —$^{d}$) K2–4 V3 Dn D1 4 6 T1 3 4 G2–5 M4 जनाधिप; Ñ1 V2 B Ds नरोत्तम; Ñ2 जनेश्वर; M3 नरर्षभ (for नराधिप).

56 $^{a}$) G1 षष्टि-; G4 षष्टिः (for षष्टिं) K2 D6 T1. 2 G2–5 -सहस्राणां (for °स्राणि). —$^{b}$) K3 D3 4 कुलं विना; Ñ2 D1 तपस्विनाम्, Ñ3 V2. 3 B Dn D5 6 T2–4 G M4 तपस्विनी; Ds D2 तरस्विनी, T1 मनस्विनी (for तरस्विनाम्) —$^{c}$) K4 D2–4 वंशकरं (for °धरं) K2 3 G4 चैका, M4 चैव (for त्वेका) D6 T1 2 G1 3 5 एकं वंशकरं चैका (T1 °व, G5 °कं) —$^{d}$) G4 यदिष्टं (for यथेष्टं) D5 यथेष्ट वरवर्णिनी

57 $^{a}$) Ś1 लुब्धा; K3 Dn शूराँल्ल् (for पुत्राँल्ल्) —$^{b}$) Ś1 K1 3 Dn पुत्राँल्ल्, K2 D1 लब्धा, Ñ अन्यान्, V1 Ds1 D4 6 T1 G2 3 M1 4 लुब्धान्, V3 T4 G4 M3 लब्ध्वा, D2 उच्चान्, D3 युद्ध-, T3 G1 (*sup lin*) लब्धान्, T3 चण्डान्, G1 वीरान् (for लुब्धा) Dn1 लब्धा, Dn2 लुब्धा (for शूरान्) V2 तथा बहून्, D6 G5 M1 बहूंस्तदा (for °स्तथा) —$^{c}$) V2 D6 T1 2 G1 5 M वंशकरं (for °धरं) K3 G3 चैका, M4 चैव (for त्वेका) —$^{d}$) K1–3 D1 3 4 T2 G1 3 5 M च तैर्, B2 3 Ds T3 महा-, Dn D5 T1 4 G2 4 च तां, D6 च वै (for ततो) —After 57, Ñ2 3 B1 2 Dn Ds D5 ins :

219* केशिन्यसूत सगरादसमञ्जसमात्मजम् ।

58 M2 om $58^{ab}$ —$^{a}$) D6 T2 G1 एक (for राजा) Ñ1 पञ्चनदो; Ñ2 °बलो; V2 D2 G2–5 M3 4 °वनो, T4 समञ्जसो (for पञ्चजनो) —$^{b}$) Ś1 बभूव च; K2 4 Ñ2 3 V1 3 D1 2 4 5 स बभूव, Dn Ds1 G4 बभूव स (for °व सु-) Ñ1 -महाद्युति, D6 T1 2 G1 3 M4 महायशा (for °बलः). V2 B1 बभूव स महाद्युति· —$^{c}$) K2 Ñ2 3 V B Dn Ds D1. 2 5 6 T1 3. 4 G2 तुम्बीं (for तुम्बं) —$^{d}$) K2 3 Ñ V B Dn Ds D2. 5 T G2 4 5 -पूर्णाम् (for पूर्णम्)

59 $^{a}$) Ś1 K1 तत्र षष्टिं, Ñ3 V1 M1 तत. षष्टि-, B3 Ds D3 तत्र षष्टि, D2 षष्टिं पुत्र (for तत्र षष्टि-) — B3 om (hapl) $59^{b}$–$62^{a}$. —$^{b}$) T3 G1 गर्भास्तेनैव निर्मिताः. —$^{d}$) Ś1 K1 3 Dn T4 G3 यथाक्रमम् (for °सुखम्).

60 B3 om 60 (cf v l 59) G2 om. (hapl) $60^{a}$–$61^{b}$ —$^{a}$) M1–3 कुण्डेषु (for कुम्भेषु) —$^{b}$) V3 B1. 2 D6 T1 2 G1 M4 निदधे (for °धुस्). K2 4 Ñ2 3 V1 3 Ds2 D1. 2. 4. 5 G1 तदा, D3 T2 तथा, M1–3 स्त्रियः (for तत.). Dn

धात्रीश्चैकैकशः प्रादात्तावतीः पोषणे नृप ॥ ६०
ततो दशसु मासेषु समुत्तस्थुर्यथाक्रमम् ।
कुमारास्ते यथाकालं सगरप्रीतिवर्धनाः ॥ ६१
षष्टिः पुत्रसहस्राणि तस्यैवमभवन्नृप ।
शुक्रादलाबुमध्याद्वै जातानि पृथिवीपतेः ॥ ६२
तेषां नारायणं तेजः प्रविष्टानां महात्मनाम् ।
एकः पञ्चजनो नाम पुत्रो राजा बभूव ह ॥ ६३
सुतः पञ्चजनस्यासीदंशुमान्नाम वीर्यवान् ।
दिलीपस्तस्य तनयः खट्वाङ्ग इति विश्रुतः ॥ ६४
येन स्वर्गादिहागत्य मुहूर्तं प्राप्य जीवितम् ।
त्रयोऽभिसंधिता लोका बुद्ध्या सत्येन चानघ ॥ ६५
दिलीपस्य तु दायादो महाराजो भगीरथः ।
यः स गङ्गां सरिच्छ्रेष्ठामवातारयत प्रभुः ।
समुद्रमानयच्चैनां दुहितृत्वे त्वकल्पयत् ॥ ६६
भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः ।
नाभागस्तु श्रुतस्यासीत्पुत्रः परमधार्मिकः ॥ ६७
अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताभवत् ।
अयुताजित्तु दायादः सिधुन्द्वीपस्य वीर्यवान् ॥ ६८ C 814 B I 15 18 P I 15. 18

G3 तान्गर्भान्निदधे पिता —$^{c}$) T2 3 G3 धात्री (for धात्रीश्च्) —$^{d}$) D2 तावन्ती, T1 2 °तां, T3 4 तेषा वै, G3 तावतीं (for °ती.) K1 3 Dn तावतीरेव पोषणे

61 B3 om 61 (cf v l 59) G2 om $61^{ab}$ (cf v l 60) —$^{b}$) K4 संबभूवुर् (for समुत्तस्थुर्) K2 Ñ2 3 V1 3 D T G1 3–5 M4 -सुखम् (for क्रमम्) —$^{c}$) M1 2 सागरास् (for कुमा°). K2 यथाकाले, V2 °काम, D3 °न्यायं (for °कालं) D6 T1 2 G M4 ववृधुश्च कुमारास्ते

62 B3 om $62^{a}$ (cf v l 59) —$^{a}$) Ś1 K1 3 Ñ1 V2 3 Dn2 D1 4 षाष्टिं; K2 4 D2 3 6 षष्टि- (for षष्टि) —$^{b}$) B2 प्राभवन् (for अ°) T3 4 तथा समभवन्नृप —$^{c}$) Ñ2 V2 3 B Dn Ds1 (marg as in text) 2 T2 G1 4 गर्भाद्, some Mss शुक्लाद् (for शुक्राद्) —$^{d}$) T4 जाता हि (for जातानि) Ñ2 D2 -तले (for -पते)

63 $^{c}$) Ñ1 पञ्चनदो, Ñ2 °बलो, G2–5 M °वनो (for °जनो) — After 63, D6 T2 G1–3. 5 M3 ins

220* असमञ्ज इति प्राहुस्तस्य पुत्रोऽशुमानभूत् ।

[G3 ख्यातस् (for प्राहुस्) D6 G2 M3 असमञ्जेति य प्राहुस (for $^{a}$)]

64 $^{a}$) Ś1 अत, M4 तत· (for सुत·) Ñ1 -नदस्य, Ñ2 -बलस्य; T2 G1–4 M -वनस्य (for -जनस्य) K4 [अ]भूद् (for [आ]सीद्) —$^{b}$) D6 T1–3 G1–3 M1 2 कीर्तिमान् (for वीर्यवान्) —$^{c}$) Ś1 K Ñ2 3 V1 B1 Dn Ds1 D1–5 T3 4 G2–4 दिलीपस्तनयस्तस्य· —$^{d}$) K2 स श्रुतः, Ñ1 विश्रुति, T3 न. श्रुत (for विश्रुतः) D4 खड्वाङ्गस्तस्य चात्मजः

65 Ñ1 repeats 65 after $73^{cd}$ —$^{a}$) Some Mss [आ]गम्य (for °त्य) —$^{c}$) Ś1 T1 हि, K1 3 Ñ1 (second time) Dn D4 G2–4 ऽनु- (for ऽभि-) B3 -संहिता, G5 -संस्थिता (for -सधिता) T2 G1 त्रयो हि संभृता लोका —$^{d}$) G1 मिथ्या, G2 (inf lin.) धृत्या (for बुद्ध्या) Ñ1 (second time) D5 6 G4 M4 सत्त्वेन (for सत्येन) K2 वानघ, D2 वा तथा, T3 भारत (for चानघ)

66 $^{a}$) Ñ2 3 V1 च (for तु) —$^{b}$) K4 Ñ2 3 V1 D2 3 महान्राजा, D1 °तेजा, G3 °भागो (for °राजो) —$^{c}$) K3 स गङ्गां यः, T1 य स्वर्गङ्गां (for य स गङ्गां) —$^{d}$) Ñ2 V3 समवातारयत्प्रभु — After $66^{cd}$, N (except Ś1 Ñ1) T2–4 G1–3 5 ins.

221* कीर्तिमान्स महाभाग· शक्रतुल्यपराक्रम· ।

[K1 3 Dn सु-, V3 B1 वै (for स) T4 महाप्राज्ञ (for °भाग)]

—$^{e}$) T1 [ए]तां (for [ए]नां) —$^{f}$) K1 D4 6 T2 G1 5 M4 [ऽ]प्यकल्पयत्, Ñ1 2 V3 च कल्पयत् (Ñ2 V3 °यन्), M1–3 चकार ह (for त्वकल्पयत्) K2 Ñ3 V1 B Ds D5 T1 3. 4 G2 4 दुहितृत्वेन कल्पयत् (K2 B1 Ds D5 °यन्); K4 D2 °त्वमकल्पयत् D3 °त्वेन कल्पिताम् — After 66, N (except Ś1 Ñ1) T2–4 G M4 ins

222* तस्माद्भागीरथी गङ्गा कथ्यते वंशचिन्तकै ।

[V2 कीर्त्यते (for कथ्यते) K4 D2 धर्म-, D3 तत्त्व- (for वश-) K3 -कीर्तनै, D6 T3 G1–3 5 M4 -कोविदै (for °चिन्तकै)]

67 $^{a}$) K2 जातः (for राजा) D3 भगीरथस्ततो राजा — K4 om $67^{cd}$ K1 reads $67^{c}$–$71^{b}$ on marg (sec m) —$^{c}$) K1 N3 नाभागस्य (for °गस्तु) Ñ3 (marg) V1 सुतस्तस्य, Ñ3 (also) सुतस्यासीत् (for श्रु°) T1 नाभाग इति तस्यापि

68 $^{a}$) Ś1 नाभाग, D6 T1 2 G M °गात् (for °गिः) K4 श्रुतस्य पुत्रो नाभोऽभूत् —$^{b}$) Dn D2 6 T1 2 G M4 सिन्धुद्वीपस्ततो (Dn1 °पो यतो) ऽभवत् — G2 om (hapl) $68^{cd}$ —$^{c}$) D6 T2–4 G4 M अयुतायुस् (for °ताजित्). G1. 3 5 अयुतायु. (G1 °योः) सुतस्त्वासीत्

अयुताजित्सुतस्त्वासीदृतपर्णो महायशाः ।
दिव्याक्षहृदयज्ञो वै राजा नलसखो बली ॥ ६९
ऋतपर्णसुतस्त्वासीदार्तपर्णिर्महीपतिः ।
ख्यातः कल्माषपादो वै नाम्ना मित्रसहोऽभवत् ॥ ७०
कल्माषपादस्य सुतः सर्वकर्मेति विश्रुतः ।
अनरण्यस्तु पुत्रोऽभूद्विश्रुतः सर्वकर्मणः ॥ ७१
अनरण्यसुतो निघ्नो निघ्नपुत्रौ बभूवतुः ।
अनमित्रो रघुश्चैव पार्थिवर्षभसत्तमौ ॥ ७२
अनमित्रस्तु धर्मात्मा विद्वान्दुलिदुहोऽभवत् ।
दिलीपस्तस्य तनयो रामस्य प्रपितामहः ।

---

69 $^{a}$) K2 G4 च (for तु) D6 T G1 2 4 5 M अयुतायु- (T2–4 G1 °यो )सुतस्त्वासीद् — $^{b}$) Ś1 दृढपर्णो, V3 भूत°, some Mss ऋतु° (for ऋत°) D6 पुत्र परमधार्मिक ❀ Cs ऋतपर्ण· । ऋतानि पर्णानि अक्षज्ञानविषये विभीतकस्य नलाग्रे प्रदर्शितानि, येन स ऋतपर्ण । न तु ऋतुपर्ण इति । तन्नाम अग्रे तत्पुत्रस्यापि आर्तपर्णिरित्यपत्यप्रत्ययेन प्रदर्शनात् । ❀ — $^{c}$) V3 ऽसौ (for वै) — $^{d}$) K2 G1 -सखा (for -सखो) T3 M4 ऽभवत् (for बली)

70 $^{a}$) D4 च (for तु) — $^{b}$) K3 D4 आर्तपाणिर्, V1 आर्तिपर्णिर्, G2 4 आर्तपर्णी, M1 3 °पर्णो, M4 गदापाणिर् (for आर्तपर्णिर्) K2 4 Ñ V B Ds D1–3 6 T2–4 G M4 महायशा (for महीपति·) D5 आसनो नाम पार्थिव — After $70^{ab}$, K1 2 4 Ñ2 3 V B Dn Ds D2 6 T2–4 G M4 ins

223* सुदासस्तस्य तनयो राजा इन्द्रसखोऽभवत् ।
सुदासस्य सुतस्त्वासीत्सौदासो नाम पार्थिव ॥

[ B1 om line 1 — (L 1) Ds सुदासस्य तु तनयो, T2 सुदास स सुतस्त्वासीद् (for $^{a}$) K2 4 इन्द्रसखा, Ñ2 V1 हीन्द्र-सखो, Ñ3 T3 4 G2 4 त्विन्द्र°, V3 हीन्द्रगुरवो, B2 (marg) चेन्द्रसखो; T2 G1 3 5 मित्रसखो (G3 °हो) (for इन्द्र°) — (L 2) Ñ2 V3 G4 प्रोक्त (for त्वासीत्) T2 G1 विश्रुत (for पार्थिव) ]

— $^{c}$) T1 जात· (for ख्यात·) Ñ1 B1 ऽभूद (for वै) — $^{d}$) K4 Ñ2 3 V B2 (marg as in text) 3 Ds D1–5 राजा (for नाम्ना) D6 T1–3 G1 2 5 -सखो (for सहो) Ś1 K1 3 तथा (for ऽभवत्). — K1 4 Ñ3 D3 ins after 70 Ñ2 V1 3 B3 after $73^{ab}$ V2 after $73^{cd}$

224* वसिष्ठस्तु महातेजा क्षेत्रे कल्माषपादके ।
अश्मकं जनयामास इक्ष्वाकुकुलवृद्धये ॥

[ L 1) K1 -पादजे, K4 V2 -पादिके (for -पादके) — (L. 2) V3 B3 अर्भक (for अश्मक) ]

K1 Ñ2 V B3 Ds cont

225* अश्मकाच्चैव कारूषो मूलकस्तत्सुतोऽभवत् ।
मूलकस्यापि धर्मात्मा राजा शतरथोऽभवत् ॥
तस्माच्छतरथाज्जज्ञे राजा ऐलबिलो बली ।
आसीदैलबिल. श्रीमान्वृद्धशर्मा प्रतापवान् ॥
दलस्तस्यात्मजश्चापि ततो जज्ञे शलो नृप ।
ऊर्णो नाम स धर्मात्मा शलपुत्रो बभूव ह ॥

[ (L 1) Ñ2 अश्मकोऽपि हि रूक्षाया, V1 अश्मकोभिरुत्काय (sic) V2 3 B3 अर्भ(V2 °श्म)कात्कारुषाया च, Ds अश्म-कात्पश्चिकाया तु (for $^{a}$) V2 पूर्णकस, Ds पुलकस् (for मू°) Ñ2 V1 3 B3 पूर्ण(Ñ2 पुल)कस्तु ततोऽभवत् (for $^{b}$) — (L. 2) Ñ2 पुलुकस्य, V B3 पूर्ण°, Ds पुल° (for मूल°) Ñ2 V1 3 B3 जात शतरथ सुत (for $^{b}$) — (L 3) Ds1 ऐलवियो (for °बिलो) — (L 4) Ñ2 V B3 ऐलबिलाच् (for °बिल) Ñ2 V1 3 B3 वृद्धश्रवा (for °शर्मा) — Ñ2 V1 3 B3 ins after line 4 V2 Ds (both second time) after line 8 of 230*

225A* पुत्रो विश्वसहस्तस्य पितृकन्या व्यजायत ।

— V1 B, om lines 5–6, Ñ2 V3 read them after line 8 of 230* — (L 5) Ñ2 V3 चैव (for चापि) Ñ2 V3 गलो (for शलो) — (L 6) Ñ2 V3 गल- (for शल-) — After line 6, Ñ2 V3 ins

225B* रजो नाम सुतस्तस्य शङ्खलस्तस्य चात्मज ।]

— After the above, V2 Ds2 read 72, repeating it in its proper place

71 Ñ2 om (hapl) $71^{cd}$ — $^{c}$) K2 4 Ñ3 V1 3 D1–4, 6 च (for तु) K3 Dn वै (for ऽभूद) — $^{d}$) T3 4 विख्यात· सर्वकर्मणि

72 Ñ1 om (hapl) 72, V2 Ds2 read it for the first time after 225* Ds2 (second time) om $72^{ab}$ Ds1 reads 72 twice. — $^{a}$) Ś1 राजा (for निघ्नो) V2 Ds1 (both first time) s° तस्य निघ्नो निघ्नतश्च, T1 तस्य पुत्रस्तु वै निघ्नो — Ś1 om (hapl) $72^{b}$–$73^{a}$ — $^{b}$) V2 Ds (all first time) द्वौ पुत्रौ तु, B2 निघ्नतो द्वौ, D6 T1 2 4 G1 2 4, 5 M निघ्नस्य द्वौ (for °पुत्रौ) — K1 ins after 72; V2 Ds after the second occurence of $72^{cd}$

226* अनमित्रसुत स्तम्ब. शङ्खणस्तस्य चात्मज ।
[ K1 शिखिनस् (for शङ्खणस्). ]

— After the above, V2 Ds (both first time) ins 230* While after 72, K4 ins 230A*.

73 Ś1 om $73^{a}$ (cf v 1 72) G4 om (hapl) $73^{ab}$. — $^{a}$) Ñ1 अनरण्यसुतो राजन्; B Ds अनमित्रसुतो राजा (B3 °जन्). — $^{b}$) Ñ2 3 बलिदुहो, D1 दुहि°; D2 नदुलिहो, D3 दुहि·

**भूयः सिद्धिमनुप्राप्ताः स्थानं प्राप्स्यन्ति शाश्वतम् ॥ ८**
**एवं धर्मे च ते बुद्धिर्भविष्यति पुनः पुनः ।**
**योगधर्मे च निरतः प्राप्स्यसे सिद्धिमुत्तमाम् ॥ ९**
**योगधर्माद्धि धर्मज्ञ न धर्मोऽस्ति विशेषवान् ।** C 1032 B 1. 19. 18 P 1. 19 18

— Dn D5 repeat $9^{cd}$ after 282* — $^{c}$) G3 **हि** (for **च**) K1 3 Dn D5 (last three both times) T1 **निरत** (for **निरतः**) — $^{d}$) S1 K3 T1 3 4 G3 **बुद्धिम्** (for **सिद्धिम्**) — K1 (marg ) 2–4 Ñ2 3 V B Ds D1–4 6 T G1 3 4 ins after 9 Dn D5 after the first occurrence of $9^{cd}$

281* योगो हि दुर्लभो नित्यमल्पप्रज्ञै कदाचन ।
लब्ध्वापि नाशयन्त्येन व्यसनै कटुतामिता ॥
अधर्मेष्वेव वर्तन्ते अर्दयन्ते गुरु सदा ।
याचन्ते न त्वयाच्यानि रक्षन्ति शरणागतान् ।
नावमन्यन्ति कृपणान्माद्यन्ते न धनोष्मणा ॥
युक्ताहारविहाराश्च युक्तचेष्टा. स्वकर्मसु ।
ध्यानाध्ययनयुक्ताश्च न नष्टानुगवेषिण ॥
नोपभोगरता नित्यं न मांसमधुभक्षणा ।
न कामपरमा नित्य न विप्रासेविनस्तथा ॥
नानार्थसंकथासक्ता नालस्योपहतास्तथा ।
नात्यन्तमानसंसक्ता गोष्ठीषु निरतास्तथा ।
प्राप्नुवन्ति नरा योगं योगो वै दुर्लभो भुवि ॥
प्रशान्ताश्च जितक्रोधा मानाहंकारवर्जिता ।
कल्याणभाजनं ये तु ते भवन्ति यतव्रता. ॥
एवंविधास्तु ते तात ब्राह्मणा ह्यभवंस्सदा ।
स्मरन्ति ह्यात्मनो दोषं प्रमादकृतमेव तु ।
ध्यानाध्ययनयुक्ताश्च शान्ते वर्त्मनि संस्थिता ॥

[(L 1) D6 राजन् (for नित्यम्) G1 योगा हि दुर्लभा नित्यम् (for $^{a}$) K1 न साध्यते, K2 B3 कथचन (for कदा°) — (L 2) D3 4 लब्धो (for लब्ध्वा) K3 [ए]त, K4 [अ]न्ये, Ñ2 [ए]ते, Ñ3 V1 D3 [ए]व, V2 [ए]न (for [ए]न) K2 3 D2 व्यसनैरप( K2 °नै पटु )तापिता, K4 °नै कृटलापना, Ñ3 D1 G3 4 °नै कटुतापिता (D1 °न), Ds1 (*inf lin*) वचनैर्बहुतामिता, D3 विषयेषु सुकामिन, D4 व्यसनै कटुवासिता, D5 °नै कवचैर्हता, T2 °नै कटुवापिता, T3 °नै. कटुताडिता ; G1 °नै कुलवापिना (for $^{b}$) — (L 3) D3 T G1 3 स्वकर्मेषु (for अ°) D1 च (for [ए]व) B3 D2 अर्दयन्ति ; Dn प्रार्दयन्ते, D3 आर्द्रि°, D4 अर्दयन्तो, T1 2 4 G1 3 4 अर्चयन्ति (for अर्दयन्ते) Ñ3 V1 B1 D6 T3 गुरून्सदा, B2 गुरूनपि (for गुरुं सदा) K1 अर्दयन्ति गुरु तथा, Ds °न्ति गुरून्सदा, D5 मर्दयन्ते गुरून्सदा (for $^{b}$) — (L 4) D2 च, D3 [ए]व (for तु) K1 याचन्ते चैव याच्यापि, T3 °न्ते सत्त्वया वाचा (for $^{a}$) — (L 5) K3 V3 Dn D5 T1 -जानन्ति (for -मन्यन्ति) Dn माद्यन्ति (for °न्ते) — (L 6) D3 6 T4 -विहारग्, Ñ3 -चेष्ट (for -चेष्टा) Ñ2 B2 3 Ds D3 6 च कर्मसु, V2 ह्यक° (for स्वक°) — (L 7) D4 -निष्ठाश् (for युक्ताश्) D2 ध्यानाध्यापनयुक्ताश्च (for $^{a}$) Ñ2 V B2 T3 4 G1 नष्टार्थ- D2 नित्यानु- (for नष्टानु-) D4 गुण्यान्गुण्यगवेषिण, T2 न नष्टार्थगवेषणा, G3 °र्थमपेक्षिण (for $^{b}$) — (L 8) K1 2 D1 -भक्षिण, Ñ3 V1 T2–4 G1 3 -भक्षका (for °णा) — (L 9) K3 अकाम- (for न काम-) K1 D3 5 T1 न च कामपरा नित्य (for $^{a}$) K1 3 न निद्रासेविनस्तथा, B1 (marg as above) 2 3 D6 न विप्रोत्सादिनस्तथा, D1 4 न प्रियासेविनस्तथा, D3 अविप्रा° (for $^{b}$) — D3 om (hapl) lines 10–11 — (L 10) K4 न भार्या-, V1 नाकार्य-, D4 नानार्थ- (for नानार्थ-) V2 नानार्थसगमासक्ता, T2–4 G1 3 न चार्थ( T4 भार्या )सगमासक्ता (for $^{a}$) — (L 11) K1 corrupt, Dn D6 [अ]त्यन्त (for °न्त-) Ñ3 -सक्ता वै, Dn2 -सत्सक्ता (for -ससक्ता) K2 4 न ह्यर्थे सा-( K4 °र्थमा )नुपक्ता वै, K3 न ह्यनर्थसमायुक्ता, Ñ2 3 (marg) V न क्षुत्( V1 लवुत् )ग्गानुस( V1 °र )क्ता वै, B3 D5 न क्षुद्रमनुसक्ता वै, Ds1 D2 न व्रतमनुपक्ता वै, Ds2 (*sup lin*) नात्यन्तपानसक्ता वै, D1 नानुत्तमानुषक्ता वै, D4 न ह्यर्थमानसक्ता वै, T1 G3 नान( G3 °त्य )र्थमनुषक्ता वै, T2–4 G1 4 न ह्यर्थमनुपक्ता वै (for $^{a}$) K3 Ñ2 3 V3 B1 Dn1 D6 [अ]निरताम्, D5 [अ]भि° (for निरतास्) G3 सदा (for तथा). — (L 12) D4 प्राप्नुवन्ते नरा योगान् (for $^{a}$) T2 ऽपि, T4 ऽय (for वै) — (L 13) D2 जितकामा (for प्रशान्ताश्च) Ñ2 प्रशान्ता जितक्रोधाश्च (for $^{a}$) — (L 14) V2 कल्याण B2 T2 G3 -भाजना, T4 -भाजिनो (for -भाजन) D6 यत्तु (for ये तु) D3 कल्याण भजमान ये (for $^{a}$). K2 स-, Ds2 T1 G3 ये (for ते) Ds तरन्ति, D3 भजन्ति (for भवन्ति) K4 दृढव्रता, D2 4 जित°, D6 वृत° (for यत°) — (L 15) Ñ3 च (for तु) T1 ये (for ते) T3 ब्राह्मण्या (for ब्राह्मणा) K2–4 D1 2 T1 2 G1 सदा (for तदा) — (L. 16) D1 स्मरन्तो (for °न्ति) V2 प्रमाद, B2 °दात् (for °द-). T1 2 4 G1 3 4 तत् (for तु) — (L 17) V1 D3 शान्त-, T1 शान्ति-, G1 कान्ते (for शान्ते) D4 धर्मणि (for वर्त्मनि) Ds1 सस्तुता, D3 सुस्थिता (for स°) ]
Dn D5 cont

282* शान्ति ते परमामाशु लभन्ते नात्र संशय ।
तस्मात्त्वमपि धर्मज्ञ योगधर्मपरो भव ॥

— After the above, Dn D5 repeat $9^{cd}$

10 $^{a}$) Ñ3 **धर्माद्वै**, V2 **°च्च**, G2 **°र्थं-** (for **°द्धि**). — Before $10^{c}$, T4 ins **सनत्कुमार** — $^{c}$) K1, 3 **विशिष्टं**; K2 4 Ñ2 3 V1 3 B2 Dn D1 3–6 T G M1 2 4 **वरिष्ठः** (for **°ष्ठं**) D2 **वरिष्ठ सर्वमन्त्राणां**. — $^{d}$) K1 3 **एवं भज**, Bom. and Poona eds. **एवाचर** (for **समाचर**).

वरिष्ठं सर्वधर्माणां तं समाचर भार्गव ॥ १०
कालस्य परिणामेन लब्धाहारो जितेन्द्रियः ।
तत्परः प्रयतः श्राद्धी योगधर्ममवाप्स्यसि ।
इत्युक्त्वा भगवान्देवस्तत्रैवान्तरधीयत ॥ ११
अष्टादशानां वर्षाणामेकाहमिति मे मतिः ।
उपासतश्च देवेशं वर्षाण्यष्टादशैव मे ॥ १२
प्रसादात्तस्य देवस्य न ग्लानिरभवत्तदा ।
न क्षुत्पिपासे कालं वा जानामि स्म तदानघ ।
पश्चाच्छिष्यसकाशात्तु कालः संविदितो मम ॥ १३

इति श्रीहरिवंशे चतुर्दशोऽध्यायः ॥ १४ ॥

# १५

मार्कण्डेय उवाच ।
तस्मिन्नन्तर्हिते देवे वचनात्तस्य वै विभो ।
चक्षुर्दिव्यं सविज्ञानं प्रादुरासीन्ममानघ ॥ १
ततोऽहं तानपश्यं वै ब्राह्मणान्कौशिकात्मजान् ।
आपगेय कुरुक्षेत्रे यानुवाच विभुर्मम ॥ २
ब्रह्मदत्तोऽभवद्राजा यस्तेषां सप्तमो द्विजः ।
पितृवर्तीति विख्यातो नाम्ना शीलेन कर्मणा ॥ ३
शुकस्य कन्या कृत्वी तं जनयामास पार्थिवम् ।

---

11 Before 11, T3 ins सनत्कुमार — [a]) K D1 M4 परिमाणेन (for °णामेन) — [b]) K2–4 V, D1 T1 G1 4 5 लब्धाहारो (for लब्धा°) — [c]) D3 मत्पर (for तत्पर) D4 T4 G4 M2 श्राद्धे, G3 श्राद्धं (for श्राद्धी) T2 G1 5 स्व (G1 त) कुरु प्रयत. श्राद्धं — [d]) M3 यशोधर्मम् (for योग°) Ñ1 अवाप्स्यति, Ds °थ (for °सि)

12 [a]) V3 धर्माणाम् (for वर्षाणाम्) G1 damaged from वर्षाणा up to तदानघ (in 13[d]) Ś1 तदष्टादशवर्षाणि, K1 3 4 Dn D5 G3 अष्टादशैव वर्षाणि — [b]) D5 त्वेकाहम् (for ए°) T4 इव (for इति) G2 गतम् (for मति) Ś1 एकाहमिव चाभवत्, K1 3 4 V2 Dn M° त्वे(V2 M° ए)-काहमिव मेऽभवत्, D6 T1 2 G3–5 M1 3 4 ए(G5 त्वे)काह-मिव मे गतम् — [c]) K1 3 Dn T2 3 G2 4 5 त, D6 T1 M4 तु (for च) Ś1 देवेशे; K2 4 Ñ3 (marg) V1 3 D1 2 4 5 तत्रैव, Ñ1 तत्रैवं, Ñ3 तेनैव, B° 3 Ds तं देव (for देवेशं) Ñ2 D3 उपासितश्च तत्रैव, M° °सतस्तु तं देव, M3 °गतस्य देवेशं — [d]) D6 G3 5 M4 [अ]ष्टादशानि (for °शैव) K4 V2 B1 तु (for मे)

13 [b]) D3 चाभवत् (for अ°) — [c]) V2 क्षुत्पिपासां (for °से) — [d]) Ś1 जानाम्यपि, K2 4 Ñ V B Ds D3 5 T2 प्रत्यजानं, D1 न प्रजान, D2 प्रत्यजानत्, G5 जानाति स्म, M4 न जानामि (for जानामि स्म) M3 कदाचन (for तदानघ) T3 जाताः स्म मम चानघ, T4 प्रत्यजानन्त भूयज (sic), G2 जाता न स्म ममानघ. — [e]) Ñ1 -सकाशं (for °शात्) K1 च; B1 वै (for तु). — [f]) Ds1 कालं (for कालः) K2. 4 Ñ° V B2 3 D2 T3 G4 M1, 2 स; B1 D3, 5 च; Ds1 मे (for सं) T2 वेदितो (for वि°) N (except Ś1 D6) T3 4 M2 मया (for मम)

COLOPHON — *Mention of the Epic* K3 Ds2 — *Mention of Khila* Ś1 K, V3 B Ds D1 3 4 6 — *Adhy. name* N M4 पितृकल्प — *Adhy no* (figures, words or both) K1 15, K3 D1 4 T1 2 G M 17, Ñ° V1 D3 18, V2 3 B1 2 Dn Ds2 19, D2 6 T 4 20 — *Śloka no* Dn1 Ds° 22, D2 23, D 21

## 15

1 K1 om the ref — [b]) Ś1 K1 3 Dn2 T3 4 G2 5 M4 प्रभो, Ñ2 3 V1 3 B1 2 Dn1 D1 5 T2 G1 3 M1 2 विभो, D2 3 प्रभो (for विभो) — [d]) K2. 4 Ñ V B D (except D6) T3 4 तदा मम, G5 तदानघ (for ममानघ)

2 [c]) T° यानुवाच (for आपगेय) V1 कुरुश्रेष्ठ (for °क्षेत्रे) — [d]) Ñ1 मामुवाच, T3 ह्यापगेय (for यानुवाच) Ś1 G2 3 5 M2 4 गुरुर् (for विभुर) B1 तदा (for मम) T2 G1 यानवोचत्पुरा मम

3 [b]) K4 सोमपो (for सप्तमो) — [c]) M4 चक्रवर्ती (for पितृ°) Ś1 D5 T2 M3 तु (for [इ]ति) — [d]) D3 [आ]मित्तेन (for शीलेन) T3 महता स्वेन कर्मणा

4 Before 4, K1 ins भीष्म उवाच — [a]) T4 corrupt K2 Ñ1 3 V1 3 Ds1 D2 4 तु, M1 यज् (for तं) D6 T1 2 G1 3–5 M1 शुककन्या कीर्तिमती — [b]) M2 भूमिपम् (for पार्थिवम्) — [c]) K2 D4 -श्रेष्ठं (for -श्रेष्ठान्) — [d])

अणुहात्पार्थिवश्रेष्ठात्काम्पिल्ये नगरोत्तमे ॥ ४

युधिष्ठिर उवाच ।

अणुहः कस्य वै पुत्रः कस्मिन्काले बभूव ह ।
राजा धर्मभृतां श्रेष्ठो यस्य पुत्रो महायशाः ॥ ५
ब्रह्मदत्तो नरपतिः किंवीर्यश्च बभूव ह ।
कथं च सप्तमस्तेषां संबभूव नराधिपः ॥ ६
न ह्यल्पवीर्याय शुको भगवाँल्लोकपूजितः ।
कन्यां प्रदद्याद्योगात्मा कृत्वीं कीर्तिमतीं प्रभुः ॥ ७
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ।
ब्रह्मदत्तस्य चरितं तद्भवान्वक्तुमर्हति ॥ ८
यथा च वर्तमानास्ते संसारेषु द्विजातयः ।
मार्कण्डेयेन कथितास्तद्भवान्प्रब्रवीतु मे ॥ ९

भीष्म उवाच ।

प्रतीपस्य स राजर्षे तुल्यकालो नराधिपः ।
पितामहस्य मे राजन्बभूवेति मया श्रुतम् ॥ १०
ब्रह्मदत्तो महाराजो योगी राजर्षिसत्तमः ।
रुतज्ञः सर्वभूतानां सर्वभूतहिते रतः ॥ ११
सखा हि गालवो यस्य योगाचार्यो महायशाः ।
शिक्षामुत्पाद्य तपसा क्रमो येन प्रवर्तितः ।
कण्डरीकश्च योगात्मा तस्यैव सचिवोऽभवत् ॥ १२
जात्यन्तरेषु सर्वेषु सहायाः सर्व एव ते ।
एतज्जातिषु सप्तैव बभूवुरमितौजसः । C 1051 B 1 20 14 P 1 20 14

---

M1 3 काम्पिल्ये (for काम्पिल्ये) — After 4, N (except Ś1 Ñ1 D1) T2 4 G4 ins

283* भीष्म उवाच ।
यथोवाच महाभागो मार्कण्डेयो महातपाः ।
तस्य वंशमहं राजन्कीर्तयिष्यामि तच्छृणु ॥

[ K1 Ñ2 3 V1 3 B Ds G4 om the ref K3 सौतिर् (for भीष्म) — (L 1) D6 महाभाग — (L 2) B3 वंशे महा- (for वंशमहं) Ñ2 3 V B1 2 D2 4–6 महान् (for राजन्) K1 2 Ñ2 3 V1 D4 T4 त (for तच्) ]

5 [a]) Ds1 पुत्रस्तु (for वै पुत्र) — [b]) T2 लोके (for काले)

6 [a]) T3 4 (marg as in text) ब्रह्मपुत्रो (for °दत्तो) K2 4 Ñ2 3 V D1–4 T3 4 स्थ नृ (for नर-) — [b]) K3 Dn किंवीर्यः स, K4 D1 किंधर्मश्च (for किंवीर्यश्च) D6 S किंवीर्यः किंपराक्रमः — [c]) T2 G1 कथंचित्, M4 कथ स (for कथ च) T1 संमतस् (for सप्तमस्) — [d]) K1 बभूव च, K2 B2 3 Ds बभूव स, K4 Ñ V1 3 B1 Dn D1–5 T3 4 G2–5 स बभूव (for संब°)

7 Dn2 om 7–8 — [a]) T4 [अ]ल्पविद्याय (for °वीर्याय) — [c]) D5 M4 प्रादाद्यद् (for प्रदद्याद्) T1 G2 4 लोकात्मा (for योगात्मा) — [d]) D6 T1 2 G1 2 4 5 M1 2 (inf lin) 3 4 शुभां (for कृत्वीं) K2 Ñ2 कीर्तिमतां (for °तीं) B3 विभु (for प्रभु)

8 Dn3 om 8 (cf v 1 7) — [a]) K3 तदिच्छामि ह्यहं श्रोतुं — [b]) Ñ2 V3 T2 G1 महामते, T2 (also) °मता (for °द्युते) — [d]) K2 D1 T1 M4 अर्हसि (for °ति) D1 भवान्वक्तुमिहार्हति

9 [b]) K1 3 D1 G3 ससारे च, D5 °रे तु (for °रेषु) Ś1 द्विजोत्तमा (for द्विजातय) — [c]) Ñ2 T3 G1 5 M4 कथितं (for °तास्)

10 [a]) K2 4 Ñ3 V B Dn Ds D1–5 T1 3 G4 M2 तु, Ñ2 T4 च, D6 T2 G1–3 5 M1 3 4 [ए]व (for स) — [b]) K1 M1 3 कालं (for कालो) K3 V3 D2 4 T1 4 M नराधिप — [c]) Ś1 [इ]ति (for मे) — [d]) D3 यथा (for मया)

11 [a]) Ś1 K1 3 (marg) B1 2 Dn D6 T G M2 4 महाभागो, K2 4 D1–5 M1 °राज (for °राजो) — [b]) K2 V2 3 Dn1 Ds1 D1 4 सत्तम, D3 -संमत (for -सत्तम) — [c]) K4 तत्त्वज्ञ, T3 4 सर्वज्ञ (for रुतज्ञ) Ñ2 जन्तूनां (for -भूतानां)

12 [a]) K3 M1 corrupt K2 4 Ñ V B Dn D1–3 5 T3 G2 4 च, D4 [अ]स्य, D6 T1 2 4 G1 3 5 M2–4 तु (for हि). — [b]) Ñ3 (marg as in text) V1 (sup lin as in text) महाबल, D6 T1 2 4 G M °तपा (for °यशा) — [c]) V2 सहसा, D5 तरसा (for तपसा) — [d]) D3 विवर्तित, T3 4 प्रकी° (for प्रव°) — [e]) K2 Dn2 M2 कुण्डरीकश्, K4 G2 कण्डीर°, Ñ2 V2 3 D3 कण्डरीषश्, B1 D4 6 T3 पुण्डरीकश् (for कण्डरी°) G1 तु योगात्मा, M1 तु धर्मात्मा (for च योगात्मा) — [f]) T1 स द्विजो (for सचिवो) D5 G5 महान् (for ऽभवत्)

13 [b]) K2 4 Ñ2 V1 3 D1–5 T1 3 4 G3 सखाय (for सहाया). — [c]) B2 D6 T1 2 G1 3 5 M2 3 ससैते, G2 सर्वे ते (for सप्तैव) — [e]) K Ñ V2 3 B Dn Ds D1 2 4 5

यथोवाच महातेजा मार्कण्डेयो महातपाः ॥ १३
तस्य वंशमहं राजन्कीर्तयिष्यामि तच्छृणु ।
ब्रह्मदत्तस्य पौराणं पौरवस्य महात्मनः ॥ १४
पुरुमित्रस्य दायादो राजा बृहदिषुर्नृप ।
बृहद्धनुर्बृहदिषोः पुत्रस्तस्य महायशाः ।
बृहद्धर्मेति विख्यातो राजा परमधार्मिकः ॥ १५
सत्यजित्तस्य तनयो विश्वजित्तस्य चात्मजः ।
पुत्रो विश्वजितश्चापि सेनजित्पृथिवीपतिः ॥ १६
पुत्राः सेनजितश्चासंश्चत्वारो लोकसंमताः ।
रुचिरः श्वेतकाश्यश्च महिम्नारस्तथैव च ।
वत्सश्चावन्तको राजा यस्यैते परि वत्सकाः ॥ १७
रुचिरस्य तु दायादः पृथुषेणो महायशाः ।
पृथुषेणस्य पारस्तु पारान्नीपोऽथ जज्ञिवान् ॥ १८
नीपस्यैकशतं तात पुत्राणाममितौजसाम् ।
महारथानां राजेन्द्र शूराणां बाहुशालिनाम् ।
नीपा इति समाख्याता राजानः सर्व एव ते ॥ १९
तेषां वंशकरो राजा नीपानां कीर्तिवर्धनः ।
काम्पिल्ये समरो नाम स चेष्टसमरोऽभवत् ॥ २०

---

T4 G2 महाभागो, Ñ3 (marg) V1 T3 °योगी (for °तेजा)

14 K3 om 14 — a) K2 4 Ñ1 V2 3 B Dn D1 2 4 5 अहं ब्रह्मन्, D6 T2 G1 3 M4 महाराज (for अह राजन्) — b) Ñ1 ते शृणु, Ñ2 V1 3 B3 D5 तं शृणु, D6 T1 2 G1 3–5 M3 4 सर्वंश ; M1 तेऽनघ (for तच्छृणु) — c) D3 पुत्राणा, D6 M1–3 शूरस्य (for पौराणं) D4 चरित्र ब्रह्मदत्तस्य — K1. 4 Ñ3 V B1 2 D5 D2–6 M4 ins after 14 Ñ2 B3 after $15^{ab}$:

284* बृहत्क्षत्रस्य दायाद सुहोत्रो नाम धार्मिक ।
सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह ।
तेनेदं निर्मितं पूर्वं पुरं वै हस्तिनापुरम् ॥
हस्तिनश्चापि दायादास्त्रय. परमधार्मिका ।
अजमीढो द्विमीढश्च पुरुमीढस्तथैव च । [5]
अजमीढस्य धूमिन्या जज्ञे बृहदिषुर्नृप ॥

[K4 M4 om lines 1–5 Ñ2 om line 1 — (L 1) V1 3 B3 बृहत्क्षेत्रस्य Ds पार्थिव (Ds2 °व) (for धार्मिक) — (L 2) Ñ2 D3 च, V1 3 तु (for [अ]पि). — (L 3) D5 येन (for तेन) Ds दिव्यं (for पूर्वं) K1 Ds हस्तिना (for पुर वै). Ñ3 V1 पुरं वै नागसाह्वयम्, D4 हस्तिनापुरमुत्तमम् (for b). — (L. 4) B Ds D6 [त]त्र (for [अ]पि) — (L 5) K1 Ñ3 V1 D2–4 पुरमीढम — D6 om line 6. — (L. 6) Ñ3 (marg as above) M4 दायादो (for धूमिन्या). K1 D3 पुरमीढस्य दायादो (for a) K1 Ñ3 V1 D3 M4 राजा (for जज्ञे) K1 स्मृत, Ñ3 B1 Ds D2–4 नृप (for नृप) B2 पुरुमित्रो बभूव ह (for b) ]

15 K1 Ñ3 V B1 Ds D3 5 M4 om (hapl) $15^{ab}$ D2 transp $15^{ab}$ and $15^{cd}$ D4 reads $15^{a}$–$17^{d}$ on marg — a) Dn1 D1 T4 G5 पुरमित्रस्य, M3 कुरु° (for पुरु°) — T4 om $15^{b}$ — b) B2 जज्ञे, T2 राजन् (for राजा) Ś1 K3 Dn स्मृत, K4 Ñ1 B2 D1 2 T2 G1 5 M3 नृपः (for नृप). Ñ2 B3 बृहत्क्ष(B3 °त्क्षे)त्र इति स्मृत.. — After $15^{ab}$, Ñ2 B3 ins 284* S1 om (hapl) $15^{cd}$ — d) G4 पुत्रस्य च (for °स्तस्य) D2 महातपा, T4 °त्मन (for °यशा). — For $15^{cd}$, T3 subst

285* आसीद्बृहदिषो. पुत्रो बृहद्धर्मेति विश्रुत ।

— e) K3 बृहद्धर्मेषु विख्यातो, T3 °द्धनुश्च विख्यातो

16 a) Ds1 हव्यजित्, G5 सत्यवित् (for °जित्) K3 Dn D5 T3 G2–4 सत्यजित्तनयस्तस्य — G2 om (hapl ?) $16^{cd}$ — c) G4 [आ]सीत् (for [अ]पि) — d) D1–3 श्येनजित् (for सेन°) M1 3 सेनाजित्पृथिवीपते, M2 सेनाजित्परवीरहा

17 a) D1–3 श्येनजितश् (for से°) B2 T2 G1–3 5 M4 [अ]पि (for [आ]सश्) — b) K1 2 4 Ñ2 V3 D1–6 S विश्रुता, K3 Dn -सत्तमा, Ñ3 V1 -पूजिता (for -संमताः) — c) Ś1 श्वेतकक्षश्, K1 3 श्वेतकाक्षश्, K1 (sup lin) श्रुतकेतुश्, K2 4 Ñ2 3 V B2 3 Dn Ds D1–5 T1 3 4 G3. 4 श्वेतकेतुश्, M4 °कार्यश् (for °काश्यश्) — d) K2 महिम्ना च, D1 °नारस्, D4 °स्तारस्, T1 °तारस् (for °म्नारस्) — e) Ñ3 V1 D1 6 G5 M1. 3 [अ]वन्तिको, T2 G1 2 [आ]पन्तिको, G4 [आ]रन्तिको (for [आ]वन्तको) T3 वत्सकावन्तिको राजा. — f) D6 G M तस्य (for यस्य) M4 [अ]नु (for [ए]ते). Ñ3 Ds G2 3. 5 M4 वत्सरा., D4 T1 2 G1. 4 -वंशजाः, M1. 2 (inf lin) 3 -वासिनः, M2 -वासकाः (for वत्सका)

18 a) K2 च (for तु) G2 रुचिराश्वस्य दायादः — b) Some Mss पृथुसेनो (for °षेणो) V2 B Ds महातपाः (for °यशा.) — c) Some Mss पृथुसेनस्य D4 दायादः, G1 पौरस्तु (for पारस्तु) — d) Ś1 K3 B1 Dn D5 T2 3 G2. 4 तु; K1 च; V2 ऽपि (for ऽथ) D4 पार इत्यधिभीयते — After 18, D4 ins

286* पारस्य तनयः श्रीमान्नीपो नाम महायशाः ।

19 a) T2 G1 नीपकस्य (for °स्यैक-) K1 V2 राजन् (for तात).

समरस्य परः पारः सदश्व इति ते त्रयः ।
पुत्राः परमधर्मज्ञाः पारपुत्रः पृथुर्बभौ ॥ २१
पृथोस्तु सुकृतो नाम सुकृतेनेह कर्मणा ।
जज्ञे सर्वगुणोपेतो विभ्राजस्तस्य चात्मजः ॥ २२
विभ्राजस्य तु पुत्रोऽभूदणुहो नाम पार्थिवः ।
बभौ शुकस्य जामाता कृत्वीभर्ता महायशाः ॥ २३
पुत्रोऽणुहस्य राजर्षिर्ब्रह्मदत्तोऽभवत्प्रभुः ।
योगात्मा तस्य तनयो विष्वक्सेनः परंतपः ॥ २४
विभ्राजः पुनराजातः सुकृतेनेह कर्मणा ।
ब्रह्मदत्तस्य तनयो विष्वक्सेन इति श्रुतः ॥ २५
विष्वक्सेनस्य पुत्रोऽभूद्दण्डसेनो महीपतिः ।
भल्लाटश्च कुमारोऽभूद्राधेयेन हतः पुरा ॥ २६
दण्डसेनात्मजः शूरो महात्मा कुलवर्धनः ।
भल्लाटपुत्रो दुर्बुद्धिरभवज्जनमेजयः ॥ २७ C 1071 B 1 20 33 P 1. 20 33

20 $^{a}$) B2.3 Ds एषां (for तेषां) K3 राजन् (for राजा) — M3 om $20^{c}$–$22^{d}$ — $^{c}$) M1.2 काम्बिल्ये (for काम्पिल्ये) — $^{d}$) D1 स ज्येष्ठ, D6 G3.4 M3.4 सदेष्ट- (for स चेष्ट-)

21 M3 om 21 (cf v l 20) — $^{a}$) D3 समरात्तु (for °रस्य) D5 [अ]पर· (for पर) K2 B3 समस्य पार· सपा( B3 सत्पा )र, K4 Ñ1 D4 M1.2 समरस्य पार संपार (hypermetric), D3 T1.2 G समरात्पार सपा( T2 G1 °वा )र, M4 समरात्पारपु पारः (sic) — $^{b}$) T2 G1 सदश्वा (for °श्व) T3 समराश्व इति त्रय — $^{d}$) Ś1 K4 B2 Dn T4 पर-, D6 पर (for पार-) M1 प्रथिर् (for पृथुर्) T3 विभु, T4 विभो (for बभौ)

22 M3 om 22 (cf v l 20) — $^{a}$) Ś1 om तु Ś1 सुकृतिर्, K1.3 D1 °ती (for °तो) — $^{b}$) V3 स्वकृतेन (for सु°). Ś1 [ए]व, D6 T1.2 G3.5 M1.4 च (for [इ]ह) — $^{c}$) D6 T1.2 G M1.2.4 पुत्र. (for जज्ञे)

23 $^{b}$) Ś1 K1 Ñ1 धार्मिक, B Ds नामत (for पार्थिव.) — $^{c}$) T3 आसीच् (for बभौ) D3 (marg as in text) या कन्या (for जामाता). M3 अणुह शुकजामाता — $^{d}$) Ś1 कृत्व्या भर्ता; K4 कृत्वीभार्यो, Ñ2 V3 कृत्वी भार्या, T1 G4.5 कीर्त्या कान्त्या; T2 G1 M3.4 कीर्त्या भर्ता, T4 G2 कीर्तेर्भर्ता (for कृत्वीभर्ता) — After 23, G2 reads lines 2–3 of 291*

24 $^{a}$) V2 B1.3 Dn Ds सुतो (for पुत्रो) K2.4 Ñ2.3 D1–5 अणुहस्य सुतो राजा, Ñ1 T1.2 G1.3–5 M अणुहस्य पुत्रो राजर्षि( T2 G1 राजर्षे-, M4 ब्रह्मर्षि )र् (hypermetric); D6 G2 अणुहपुत्रो राजर्षिर्, T3.4 अणुहस्य तु दायादो — $^{b}$) Ś1 K2.4 Ñ2.3 V1.3 D1–5 T3.4 बभूव ह, T2 G1 महाप्रभु· (for ऽभवत्प्रभु.) — M4 om $24^{c}$–$25^{b}$ — $^{d}$) Ś1 इति स्मृत; K3 इति श्रुतिः; V2 महातपा, D6 T1.2 G1–3.5 M1–3 ऽभवन्नृप, G4 महानृप. (for परंतप.). — After 24, K2 ins. 287*.

25 M4 om $25^{ab}$ (cf v l 24) Ś1 K2 om (hapl) 25 — $^{a}$) K1.3 V2 Dn D1.5 T1.3.4 G3.4 आयात (for आजात). — $^{b}$) Ñ1 V2.3 B1.2 Dn Ds T1–3 G1.3–5 M1.2 स्वकृतेन (for सु°) T1 [ए]व (for [इ]ह) — T1.2 G1.4.5 repeat $25^{cd}$ after 287*. — $^{c}$) Ñ2 V2 B Dn Ds D5 T1 (first time) 3.4 G3.4.5 (last two first time) पुत्रोऽन्य, T2 G1 (both first time) पुत्रोऽस्य, M4 दायादो (for तनयो) — $^{d}$) Ñ2.3 V B Dn Ds D2.4–6 T1.2 (both first time) 3.4 G1 (first time) 3.4.5 (last two first time) सर्वसेन (for विष्वक्सेन) K1.3 Dn इति स्मृत·, Ñ2 D1 T1 (second time) इति श्रुति, M4 बभूव ह (for इति श्रुत) — K1.3.4 Ñ2.3 V B Dn Ds D1.3–6 T3.4 G3 ins after 25 K2 after 24 T1.2 G1.4.5 after the first occurrence of $25^{cd}$

287* चक्षुषी तस्य निर्भिन्ने पक्षिण्या पूजनीयया ।
सुचिरोषितया राजन्ब्रह्मदत्तस्य वेश्मनि ॥

[ (L 1) K3 Dn यस्य (for तस्य) D3 भिन्नेऽथ, T2 G1.4 निर्विण्णे, G3.5 निर्भिण्णे (for °न्ने) — (L 2) T2 G1.4.5 चात्मनि, T3.4 मित्रया (for वेश्मनि) ]

— After the above, T1.2 G1.4.5 repeat $25^{cd}$ While K4 Ñ2.3 V B Dn Ds D4.6 G3 cont after 287*

288* अथास्य पुत्रस्त्वपरो ब्रह्मदत्तस्य जज्ञिवान् ।
विष्वक्सेन इति ख्यातो महाबलपराक्रम ॥

26 $^{a}$) D6 T1.2 G M1–3 पुत्रस्तु, M4 दायादो (for पुत्रोऽभूद्) — $^{b}$) Ś1 महासेनो, K2 दत्त°, Dn1 अज° (for दण्ड°) K3 महीपते, Ds2 °पते·, D6 बभूव ह (for महीपति) S (except T3.4) उदक्सेनो बभूव ह (M4 °नोऽभवन्नृप). — After $26^{ab}$, T2 G1 read $27^{ab}$. — $^{c}$) Ś1 K1.3 Dn D1 भल्लाटोऽस्य, K2 B3 °टस्य, D3 °टक- (for °टश्च) D6 T G M1–3 भल्लाटस्तस्य पुत्रस्तु (T3.4 पुत्रोऽभूद्), M4 भल्लस्तस्य तु पुत्रोऽभूद् — $^{d}$) K4 D3 गाधियेन (for राधेयेन)

27 T2 G1 read $27^{ab}$ after $26^{ab}$ — $^{a}$) T1.2 G1.4 M उदक्सेनात्मज. शूरो· — $^{b}$) D6 T1.2 G M2.3 बलो (G2

स तेषामभवद्राजा नीपानामन्तकृन्नृपः ।
उग्रायुधेन यस्यार्थे सर्वे नीपा विनाशिताः ॥ २८
उग्रायुधः स चोत्सिक्तो मया विनिहतो युधि ।
दर्पान्वितो दर्परुचिः सततं चानये रतः ॥ २९

युधिष्ठिर उवाच ।

उग्रायुधः कस्य सुतः कस्मिन्वंशेऽथ जज्ञिवान् ।
किमर्थं चैव भवता निहतस्तद्ब्रवीहि मे ॥ ३०

भीष्म उवाच ।

अजमीढस्य दायादो विद्वान्राजा यवीनरः ।
धृतिमांस्तस्य पुत्रस्तु तस्य सत्यधृतिः सुतः ॥ ३१
जज्ञे सत्यधृतेः पुत्रो दृढनेमिः प्रतापवान् ।
दृढनेमिसुतश्चापि सुधर्मा नाम पार्थिवः ॥ ३२
आसीत्सुधर्मणः पुत्रः सार्वभौमः प्रजेश्वरः ।
सार्वभौम इति ख्यातः पृथिव्यामेकराट् तदा ॥ ३३
तस्यान्ववाये महति महान्पौरवनन्दनः ।
जज्ञे संनतिमान्राजा संनतिर्नाम वीर्यवान् ॥ ३४
तस्य वै संनतेः पुत्रः कार्तो नाम महाबलः ।
बभूव येन विक्रम्य पृषतस्य पितामहः ।

---

धरो, G3–5 बाल्लो ) नाम महाबल , M1 बल्लाटो वै महाबल , M4 महातेजा महाबल . — $^c$ ) T2 G1 भल्लातकस्य दुर्बुद्धेर्, G4 °टस्य च दुर्बुद्धिर्, M4 भल्लपुत्रो बलो नाम — $^d$ ) Ñ2 V B Dn Ds T1. 3 4 G3–5 अभवच्च युधिष्ठिर

28 $^a$ ) G4 एतेषाम् ( for स ते° ) — $^b$ ) Ś1 V2 B D5 6 अन्तको , G5 अभिकृन् ( for अन्तकृन् ) K2 B3 D1 3–6 T1 3 G2–4 M2 3 नृप ( for नृप. ) M4 नीपानामन्तिमो नृप — $^c$ ) D3 नीपार्थे , D6 om , T1–3 G1 3 5 M1 3 4 वीरेण ( for यस्यार्थे ) — $^d$ ) D4 नीपा सर्वे ( by transp )

29 $^a$ ) K2. 4 Ñ2 3 V B1 2 ( marg as in text ) 3 D T3 4 G4 मदोत्सिक्तो , T1 G1 5 स चोद्युक्तो , T2 G2 3 स चोद्रिक्तो , M4 सहोद्रिक्तो ( for स चोत्सिक्तो ) — $^b$ ) G2 वै ( for वि- ) M3 रणे ( for युधि ) — $^c$ ) D6 दर्पाविष्टो ( for °न्वितो ) Ds -रति ( for -रुचि ) — $^d$ ) K4 [अ]प्रिये ( for [अ]नये ).

30 $^a$ ) T4 पुत्र ( for सुत. ) — $^b$ ) V1 कस्य ( कस्मिन् ) M4 देशे ( for वंशे ) Ñ1 V2 B1 ( marg ) 2 3 स, D5 च , D6 T1. 2 G3. 5 M3 4 प्र- ( for ऽथ ) D6 जग्मिवान् ( for जज्ञि° ). — $^c$ ) Ñ1 किमर्थं भवता वापि — $^d$ ) K2 4 Ñ2 3 V1 3 D1–6 T1 2 4 G M वदस्व, V2 ब्रवीतु ( for °हि ) Ś1 हतस्तत्प्रब्रवीहि मे, K1 3 Dn निहतो ब्रूहि तन्मम

31 Ś1 lacuna for $31^a$ — $^a$ ) T2 G1 M3 4 आजमीढस्य — $^c$ ) V2 D3 पुत्रोऽभूत् , M2 तनयस् ( for पुत्रस्तु ) D2 वृत्तिमानस्य पुत्रस्तु

32 $^a$ ) D6 T2 G1. 2 तस्य ( for जज्ञे ) — Ś1 Ñ1 M1–3 om ( hapl ) $32^b$–$33^a$ — $^b$ ) K1 दृढसेनः ; T2 °नेम ( for °नेमि· ) — B3 om $32^{cd}$ — $^c$ ) K1 दृढसेन- ; T1 दृढनेमे· , T2 °नेम- ( for °नेमि- ) — $^d$ ) Ñ3 ( marg as in text ) T3 4 सुधन्वा , D6 धर्मात्मा ( for सुधर्मा ) K2. 3 पार्थिव , V2 B1. 2 Ds धार्मिकः , G1 वीर्यवान् ( for पार्थिव ) T1 G3. 5 सुधर्माणः ( T1 °र्मा तु ) प्रतापवान् , T2 धर्मात्मा नाम वीर्यवान्

33 Ś1 Ñ1 M1–3 om $33^a$ ( cf v l 32 ) D4 reads $33^a$–$34^b$ on marg — $^a$ ) Ñ3 ( marg as in text ) T3 4 सुधन्वन. , T2 G1 धर्मात्मज ( for सुधर्मण ) — $^b$ ) S1 M2 प्रजाहित. , Ñ1 B Ds प्रजापति , V2 D6 T2 G M1 3. 4 प्रतापवान् ( for प्रजेश्वरः ) — $^c$ ) M1 2 महात्मा धर्मशीलश्च — $^d$ ) Ś1 D1 अकरोद् ( for एकराट् ) K1–3 Ñ V B D ( except D6 ) T4 विभुः , K4 प्रभु , T3 G2 4 भुवि ( for तदा )

34 $^a$ ) K4 [अ]न्वये च ( for [अ]न्ववाये ) T3 मतिमान् ( for महति ) — $^b$ ) K4 D6 T1 2 G1 2 4 5 M3 4 कौरव- ( for पौ° ) K4 Ñ2 Dn2 D5 6 T1 G3 4 M नन्दन , Ds -वंशज ( for -नन्दन. ) Ñ1 V2 महापौरववंशज — K2–4 Ñ2 3 V B D T G M4 ins after $34^{ab}$ K1 after the first occurrence of $34^{cd}$

289* महतश्चापि पुत्रस्तु नाम्ना रुक्मरथ. स्मृतः ॥
पुत्रो रुक्मरथस्यापि सुपार्श्वो नाम पार्थिवः ।
सुपार्श्वतनयश्चापि सुमतिर्नाम धार्मिक. ॥

[ ( L 1) K1 4 D1 4 5 [ए]व ( for [अ]पि ) G5 च ( for तु ) V2 B1 3 Dn2 Ds G2–4 राजा ( for नाम्ना ). T4 रुक्मवर ( for °रथ ) B3 श्रुत , D1 सुत , M4 तथा ( for स्मृत ) — ( L 2 ) G1 रुक्मवरस्य ( for °रथस्य ) V3 [अ]थ ( for [अ]पि ) K4 D6 T2 G1 सुपार्श्वो ( for °श्वो ) B2 T4 नामत ( for पार्थिव ) D3 सुपार्श्वो नाम विश्रुत ( for $^b$ ) —( L 3 ) K4 D3 6 T2 सुपार्श्व ( for °श्व- ) Ñ2 Dn D4 ( marg as above ) पार्थिव ( for धार्मिक ) ]

— After the above, K1 repeats $34^{cd}$ K1 reads $34^{cd}$ thrice D6 G1–3 5 read $34^{cd}$ twice — $^c$ ) G1 damaged T1 G4 ऽथ सुमती ( G4 °ते ) ( for संनतिमान् ) K1 (second time ) 2 4 Ñ2. 3 V B Dn Ds D1–5. 6 ( first time ) T2–4

नीपो नाम महाराज पाञ्चालाधिपतिर्हतः ॥ ३५
स चाप्युग्रायुधस्तात दुर्बुद्धिर्वैरकृत्सदा ।
प्रदीप्तचक्रो बलवान्नीपान्तकरणोऽभवत् ॥ ३६
स दर्पपूर्णो हत्वाजौ नीपानन्यांश्च पार्थिवान् ।
पितर्युपरते मह्यं श्रावयामास किल्बिषम् ॥ ३७
माममात्यैः परिवृतं शयानं धरणीतले ।
उग्रायुधस्य राजेन्द्र दूतोऽभ्येत्य वचोऽब्रवीत् ॥ ३८
अद्य त्वं जननीं भीष्म गन्धकालीं यशस्विनीम् ।
स्त्रीरत्नं मम भार्यार्थे प्रयच्छ कुरुपुंगव ॥ ३९
एवं राज्यं च ते स्फीतं बलानि च न संशयः । C 1089 S I. 20. 51 P I 20. 51

G2 3 5 ( last three first time ) M4 सुमतेरपि ( D6 °तेर्नृप ) धर्मात्मा —$^{d}$ ) D3 4 6 संततिर् ( for सन° ) V2 B1 3 Ds राजा संनतिमान्प्रभु — After 34, K3 reads $36^{ab}$, repeating it in its proper place

35 $^{a}$ ) Ñ2 तथा ( for तस्य ) K2 4 Ñ V1 3 B3 Ds D1–4 6 T1 2 G1 3 M4 [ए]व ( for वै ) D4 संतते ( for संनते. ) —$^{b}$ ) Ś1 कान्तो , K2 Ñ1 D6 T2 G1 कर्ता , K3 Ñ3 V2 B Dn Ds D5 T3 4 G2 4 M4 कृतो , K4 कीर्तिर् , D3 4 T1 G3 5 M1–3 कर्तो ( for कार्तो ) M1 2 महायशा ( for °बल. ) — After $35^{ab}$, N ( except Ś1 Ñ1 D1 2 ) S ins

290* शिष्यो हिरण्यनाभस्य कौसल्यस्य महात्मन· ।
चतुर्विंशतिधा तेन प्रोक्तास्ता सामसहिता ।
स्मृतास्ते प्राच्यसामान· कार्ता नाम्ना तु सामगा ॥
कार्तिरुग्रायुधः सोऽथ वीर. पौरवनन्दन ।

[ K3 reads lines 1–2 after $36^{ab}$ — ( L 1 ) D6 T1 2 G M हिरण्यनाभे शिष्य( D6 M4 °भशिष्य- , T3 G3 °भे पुत्र- , G2 °भ शिष्य )स्तु ( for $^{a}$ ) Some Mss कौशिल्यस्य, कौशल्यस्य, कौशलस्य, कौसलस्य , T3 4 कौशिकस्य ( for कौसल्यस्य ) — ( L 2 ) Ñ2 V3 येन ( for तेन ) K2 B D5 T3 सप्राच्या , V2 D3 T1 G3–5 M4 सप्रोक्ता ( for प्रोक्तास्ता ) G1 -समिता ( for -सहिता ) — K3 reads line 3 after 291* — ( L 3 ) T3 श्रुत्वा , T4 श्रुतास् ( for स्मृ° ) K3 तै , G4 5 M4 ता ( for ते ) K2 प्राच्यसवना , G2 4 प्राच्यनामान ( for °सामान ) K1 D4 कर्ता , Ñ3 T3 4 कर्तुर् ( for कार्ता ) K2 4 Ñ3 ( marg ) V B Dn Ds G3 5 M4 कार्तयो नाम सामगा , Ñ2 D3 कर्ता नाम च सामगा , Ñ3 कर्ता नाम्ना तु सामगा , D6 T1 2 G1 2 M1–3 कर्ता नामे( T1 °म्ने )ह सा° ( for $^{b}$ ) — ( L 4 ) K4 B3 G2 कीर्तिर् , D4 कार्तैर् , T2–4 G1 कर्तुर् ( for कार्तिर् ) K2 4 सोऽपि , D4 चापि , D6 T2 G1 5 M3 सो वै , M1 2 सर्वैर् ( for सोऽथ ) T2 G1 2 M3 पर ( for वीर ) M4 कौरव- ( for पौ° ) D6 G3 5 M1 -नन्दन ( for °न ) ]

— K4 om $35^{cdef}$ —$^{c}$ ) D6 T1 2 G M4 संग्रामे ( for बभूव ) —$^{d}$ ) Ñ3 वृषभस्य ( for पृषतस्य ) Ś1 T4 M1 पिता हत ( for पितामह· ) —$^{e}$ ) Ś1 Ñ1 V2 D6 T2 G1 2 नीलो ( for नीपो ) Ś1 K1 3 Dn D5, 6 T1 G3–5 M3 4 महातेजा. ( for °राज ) —$^{d}$ ) Some Mss पञ्चालाधिपतिर् K2 Ñ1 2 M1 तदा , D6 G2 M2 3 बली ( for हत. ) M4 पाञ्चाल्यो निहतो बली — After 35, K1–3 Ñ2 3 V B Dn Ds D3–6 T G M4 ins

291* उग्रायुधस्य दायाद क्षेम्यो नाम महायशा ॥
क्षेम्यात्सुवीरो नृपति सुवीरात्तु नृपंजय ।
नृपजयाद्बहुरथ इत्येते पौरवा स्मृता ॥

[ ( L 1 ) D4 5 तनय ( for दायाद ) K3 Ñ3 V1 D3 T3 G2 क्षेमो ( for क्षेम्यो ) D6 महाबल ( for °यशा ) T2 G1 3 5 M4 क्षेमो नाम महाबल ( for $^{b}$ ) — G2 reads lines 2–3 after 23 — ( L 2 ) K3 Ñ3 V1 D3 T2 G1 3 5 क्षेमात् ( for क्षेम्यात् ) M4 क्षेमात्सुवीर्यो नृपति ( for $^{a}$ ) D3 च ( for तु ) ]

— After the above, K3 reads line 3 of 291*

36 K3 reads $36^{ab}$ for the first time after 34 —$^{a}$ ) Ś1 K1 3 ( second time ) D1 कार्तिर् , K3 ( first time ) कीर्तिर् , D2 कार्तैर् ( for स चापि ) —$^{b}$ ) K4 T2 दुर्बुद्धेर् ( for °द्धिर् ) Ś1 K3 ( second time ) Dn T3 दुर्बुद्धिरभवत्तदा ( Ś1 °वन्नृप ), G4 °रसकृत्तदा — After the repetition of $36^{ab}$, K3 reads lines 1–2 of 290* —$^{c}$ ) Ś1 T1 G4 प्रवृद्ध- , K1 3 G3 M प्रवृत्त ( for प्रदीप्त- ) —$^{d}$ ) K1 V2 B Ds T3 G2 4 महान् ( for ऽभवत् ) — After 36, D6 ins

292* उग्रायुधस्तु दुर्बुद्धि स्त्रैणो दुष्ट सदाभवत् ।
राजकन्यां जहाराथ मुनिपत्नीप्रधर्षक ॥

37 $^{a}$ ) Ds1 ( also as in text ) दर्पपूर्ण ( for °र्णो ) T3 4 बलवान् , M2 हत्वा च ( for हत्वाजौ ) —$^{b}$ ) K2 वीर्यवान् ( for पार्थि° ) G2 नीपानामन्तकोऽभवत् —$^{d}$ ) D2 मां नृप ( for किल्बिषम् )

38 $^{a}$ ) K1 ममामात्यैः , K1 ( *sup lin* ) महा° , D2 मम नित्य ( for माममात्यै ) —$^{b}$ ) K1 पृथिवी- ( for धरणी ) —$^{d}$ ) T3 आगत्य च ( for ऽभ्येत्य वचो )

39 $^{a}$ ) Ś1 M1 2 अद्य वै ; K1 2 अद्यैव , T2 अन्यां तु ; G1 अन्यां त्वं ( for अद्य त्वं ) —$^{b}$ ) T1 तव काली , T2 G1 M गन्धकाळीं , G2 डिण्डिकाली ( for गन्ध° ) — G4 om $39^{d}$–$41^{a}$ —$^{d}$ ) K3 Ñ3 V1 B2 3 Dn Ds D6 T1 2 G1 3 5 M1 3 4 -नन्दन ( for -पुंगव ) M2 शीघ्रमेवोपपादय

40 G4 om 40 ( cf v l 39 ) —$^{a}$ ) T3 एतद् ( for एवं ) D3 धनं ( for च ते ) M1–3 एवं मम कृते कामे — After $40^{a}$, M1–3 ins, :

प्रदास्यामि यथाकाममहं वै रत्नभाग्भुवि ॥ ४०
राष्ट्रस्येच्छसि चेत्स्वस्ति प्राणानां वा कुलस्य वा ।
शासने मम तिष्ठस्व न हि ते शान्तिरन्यथा ॥ ४१
अधः प्रस्तारशयने शयानस्तेन चोदितः ।
दूतान्तरितमेतद्वै वाक्यमग्निशिखोपमम् ॥ ४२
ततोऽहं तस्य दुर्बुद्धेर्विज्ञाय मतमच्युत ।
आज्ञप्तवान्वै संग्रामे सेनाध्यक्षांश्च सर्वशः ॥ ४३
मम प्रज्वलितं चक्रं निशाम्यैतत्सुदुर्जयम् ।
शत्रवो विद्रवन्त्याजौ दर्शनादेव भारत ॥ ४४
विचित्रवीर्यं बालं च मदपाश्रयमेव च ।
दृष्ट्वा क्रोधपरीतात्मा युद्धायैव मनो दधे ॥ ४५
निगृहीतस्तदाहं तु सचिवैर्मन्त्रकोविदैः ।
ऋत्विग्भिर्देवकल्पैश्च सुहृद्भिर्नरपुंगव ॥ ४६
स्निग्धैश्च शास्त्रविद्भिश्च संयुगस्य निवर्तने ।
कारणं श्रावितश्चास्मि युक्तरूपं तदानघ ॥ ४७

मन्त्रिण ऊचुः ।

प्रवृत्तचक्रः पापोऽसौ त्वं चाशौचगतः प्रभो ।
न चैष प्रथमः कल्पो युद्धं नाम कदाचन ॥ ४८
ते वयं साम पूर्वं वै दानं भेदं तथैव च ।
प्रयोक्ष्यामस्ततः शुद्धो दैवतान्यभिवाद्य च ॥ ४९

---

293* त्वया राज्ये च ते स्थितिम् ।
चतुरङ्गयुतान्यद्य

— [b]) $K_{1\ 3}$ Dn $D_4$ धनानि च, $\tilde{N}_3$ $V_1$ बल चैव (for बलानि च) — $M_3$ reads $40^{cd}$ twice — [c]) $D_2$ दास्यामि च (for प्रदास्यामि) $\tilde{N}_2$ $V_3$ $D_1$ यथाकालम् (for °मम्) — [d]) $K_1$ हि (for वै). $K_4$ $G_3$ रत्नभुग् (for °भाग्) — After 40, all Mss ($G_4$ om.) and printed eds read 44

41 $G_4$ om. $41^a$ (cf. V 1 39) — [a]) $M_{3\ 4}$ राज्यस्य (for राष्ट्रस्य) $K_2$ चैव (for [इ]च्छसि) $K_1$ स्वस्तिं; $D_3$ तुष्टे, $T_1$ स्वास्थ्य (for स्वस्ति). $M_{1\ 2}$ राष्ट्रे यदीच्छसि स्वस्ति. — [b]) $V_3$ प्रजानां, $G_5$ प्राणिनां (for प्राणाना) $D_4$ $T_4$ च (for the first वा) $\acute{S}_1$ $K_{1\ 3}$ $V_2$ $B_1$ $Ds_1$ $D_{2\ 3}$ $T_4$ $M_4$ च (for the second वा) $M_{1\ 2}$ प्राणानामपि ते ($M_2$ मे) सदा — [d]) $\acute{S}_1$ च (for हि)

42 [a]) $D_{1\ 4}$ (marg.) $_6$ $T_{1-3}$ $G_{2-5}$ $M_{3\ 4}$ अहं (for अध) $M_1$ अथाध प्रस्तरशये — [b]) $K_4$ $D_4$ नोदित, $\tilde{N}_{2\ 3}$ (marg. as in text) $V_3$ देशितः; $D_3$ बोधित (for चोदितः) $\acute{S}_1$ $K_{1\ 3}$ शयानस्यैव वाशि($K_1$ °चि)तम्, $K_2$ °नास्तेन चोदिता — [c]) $M_3$ एवैतद् (for एतद्वै) $K_{2\ 4}$ $\tilde{N}$ V B Ds $D_{1-6}$ $T_{3\ 4}$ दूतान्तर्हितमेतद्वै, $T_2$ °रे तदेतद्वै — [d]) $D_6$ $T_{1\ 2}$ G $M_{1\ 2\ 4}$ विषोपमम् (for शिखो°) — After 42, $D_6$ $T_{1\ 2}$ $G_{1\ 3\ 5}$ ins.:

294* शरीरं मेऽदहत्तस्य वाक्यं चैतदुरात्मन ।

43 [b]) $K_4$ $D_4$ अप्युत; $D_1$ अच्युत, $G_1$ अच्युतम् (for अच्युत). — [c]) $K_{1\ 3}$ $V_2$ B Dn Ds $D_{5\ 6}$ $G_{2\ 4}$ आज्ञापय (for आज्ञप्तवान्) $\tilde{N}_{1,\ 2}$ $B_2$ Ds $M_{1\ 2}$ संग्रामं (for °मे) $\acute{S}_1$ आज्ञापयं च संग्रामे — [d]) $V_2$ $B_2$ $T_4$ सर्वत (for °शः)

44 $G_4$ om. 44. All Mss ($G_4$ om.) and printed eds read 44 after 40 — [a]) $M_{1\ 2}$ सैन्य (for चक्रं). — [b]) K $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ $B_1$ Dn $D_{1-5}$ $T_{3\ 4}$ निशम्येदं, $\tilde{N}_3$ $D_6$ $M_3$ निशम्यैत, $V_2$ $B_2$ निशम्यैवं, $B_3$ Ds निशम्यैव, $G_{2\ 3}$ निशाम्येद, $M_4$ निशाम्यैनं (for निशाम्यैतत्) — [c]) $D_{1\ 6}$ ऽपि (for वि) — [d]) $T_{1\ 2}$ $G_1$ $M_{1\ 3}$ पार्थिव; $G_{3\ 5}$ $M_{2\ 4}$ पार्थिवा (for भारत)

45 [a]) $K_2$ $D_2$ तं (for च) $\acute{S}_1$ विचित्रवीर्यो बालश्च — [b]) $M_{2\ 3}$ तम् (for च) $K_{2\ 3}$ $V_3$ Dn $D_{4\ 5}$ $T_{1\ 3\ 4}$ $G_{1\ 4}$ मदुपाश्रयमेव च — [c]) $K_{2\ 4}$ $\tilde{N}_3$ $V_{1,\ 3}$ $D_{1-4}$ $T_4$ परीताक्षो, $\tilde{N}_2$ °ताङ्गो (for °तात्मा)

46 [a]) $M_4$ ततो (for तदा) $K_{1\ 2\ 4}$ $\tilde{N}_{2\ 3}$ V Dn $D_{1-5}$ $T_{2-4}$ $G_{2\ 4}$ [अ]हं तैः; $\tilde{N}_1$ तत्तु (for [अ]हं तु) — [b]) $M_3$ धर्म- (for मन्त्र-) — $K_2$ reads $46^c$ twice — [c]) $K_2$ (second time) सुहृद्भिर् (for ऋत्विग्भिर्) $\acute{S}_1$ $M_1$ अर्थकामैश्, $B_2$ $D_5$ $T_2$ वेदकल्पैश्, $D_6$ $G_{1-3\ 5}$ $M_{2-4}$ हितकामैश्, $T_1$ $G_4$ हितकारैश् (for देवकल्पैश्) — [d]) $K_{2\ 4}$ $\tilde{N}$ V B Dn Ds $D_{1-5}$ $T_{2-4}$ सुहृद्भिश्चार्थ($\tilde{N}_2$ $B_1$ °नु)दर्शिभिः, $D_6$ $T_1$ G M °र्भरत($M_1$ °श्च नर)र्षभ.

47 [a]) $K_{2\ 4}$ $\tilde{N}$ V $B_{2\ 3}$ $Ds_1$ $D_{1-3}$ $T_{3\ 4}$ मन्त्रविद्भिश्, $D_4$ मन्त्रिवर्यैश् (for शास्त्रविद्भिश्) — [b]) $T_3$ प्रवेशने; $T_4$ निनेशने (for निवर्तने) — [c]) $M_4$ श्रावितं (for °तश्). $\acute{S}_1$ $T_4$ [अ]पि (for [अ]स्मि) $K_2$ कारणं श्रावयिष्यामि (sic). — [d]) $K_{1,\ 3}$ Dn युक्ति- (for युक्त) $K_{1\ 3}$ Dn तथा (for तदा)

48 $T_{3\ 4}$ $M_{1-3}$ om. the ref. $M_4$ ऋत्विजान्त्रिणः (for मन्त्रिण.). — [a]) $K_{2\ 4}$ $\tilde{N}_{2\ 3}$ V $D_{1-4}$ $T_{2-4}$ $G_{1\ 2}$ $M_4$ प्रवृद्ध-, $D_6$ स वृद्ध- (for प्रवृत्त-) — [c]) $\acute{S}_1$ $\tilde{N}_2$ $V_3$ चैव; $M_1$ त्वेष (for चैष) — [d]) $K_1$ युद्धे (for युद्धं).

49 [a]) $K_2$ यूयं (for वयं). $Dn_1$ पूर्वे (for पूर्वं), $\acute{S}_1$ $D_4$

कृतस्वस्त्ययनो विप्रैर्हुत्वाग्नीन्वाच्य च द्विजान् ।
ब्राह्मणैरभ्यनुज्ञातः प्रयास्यसि जयाय वै ॥ ५०
अस्त्राणि न प्रयोज्यानि न प्रवेश्यश्च संगरः ।
आशौचे वर्तमानेन वृद्धानामिति शासनम् ॥ ५१
सामदानादिभिः पूर्वमपि भेदेन वा ततः ।
तं हनिष्यसि विक्रम्य शम्बरं मघवानिव ॥ ५२
प्राज्ञानां वचनं काले वृद्धानां च विशेषतः ।
श्रोतव्यमिति तच्छ्रुत्वा निवृत्तोऽस्मि नराधिप ॥ ५३
ततस्तैः स क्रमः सर्वः प्रयुक्तः शास्त्रकोविदैः ।
तस्मिन्काले कुरुश्रेष्ठ कर्म चारब्धमुत्तमम् ॥ ५४
स सामादिभिरप्यादावुपायैः शास्त्रचिन्तकैः ।
अनुनीयमानो दुर्बुद्धिरनुनेतुं न शक्यते ॥ ५५
प्रवृत्तं तस्य तच्चक्रमधर्मनिरतस्य वै ।
परदाराभिलाषेण सद्यस्तात निवर्तितम् ॥ ५६
न त्वहं तस्य जाने वै निवृत्तं चक्रमुत्तमम् ।
हतं स्वकर्मणा तत्तु पूर्वं सद्भिश्च निन्दितम् ॥ ५७
कृतशौचः शरावापी रथी निष्क्रम्य वै पुरात् । C 1108
कृतस्वस्त्ययनो विप्रैः प्रायोधयमहं रिपुम् ॥ ५८ B 1 20 69 P 1 20 69

च ( for वै ) — $^{b}$ ) $B_2$ दान भेदस्, $M_4$ दानपूर्वं ( for दान भेदं ) $M_{2\ 3}$ च भारत ( for तथैव च ) — $^{c}$ ) $K_4$ $V_3$ $D_1$ तप शुद्धो, $M_3$ तदा राजन् ( for तत. शुद्धो ) $T_4$ प्रयोक्ष्यामि तप.शुद्धो — $^{d}$ ) $K_1$ ( *sup lin* ) $_2$ देवता ( for दैवतानि ). $\acute{S}_1$ $K_{1\ 3}$ [अ]भिगम्य ( for °वाद्य )

50 $^{b}$ ) $T_{2\ 4}$ $G_{1\ 3\ 5}$ हुत्वाग्निं, $M_{1\ 2}$ ( *inf lin* ) हुताशं ( for हुत्वाग्नीन् ) $K_{2-4}$ $\tilde{N}_{1\ 3}$ $V_{2\ 3}$ $B_{1\ 2}$ Dn Ds $D_{2-6}$ $T_1$ $G_{2\ 4}$ अर्च्य, $\tilde{N}_2$ $B_3$ आर्च्य, $T_4$ $M_2$ चार्च्य ( for वाच्य ) $\tilde{N}_1$ द्विजम् $V_1$ गत्वाग्नीनर्च्य च द्विजान्, $T_3$ हुत्वाग्निं चार्च्य वै द्विजान् — $^{d}$ ) $D_2$ यास्यसि त्वं, $T_4$ ( marg ) प्रयातो वै, $G_3$ °हि वि- ( for °स्यसि )

51 $^{b}$ ) $\acute{S}_1$ सगरे, $Dn_1$ $T_2$ °रा ( for °र. ) $D_6$ G $M_3$ न प्रवेश्याश्च सं( $G_4$ सा )गरा — $^{c}$ ) $\tilde{N}_3$ $V_3$ $B_3$ $Ds_2$ $D_6$ $G_1$ अशौचे ( for आ° ) $\acute{S}_1$ $K_{3\ 4}$ $\tilde{N}_2$ $B_2$ अशौचे वर्तमाने तु ( $\tilde{N}_2$ च ), $K_1$ $B_1$ Dn $D_{4\ 5}$ $T_{1\ 3}$ आशौचे वर्तमाने तु ( $T_1$ च ) — $^{d}$ ) $G_{3\ 5}$ $M_4$ अनु- ( for इति )

52 $^{a}$ ) $\tilde{N}_1$ पूर्वादिभि ( for -दाना° ) $T_{1\ 3}$ $G_{2\ 4\ 5}$ पूर्णम् ( for पूर्वम् ) — $^{b}$ ) $\acute{S}_1$ अथ, $B_3$ इति, Ds $T_2$ $G_1$ अभि- ( for अपि ) $K_2$ $D_5$ $T_{1-3}$ $G_{1\ 3-5}$ M पुन: ( for ततः ) $T_4$ अपि लेखेन वा पुन — $^{c}$ ) $T_2$ $G_2$ हरिष्यसि ( for हनि° ). — $^{d}$ ) $Ds_1$ ( *sup lin* ) शम्बरं कृष्णजो यथा

53 $^{a}$ ) $V_3$ $Ds_2$ $D_{2-4}$ प्रज्ञानां ( for प्रा° ) $T_2$ $G_1$ लोके ( for काले ) — $^{b}$ ) $\tilde{N}_1$ वै ( for च ) — $^{c}$ ) $V_3$ बुध्वा ( for श्रुत्वा ) — $^{d}$ ) $G_2$ विशेषत ( for नराधिप ) $M_2$ विनिवृत्तोऽस्मि भारत

54 $^{a}$ ) $K_3$ $\tilde{N}_{1\ 3}$ $V_1$ B Dn $Ds_2$ $D_5$ $G_2$ संक्रम, $\tilde{N}_2$ क्रमश ( for स क्रम. ) $D_2$ पूर्वं ( for सर्व. ) $V_2$ $D_{1\ 3}$ $T_{3\ 4}$ ततस्तै क्रमश सर्वै ( $D_{1\ 3}$ °र्वं ), $V_3$ $D_6$ $T_{1\ 2}$ $G_{1\ 3-5}$ °स्तै संक्रम पूर्वं ( $V_3$ सर्वैं, $T_1$ $G_4$ पूर्व. ), $M_{1-3}$ ततोऽस्मै संक्रम स( $M_2$ पू )र्वं, $M_4$ ततस्त संक्रमै पूर्वं — $^{b}$ ) $Dn_1$ $D_5$ $T_4$ $G_5$ $M_2$ प्रत्युक्तः, $T_2$ $G_1$ प्रवृत्तः ( for प्रयुक्तः ) — $^{c}$ ) $G_1$ अस्मिन् ( for त° ) $\acute{S}_1$ मासे, $K_{1\ 3}$ पापे ( for काले )

55 $\tilde{N}_2$ om ( hapl ) $55^{a}$–$57^{b}$. — $^{a}$ ) $K_{1\ 3}$ $D_5$ $T_3$ $G_{2\ 4}$ एवादाव्, $M_{1\ 2}$ अन्यैश्च ( for अप्यादाव् ) $D_6$ $T_{1\ 2}$ $G_{1\ 3}$ $M_{3\ 4}$ सामादिभिरथाप्यादाव् ( $G_1$ °स्तथाप्यादाव्; $M_4$ °रथोपायैर् ) — $^{b}$ ) $T_{3\ 4}$ प्राज्ञ- ( for शास्त्र ) $\acute{S}_1$ $K_{1\ 3}$ -निश्चितै; $G_1$ -चिन्तनै ( for °कै ) $K_2$ उपायैरपि चिन्तितै, $K_4$ $\tilde{N}_{1\ 3}$ V B Dn Ds $D_{1-5}$ °यै प्रा( $K_4$ प्र )ज्ञचिन्तितै ( $\tilde{N}_3$ [ marg ] °न्तकै ), $M_{1\ 2}$ °यैरनुचिन्तितै, $M_4$ प्रयुक्तैः शास्त्रकोविदैः — $^{c}$ ) Hypermetric $V_2$ $T_2$ $G_{1-3\ 5}$ अन्वीयमानो दुर्बुद्धिर्

56 $\tilde{N}_2$ om 56 ( cf v l 55 ) — $^{a}$ ) $V_{2\ 3}$ $T_4$ प्रवृद्धं ( for °त्त ) $G_2$ त्रिप्रवृत्तस्य तच्चक्रम् — $^{c}$ ) $D_6$ $T_{2-4}$ $G_{1\ 2\ 4}$ परदाराभिमर्शेन — $^{d}$ ) $T_1$ $G_{3\ 5}$ चक्रं, $G_4$ क्रमं ( for सद्यस् ). $D_6$ $G_2$ तेन ( for तात ) $K_2$ $D_1$ त्रि- ( for नि- ) — After 56, $K_3$ ins

295* न हीदृशमनायुष्यं लोके किंचन विद्यते ।
याद्दशं पुरुषस्येह परदारोपसेवनम् ॥
[ = MBh 13 107 $20^{cdef}$ ]

57 $\tilde{N}_2$ om $57^{ab}$ ( cf v l 55 ) — $^{a}$ ) $K_{2,4}$ $V_2$ $Dn_2$ $D_1$ नु, $T_4$ च ( for तु ) K $\tilde{N}_1$ $V_3$ Dn $D_{1-5}$ $T_3$ $G_{2-4}$ $M_1$ जाने तन, $D_6$ $T_{1\ 2}$ $G_{1\ 5}$ $M_{2-4}$ तज्जाने, $T_4$ जाने च ( for जाने वै ) $\acute{S}_1$ अन्वह तस्य वै जाने — $^{b}$ ) $\acute{S}_1$ प्रवृत्तं ( for नि° ) $\tilde{N}_1$ $V_2$ $B_{1\ 3}$ Ds अच्युत, $\tilde{N}_3$ $V_1$ $M_1$ उद्यतम्; $B_2$ अप्युत ( for उत्तमम् ) — $^{c}$ ) $G_2$ कर्तुं; $M_1$ तेन, $M_2$ तस्य ( for तत्तु ) — $^{d}$ ) $D_6$ $T_{2-4}$ $G_{1,2}$ M च गर्हितम्, $T_1$ $G_{3-5}$ विगर्हितम् ( for च निन्दि° )

58 $^{a}$ ) K $\tilde{N}_{2\ 3}$ V B D $T_{1\ 2,4}$ G $M_4$ शरी चापी, $\tilde{N}_1$ कृतावापी, $T_3$ कृतास्त्रश्च ( for शरावापी ). — $K_4$ om. $58^{c}$–$59^{d}$ — $^{d}$ ) $M_1$ परम् ( for रिपुम् )

59 $K_4$ om 59 ( cf v. l 58 ). — $^{a}$ ) $\tilde{N}_{1\ 2}$ $D_1$ $T_1$ $G_4$ सुमार्गम्; $V_3$ $B_2$ $T_{3,4}$ संग्रामम् ( for संसर्गम् ) $\tilde{N}_3$ $V_1$ Dn

ततः संसर्गमागम्य बलेनास्त्रबलेन च ।
व्यहमुन्मत्तवद्युद्धं देवासुरमिवाभवत् ॥ ५९
स मयास्त्रप्रतापेन निर्दग्धो रणमूर्धनि ।
पपाताभिमुखः शूरस्त्यक्त्वा प्राणानरिंदम ॥ ६०
एतस्मिन्नन्तरे तात काम्पिल्यात्पृषतोऽभ्ययात् ।
हते नीपेश्वरे चैव हते चोग्रायुधे नृपे ॥ ६१
आहिच्छत्रं स्वकं राज्यं पित्र्यं प्राप्य महाद्युतिः ।
द्रुपदस्य पिता राजन्ममैवानुमते तदा ॥ ६२
ततोऽर्जुनेन तरसा निर्जित्य द्रुपदं रणे ।
अहिच्छत्रं सकाम्पिल्यं द्रोणायाथापवर्जितम् ॥ ६३
प्रतिगृह्य ततो द्रोण उभयं जयतां वरः ।
काम्पिल्यं द्रुपदायैव प्रायच्छद्विदितं तव ॥ ६४
एष ते द्रुपदस्यादौ ब्रह्मदत्तस्य चैव ह ।
वंशः कार्त्स्न्येन वै प्रोक्तो वीरस्योग्रायुधस्य च ॥ ६५
अतस्ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
गीतं सनत्कुमारेण मार्कण्डेयाय पृच्छते ॥ ६६
श्राद्धस्य फलमुद्दिश्य नियतं सुकृतस्य च ।
तन्निबोध महाराज सप्तजातिषु भारत ॥ ६७

---

आक्रम्य ( for आगम्य ) K2 D2–4 तत स मार्गं( D3 समर्दं ) माक्रम्य — b ) T3 4 दिव्येन ( for बलेन ) S1 [आ]स्त्रै- ( for [अ]स्त्र- ) T4 ते ( for च ) — c ) D6 T1 2 G1–4 M1–3 मुहूर्तं-वद् ( for उन्मत्त° ) M4 मुहूर्तमभवद्युद्ध

60 a ) V1 T3 M2 3 मम ( for मया ) K2 स्व ( for [अ]-स्त्र- ) D2 स संप्रतापेन मया, M1 स ममास्त्रप्रभावेन — b ) D1 निहतो ; G2 काम्बिल्यो ( for निर्दग्धो ) — c ) V3 त्यक्त्वा ( for शूरस् ) — d ) V3 स च ( for त्यक्त्वा ) K2 4 Ñ V1 2 B Ds D1–4 सहानुग·, V3 महानृप, M3 अरिंदमः ( for °म )

61 D3 reads 61b on marg — b ) Ś1 काम्पिल्य, K3 Dn D5 G2 °ल्ये, T3 °ल·, G3 काम्बिल्यात Ñ1 Ds2 पृष्ठतो ( for पृषतो ) V2 ऽन्वयात्, V3 ऽभ्यगात्, D5 ऽप्ययात् ( for ऽभ्य° ) D6 काम्पिल्य· पृष्ठतोऽप्ययात्, T2 G1 5 काम्पि( G5 °म्बि )ल्या पृषदोऽप्ययात्, T4 काम्पिल्य. पृष्ठतोऽन्वगात्, G4 काम्बिल्य· पृष्ठतोऽभ्ययात्, M1–3 काम्बिल्य पृषतोऽभ्यगा( M3 °तोऽत्यज )त्, M4 काम्पिल्यः पृषतोऽन्वगात् — D3 om 61c T3 om 61cd — d ) G1 नृप ( for नृपे ) D3 तस्मिन्वि-निहते नृपे

62 a ) K2 4 B1 Dn2 Ds D1–3 T2 G1 M4 अहिच्छत्र ; K3 अहिच्छत्रे, Ñ2 G3 5 अभिच्छत्रं, D6 अधिच्छत्र, T3 अयाचत ( for आहिच्छत्रं ) D4 स्वकं राष्ट्र, M1 2 सकाम्बिल्यं ( for स्वकं राज्य ) M3 अहिच्छत्रं स राज्य हि — b ) K3 om from पित्र्यं up to निर्जित्य द्रु ( in 63b ) K1 4 Ñ2 V B Dn Ds D3 5 6 T G M4 पित्र्य प्राप, Ñ3 पैत्रं प्राप, D1 4 पैत्र्य प्राप, M1 3 तदवाप्य ( for पित्र्यं प्राप्य ) — c ) G1 3 5 M4 राजा ( for राजन् ) Ñ3 द्रुपदः स महाराज — d ) T2 G1 मम वाचानुमोदित· — After 62, Ñ2 Ds ins

296* ततोऽभूद्द्रुपदो राजा द्रोणस्तेन निराकृतः ।

63 K3 om up to निर्जित्य द्रु ( cf v l 62 ) — a ) K2 तस्यापि, V2 सहसा, B3 T1 तपसा ( for तरसा ) — c ) G2 partly damaged Dn1 D1 5 T1 4 आहिच्छत्रं, D6 अधिच्छत्रं, T3 दत्त राज्यं, T4 ( marg ) दत्तराज्ये ( for अहिच्छत्रं ) T2 G1 अहिच्छत्रा स( T2 °त्रास्य )काम्पिल्या, G3 अभिच्छत्रात्सकाम्बिल्याद्, G4 5 M1–3 आहिच्छत्र ( G5 °त्रा ) सकाम्बिल्यं ( G5 °ल्या ), M4 अभिच्छिद्र सकाम्बिल्यो — d ) G2 partly damaged M1–3 [ए]व ( for [अ]थ ) S1 [उ]पपादिताः, T2 G1 5 M4 [अ]पवर्जिता ( for °वर्जितम् )

64 a ) B3 Ds T1 प्रगृह्य तु ( T1 च ) ( for प्रतिगृह्य ) K2 4 D3 तु तद्, D1 T4 तु त ( for ततो ) K1 द्रोणम् ( for द्रोण ) — b ) Ś1 ह्युभय ( for उ° ) D6 T1 2 G1–3 5 M1 3 ददता ( for जयतां ) K2 B2 D4 5 वर, D1 वर ( for वर ). M4 अभयं दत्तवान्वरम्. — c ) T2 G1 काम्पिल्यान्, G3–5 M1–3 काम्बिल्यं ( for काम्पिल्य ) — d ) M4 तदा ( for तव )

65 a ) K4 Ñ1 V2 B1 D6 T1 2 G1 3–5 M2–4 [अ]पि ( for [आ]दौ ) — b ) K2 D3 6 T1 2 4 G1 3 5 M2 4 हि ( for ह ) — c ) Ś1 ते प्रोक्तो, V1 प्रोक्तो वै ( by transp ) — d ) K2 4 V2 B D1 4 5 T4 G2–4 नीपस्य ( for वीरस्य ) K2 4 Ñ D1 2 5 वै ( for च ) — After 65, K2 4 Ñ2 3 V B Dn Ds D1–3 5 6 T G ins a passage given in App I ( No 5 ), K1 3 D4 ins the same after adh.v 15

66 K1 3 D4 repeat 66–68 (with the colophon) after App. I ( No 5 ) Dn repeats 66a–67b after App I ( No 5 ) — a ) V2 3 Dn2 ( first time ) वर्णयिष्ये ( for वर्त° ). B1 D2 G5 अतस्ते वर्तयिष्यामि ; T4 अत्र ते कीर्तयिष्यामि

67 For the repetition in K1 3 Dn D4, cf 1 66. — After 67a, T5 reads lines 128b–129a of App I ( No 5 ) repeating them in their proper place — b ) T2 सुश्रुतस्य ( for सुकृ° ) K4 ह, V3 D2 M1–3 वै ( for च ) — c ) K1 ( first time ) महाभाग ( for °राज ). — d ) K1 ( first time ) 3 ( second time ) 4 V1, 3 Dn D1–3, 4

सगालवस्य चरितं कण्डरीकस्य चैव ह ।
ब्रह्मदत्ततृतीयानां योगिनां ब्रह्मचारिणाम् ॥ ६८

इति श्रीहरिवंशे पञ्चदशोऽध्यायः ॥ १५ ॥

# १६

मार्कण्डेय उवाच ।
हन्त ते वर्तयिष्यामि श्राद्धस्य फलमुत्तमम् ।
ब्रह्मदत्तेन यत्प्राप्तं सप्तजातिषु भारत ॥ १
तत एव हि धर्मस्य बुद्धिर्निर्वर्तते शनैः ।
पीडयाप्यथ धर्मस्य कृते श्राद्धे पुरानघ ॥ २
ततोऽहं नातिधर्मिष्ठान्कुरुक्षेत्रे पितृव्रतान् ।
सनत्कुमारनिर्दिष्टानपश्यं सप्त वै द्विजान् ॥ ३
वाग्दुष्टः क्रोधनो हिंस्रः पिशुनः कविरेव च ।

C 1189
B I 21 5
P I 21 5

(second time) 5 6 T3 4 [अ]भूत्पुरा, K3 (first time) भारते (for °त) K2 सप्राप्त यदभूत्पुरा

68 For the repetition in K1 3 D4 cf v 1 66 — a) Ś1 K3 (first time) D5 6 G2 M सुगालवस्य — b) K4 कुण्डीरकस्य, D4 (first time) 6 G2 पुण्डरी°, T2 कन्धरीहस्य; T4 कन्धरीकस्य, G1 कण्डरीहस्य, M2 3 कुण्डरीकस्य (for कण्ड°) K1 (second time) 2 3 (both times) V2 Dn Ds2 D3 4 (both times) 5 T3 4 G1–4 M4 हि (for ह) — d) K2 T3. 4 सर्वेषां, Ñ1 योगानां (for योगिनां) T2 G1–3 5 M1–3 धर्म- (for ब्रह्म-) Ś1 K1 3 D4 (last three first time) योगि(K1 3 °गा)नां सहधर्मिणाम्

COLOPHON om in T1 — *Mention of the Epic* K3 (both times) Dn Ds2 — *Mention of Ahnika* Ś1 K3 (both times) Ñ3 V B Dn Ds1 D1 2 4 (both times) 6 — *Adhy name* Ś1 K1 3 (both first time) 4 Ñ1 D4 (first time) M1 2 पितृकल्प, K1 (second time) वीराचटिकाख्यानम्, K2. 3 (second time) Ñ3 Dn D3 6 T2 G1 M4 चटकाख्यानम्, Ñ2 B1 3 Ds पूजनीयोपाख्यानम्, V1 D4 (second time) चटकोपाख्यानम्, V2 पितृकल्पे चटकोपाख्यानम्, V3 B2 पितृकल्पे पूजनीयोपाख्यानम्, D5 पारिजाते चटकाख्यानम्; D1 2 शकुन्तिकोपाख्यानम्, G3 5 शकुन्ताख्यानम् — *Adhy no* (figures, words or both) K1 (both times) 16, K3 (first time) 18, K3 (second time) Ñ3 V1 D4 (both times) 19, V2 3 B1 2 Dn Ds2 20, D1 T2 G M 18, D6 T3 4 21 — *Śloka no* K1 (both times) 67, Dn1 41, Ds2 146, D2 43, D4 (both times) 66 — After adhy 15, K1 3 D4 ins App I (No 5)

## 16

1 N (except Ś1 Ñ1 D6, K2 marg) T1 3 G2 4 ins after the ref T2 G1 after 1ab G3 after 1

297* श्राद्धे प्रतिष्ठितो लोक श्राद्धाद्योग प्रवर्तते ।

[D3 T2 G3 श्राद्धे प्रतिष्ठिता लोका (for a) K2 3 Ñ2 Dn D5 T1 श्राद्धे (for श्राद्धाद्) D4 लोक (for योग)]

K2 reads 1–2 on marg — a) K4 D2 – 6 T2–4 G1 3 5 कथयिष्यामि, V वर्ण°, D4 कीर्त° (for वर्त°) T1 G4 M4 हन्त ते कथयिष्येऽह, M2 हन्त ते संप्रवक्ष्यामि — b) K3 4 Ñ V1 3 D2–5 T3 4 विधिम् (for फलम्) Ds श्राद्धयो(Ds2 °द्धायो)गमनुत्तमम् — c) Ś1 K2 3 V3 प्रोक्त (for प्राप्त) — After 1, G5 reads 5a

2 a) M1 2 धर्मेऽस्य, M3 धर्मेऽस्मिन् (for धर्मस्य) — c) D6 T2 G1 2 अपि, T3 4 वापि, M3 4 [अ]पि हि (for [अ]प्यथ) T1 G3 5 पीडयामास धर्मस्य (sic) — d) K2 भूते श्राद्धे, T2 कृतश्राद्धे, G1 कृतश्राद्धै (for कृते श्राद्धे) Ś1 पुरातने (for °नघ) — After 2, N (except Ś1 Ñ1) S (except M1–3) ins

298* यत्प्राप्तं ब्राह्मणैः पूर्वं तन्निबोध नरोत्तम ।

[D3 प्राप्य (for प्राप्त) K Ñ2 V3 D1 3–5 द्विजोत्तम (D3 °मै), Dn महामते, T3 4 G4 नृपोत्तम (for नरो°)]

3 a) K2 तत्र, K4 Ñ2 3 V1 Dn Ds D2 3 5 T1 2 4 G1 तात (for नाति) V2 3 B D1 T3 G4 ततोऽहं तानधर्मिष्ठान् — b) V2 कृत, D6 यत- (for पितृ-) — After 3, N (except Ś1 Ñ1) S (except M1–3) ins

299* दिव्येन चक्षुषा तेन यानुवाच पुरा विभु ॥

[D3 येन (for तेन)]

4 a) T1 G4 वक्रेष्ट, T3 गर्विष्ठ, T4 अङ्कुष्ठ, G3 5 वाक्रुष्ट (for वाग्दुष्ट) K3 पिशुनो (for क्रोधनो). — b) V3 रुचिर्, T2 G1 कपिर् (for कविर्). — c) K2 ससृग (for खसृम) — d) T3 4 G1 तदा, M4 स्मृता (for तथा)

खसृमः पितृवर्ती च नामभिः कर्मभिस्तथा ॥ ४
कौशिकस्य सुतास्तात शिष्या गार्ग्यस्य भारत ।
पितर्युपरते सर्वे व्रतवन्तस्तदाभवन् ॥ ५
नियोगात्ते गुरोस्तस्य गां दोग्ध्रीं समकालयन् ।
समानवत्सां कपिलां सर्वे न्यायागतां तदा ॥ ६
तेषां पथि क्षुधार्तानां बाल्यान्मोहाच्च भारत ।
क्रूरा बुद्धिः समभवत्तां गां वै हिंसितुं तदा ॥ ७
तान्कविः खसृमश्चैव याचेते नेति वै तदा ।
न चाशक्यन्त ते ताभ्यां तदा वारयितुं द्विजाः ॥ ८
पितृवर्ती तु यस्तेषां नित्यं श्राद्धाह्निको द्विजः ।
स सर्वानब्रवीद्भ्रातॄन्कोपाद्धर्मसमन्वितः ॥ ९
यद्यवश्यं प्रकर्तव्या पितॄनुद्दिश्य साध्विमाम् ।
प्रकुर्वीमहि गां सम्यक्सर्व एव समाहिताः ॥ १०
एवमेषा च गौर्धर्मं प्राप्स्यते नात्र संशयः ।
पितॄनभ्यर्च्य धर्मेण नाधर्मोऽस्मान्भविष्यति ॥ ११
तथेत्युक्त्वा च ते सर्वे प्रोक्षयित्वा च गां ततः ।
पितृभ्यः कल्पयित्वैनामुपयुञ्जन्त भारत ॥ १२
उपयुज्य च गां सर्वे गुरोस्तस्य न्यवेदयन् ।

---

5 G5 reads 5[a] after 1 — [a]) D3 ते तु (for तात) — [b]) D4 6 G 5 M गर्गस्य (for गार्ग्यस्य) T2 G1 शुभा-(G1 शिष्या)गस्त्यस्य भारत (sic) — [c]) D2 6 T1 2 G1–3 5 M तस्मिन् (for सर्वे) — [d]) Ś1 प्रवसन्तस्, M1 3 प्रभव° (for व्रतव°) Ñ1 प्रभवन्तस्ततो हुतम्, Ñ3 (marg as in text) V2 B1 3 Ds1 (marg as in text) s2 न्यवसन्त त-(Ñ3 Ds2 °सन्तस्त-, B3 °सन्त त)दा गुरौ, B1 न्यवसन्त गुरौ तदा, D6 G2 3 M2 4 प्रभवन्तस्ततोऽभ(G2 °दाभ)वन्, T2 G1 5 प्रभवस्ते ततोऽभवन्

6 [a]) Ś1 K1 3 4 Dn T1 G2 विनियोगाद्, V2 B Ds D6 T2 G1 3–5 M ते नियोगाद् (by transp) D3 सर्वे (for तस्य) — [b]) K4 D2 T4 समपालयन्, D1 (marg) सम-चार° (for समकाल°) — [d]) K2 Ñ2 T4 G3 न्यायागतास्, Ñ1 D6 °गतं, V2 न्यायगतास्, T1 G5 न्यायगतां (for न्याया°) D5 सदा (for तदा) T2 G1 सर्वेन्यायगता तथा

7 [a]) M4 एषां (for तेषां) T2 G1 अपि (for पथि) — [b]) T4 G3 पार्थिव (for भारत) — [c]) T3 क्रूर- (for क्रूरा) Ñ1 समुत्पन्ना (for समभवत्) — [d]) Ñ1 धेनु तां (for तां गां वै) D6 G2 4 तां गां वै हिंसितुमेव हि (hypermetric), T1 2 G1 3 5 M4 तां गां हिंसितुमेव हि

8 [a]) G1 कपीन् (for कवि) K2 समृगश्च, D3 स्वसृपश्च (for खसृमश्च) — [b]) K Ñ2 3 V2 3 B Dn Ds D1–5 T3 4 याचेतां, V1 यातेतां, M3 याचितौ (for याचेते) — [c]) V2 B2 3 Ds1 [ए]व (for च) K1 [अ]शक्यं न (for [अ]-शक्यन्त) G2 4 तात, M1 3 सर्वे (for ताभ्यां) S1 K4 न च शक्यं तदेता(K4 ताल ता)भ्यां, Ñ2 न चाशक्यं ततस्ताभ्या, B1 Ds2 नैवाशक्यन्त ते ता(Ds2 °क्य ततो द्वा)भ्यां; D6 G3 5 न चाशकंस्ततस्तौ तु (G3 °तो जाता; G5 °तस्तात), T2 G1 M4 न चाशकत्ततस्तात, M4 °कंस्तु ते तात — [d]) D6 T4 G2 3 5 यदा, T3 यथा (for तदा) Ś1 M3 धारयितुं (for वा°) B3 तदा (for द्विजा.) G1 M4 यथा (M4 °दा) पारयितुं द्विजा

9 [a]) B3 च, Ds M1 2 [इ]ति (for तु) — [b]) K1 2 V3 नित्य- (for नित्यं) D6 श्राद्धाहितो, T1 4 G4 °न्वितो, G3 5 श्राद्धरतो (for श्राद्धाह्निको) K3 द्विजम् (for द्विज) T2 नित्यश्राद्धरतो द्विज, G1 नित्यश्राद्धंकरो द्विज — [c]) M1–3 तु तान् (for सर्वान्) B1 राजन्, G3 तात (for भ्रातॄन्) — [d]) K1 4 V3 D2–4 G2 समाहित, T3 4 परायण (for -समन्वित) Ś1 कोपाद्यद्धर्मशसित, K2 3 Ñ V1 B Dn Ds कोपाद्ध(B1 °पध)र्मे समाहित, V2 °द्धर्मात्समाहित, D1 5 कोवो धर्मे समाहित., M1 2 समासाद्धर्मसहितम्, M3 अकोपान्धर्मसंहितान्

10 [a]) K1–3 Dn Ds2 D1 5 प्रहर्तव्या, Ñ1 B1 D2 6 प्रकर्तव्यं, Ñ2 3 V T3 प्रहन्तव्या (V2 °व्य), B2 Ds1 D4 T1 2 G1 3–5 प्रहर्तव्यं, B3 प्रवर्तव्या (for प्रक°) K4 M4 यदा(M4 °द)वश्य प्रहर्तव्या, T4 G2 यदवश्य प्रहन्तव्या (G2 °कर्तव्यं) — [b]) T1 ताम् (for साधु) — [d]) D6 T2 G1 3 5 M4 समन्विता (for समाहिता)

11 [a]) K1 3 4 Dn G2. 4 M1 [अ]पि, B1 om (for च) T2 om from धर्मं up to उपयुज्य (in 13[a]) T3 धर्मं गौ: (by transp) — [b]) V1 M3 4 प्राप्यते (for प्राप्स्यते) — [c]) K3 Dn उद्दिश्य, D6 G1 5 M1 अर्च्य च, M3 अर्चेत (for अभ्यर्च्य) — [d]) K2 Ds D1–4 वो, Ñ2 3 V B2 3 Dn1 नो, Dn2 ऽभि, T4 ऽस्तौ (for ऽस्मान्) B1 T1 G5 M1–3 भजिष्यति (for भवि°)

12 T2 om 12 (cf v l 11) — [a]) Ñ1 V2 B1 2 D3 D1 T1 तु (for च) D6 T1 G M4 गा (for ते) — [b]) V2 T1 G3 4 तु, D4 [अ]थ (for च) K4 मांसत., Ñ1 तां तत; D6 T1 G M शास्त्रत. (for गां तत) — [c]) K2 D2 [इ]माम्, K4 D4 [ए]ताम्, B3 [ए]वम्, D3 6 T1 G1 3 5 ताम् (for [ए]नाम्) — [d]) K1 3 V3 D3 उप(K3 °पा)भुञ्जन्त, Ñ3 V2 B Dn D5 D1 5 6 T1 G4 M1. 2 4 उपायु°; V1 D2. 4 G1. 2

तेषां ययातिः पञ्चानां विजित्य वसुधामिमाम् ।
देवयानीमुशनसः सुतां भार्यामवाप ह ।
शर्मिष्ठामासुरीं चैव तनयां वृषपर्वणः ॥ ३
यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ४
तस्य शुक्रो ददौ प्रीतो रथं परमभास्वरम् ।
असङ्गं काञ्चनं दिव्यं दिव्यैः परमवाजिभिः ।
युक्तं मनोजवैः शुभ्रैर्येन भार्यां समुद्वहत् ॥ ५
स तेन रथमुख्येन षड्रात्रेणाजयन्महीम् ।
ययातिर्युधि दुर्धर्षस्तथा देवान्सवासवान् ॥ ६
स रथः पौरवाणां तु सर्वेषामभवत्तदा ।
यावत्तव सनामा वै पौरवो जनमेजय ॥ ७
कुरोः पौत्रस्य राज्ये तु राज्ञः पारिक्षितस्य ह ।
जगाम स रथो नाशं शापाद्गर्गस्य धीमतः ॥ ८
गर्गस्य हि सुतं बालं स राजा जनमेजयः ।
वाक्क्रूरं हिंसयामास ब्रह्महत्यामवाप सः ॥ ९
स लोहगन्धी राजर्षिः परिधावन्नितस्ततः ।
पौरजानपदैस्त्यक्तो न लेभे शर्म कर्हिचित् ॥ १०

---

[ = Bhāgavata P, 9 18 2 ]

— c ) Ś1 K Ñ1 2 V2 B1 2 Dn Ds D1 2 4–6 T4 G1 4 यतिस्तु ( for तेनासौ ) Ñ3 V1 यतिस्तु योगमास्थाय , V3 B3 यतिस्तु मोक्षमादाय , D3 यतिर्मोक्ष समास्थाय — After 2, K4 ins .

334* पितरि ध्वंसिते स्थानादिन्द्राण्या धर्षणाद्द्विजैः ।
प्रापितोऽजगरत्वं वै ययातिरभवन्नृप ॥
[ = Bhāgavata P, 9 18 3 ]

3 a ) Ś1 पञ्चालान् ( for °नां ) — b ) T2 विधित्सुर्, G4 विजेता ( for विजित्य ) — d ) K2 D6 अविन्दत , K3 4 V2 B Dn Ds G2 M4 अवाप स ( for °प ह ) M1–3 सुतां कन्यामवाप्तवान् — e ) D1 कन्यां ( for चैव )

4 a ) K1 3 तुर्वसं ( for °सुं ) — c ) K V B3 Ds2 D1 2 G2 द्रुह्य , T4 द्रुह्मं ( for द्रुह्युं ) V1 D3 [अ]णुं ( for [अ]नुं ) B1 वसुं चैव ( for च पूरु च ) — d ) K3 V2 B2 3 D1 वार्षपार्वणी , V1 वर्षप° ( for वार्षप° ) Ś1 शर्मिष्ठायां व्यजायत

5 K3 reads 5a on marg — a ) K2 Ñ2 3 V1 2 B Dn Ds D6 G4 तस्मै शक्रो , D3 ( orig ) ब्रह्मा तस्य ( for तस्य शुक्रो ) T4 रथं चापि ( for ददौ प्रीतो ) — b ) K4 रम्य , T4 ददौ ( for रथं ). K2 -भासुरम् ( for -भास्व° ) — c ) Ś1 शुभाङ्गं , D1 निःसीमं , D5 आशुगं , T4 शताङ्गं , M3 असङ्गे , M4 आसङ्गं ( for अ° ) K4 असङ्गं काञ्चनैर्दिव्यैर् — d ) Ś1 शुभै , K4 दिव्यं ( for दिव्यैः ) — e ) D6 T1 2 G M4 दान्तैर् ( for शुभ्रैर् ) — f ) K2 कान्यां , K4 Ñ1 2 V2 B2 Dn D3 6 कार्यं ( for भार्यां ) K1 3 उवाह सः , D5 T2 G1 2 5 M उदावहत् ( M3 °न् ) ( for समुद्व° ) V3 येन कार्यं बभूव ह , T1 G3 4 येन चोर्वीमुदावहत्

6 b ) K1 corrupt , M1–3 विचित्रेण , some Mss. षड्रात्रेन ( for °त्रेण ) Ś1 प्रभुः ( for महीम् ). — c ) Ñ3 V3 D3 युद्ध- , T2 G1 3 अथ ( for युधि ) — d ) K1 सदा ; K3 तदा ( for तथा ) Ñ3 ( marg ) V1 सदानवान् ( for सवास° ). D6 T1 2 G M देवदानवमानवैः

7 a ) D2 ( *sup lin* as in text ) च ( for तु ) — Ñ2 3 read 7cd twice, Ñ3 reading it for the second time on marg — c ) Ś1 समन्ता , Ñ1 B1 D6 सनाम्नो , M4 सुनाम्नो ( for सनामा ) K1 2 ( marg ) Ñ2 3 ( both both times ) V1 B2 3 Dn Ds2 D2 3, 5 T2–4 G यावत्तु ( T4 °त्तिस्तु ) वसुनामा ( K2 Ñ3 V1 B2 3 D5 T3 4 °म्ना ) वै , K3 4 V2 3 D4 यावन्तो वसुधायां वै ; Ds1 °न्न वसुधायां वै — d ) K1 2 Dn G4 कौरवो , K3 V3 D4 कौरवा ; B1 2 T3 4 कौरवाज् ; D6 T1 2 G1–3 5 M4 कौरव्यो , M2 पौरवाज् ( for °वो ) Ñ3 ( orig ) B3 D6 T2 3 G1 4 5 M1, 2 4 जनमेजय ( for °मेजय ) Ś1 K4 Ds D1–3 5 कौरवो ( K4 °वा ) जनमेजयः , Ñ1 कौरवं जनमेजयम् , Ñ2 ( second time ) 3 ( marg ) V1 2 कौरवाज्जनमेजयात्

8 a ) T1 G1–3 5 M3 4 पूरो ( for कुरो. ) K2 4 Ñ2 V3 D1–5 T1 3 4 G3–5 M4 पुत्रस्य ( for पौ° ) K1 M1 2 राजेन्द्र ( for राज्ये तु ) K3 Ñ1 3 V1, 2 B Dn Ds कुरोः पुत्रस्य राजेन्द्र — b ) K2 4 Ñ V1 D1–5 T3 4 राजन् ( for राज्ञः ) Some Mss पारीक्षितस्य ( for पारि° ) Ś1 हि ; B2 Ds D3–5 T3 4 M1 च ( for ह ) — After 8ab, D3 ins

335* ब्रह्महत्यायुतः पाप इन्द्रः क्रुद्धोऽहरद्रथम् ।

— c ) Ñ1 M3 जगाम सु- ; D1 स जगाम ( by transp ) T3 शापं ( for नाश ) — d ) K1 3 Ñ2 V2 Dn D3 4 T1, 3 4 G4 गार्ग्यस्य , K4 B1 M3 गार्गस्य , B3 Ds2 D6 भर्गस्य ( for गर्गस्य ) Ś1 शापाद्गार्ग्यस्य भारत — After 8, T3 reads 12ab

9 T3 om ( hapl ) 9ab — a ) D6 भर्गस्य , some Mss गार्ग्यस्य ( for गर्गस्य ) K1 4 D2 4 तु , K3 V2 om , G5 ह ( for हि ). Ś1 गार्ग्यस्य तु सुतो बालः. — b ) K3, 4 Ñ2, 3 V2 D2 4 T1 4 G2 M3 जनमेजय ( for °जय. ). — c ) Ś1 Ñ2 3

ततः स दुःखसंतप्तो नालभत्संविदं क्वचित् ।
इन्द्रोतं शौनकं राजा शरणं प्रत्यपद्यत ॥ ११
याजयामास चेन्द्रोतः शौनको जनमेजय ।
अश्वमेधेन राजानं पावनार्थं द्विजोत्तमः ।
स लोहगन्धो व्यनशत्तस्यावभृथमेत्य ह ॥ १२
स च दिव्यो रथो राजन्वसोश्चेदिपतेस्तदा ।
दत्तः *शुक्रेण तुष्टेन लेभे तस्माद्बृहद्रथः ॥ १३
ततो हत्वा जरासंधं भीमस्तं रथमुत्तमम् ।
प्रददौ वासुदेवाय प्रीत्या कौरवनन्दन ॥ १४

सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम् ।
व्यभजत्पञ्चधा राजा पुत्राणां नाहुषस्तदा ॥ १५
दिशि दक्षिणपूर्वस्यां तुर्वसुं मतिमान्नृपः ।
प्रतीच्यामुत्तरस्यां तु द्रुह्युं चानुं च नाहुषः ॥ १६
दिशि पूर्वोत्तरस्यां तु यदुं ज्येष्ठं न्ययोजयत् ।
मध्ये पूरुं च राजानमभ्यषिञ्चत्स नाहुषः ॥ १७
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्मेण परिपाल्यते ।
प्रजास्तेषां पुरस्तात्तु वक्ष्यामि नृपसत्तम ॥ १८ C 1620 B 1 30 20 P 1 30 20

---

V2 3 B1 Dn Ds2 D3 T1 3 4 G2 M1 वाक्कूर ( for वाक्क्रूर )

10 a ) K1 D4 लोहगन्धो ( for °गन्धी ) — b ) K4 Ñ2 D1 4 पर्यधावद् ( D4 °न् ) ( for परिधावन् ) — d ) Ñ1 M3 कर्म ( for शर्म ) K3 B2 कुत्रचित् , T2 G1 कस्य° ( for कर्हि° )

11 a ) B1 स्व- ( for स ) — b ) Ñ2 स मुदं , D4 ( marg ) M2 ( inf lin as in text ) स सुखं ( for संविदं ) — c ) Ś1 Ñ1 इन्द्रस्तं , K2 3 D3 4 ( marg ) त्रातार , V1 D6 इन्द्रोक्तं ( D6 °क्त ), V3 Ds D5 G1 4 5 इन्द्रोत , D4 ( orig ) इन्द्रोनं , M4 चन्द्रोतं ( for इ° ) Dn D1 2 राजञ् ( for राजा ) K4 V2 इन्द्र तं शौनकं वाजी ( V2 राजञ् ), Ñ2 इन्द्रोना शौनको राजञ् , T1 इन्द्र तं शौनको राजा , T3 4 त्रातारं शौनको राजञ् — d ) Ds2 शरण्यं ( for °णं )

12 T3 reads 12ab after 8 — a ) K1 Ñ3 इन्द्रोत , K2 D6 T1 4 राजेन्द्र ( D6 °न्द्रं , T3 4 °न्द्र ), K3 Ñ2 G4 5 चेन्द्रोतं ( Ñ2 G4 °ताः ); Ñ1 देवेन्द्रं , V1 चेन्द्रोक्त ; D3 वै होता , D5 G2 चेन्द्रस्त , G1 M4 चन्द्रोत· ( for चेन्द्रोत ) V3 स याजयामास चेन्द्रस्तं ( hypermetric ), T2 3 योजयामास चेन्द्रोतः — b ) Ś1 K2 Ñ2 3 V B Dn Ds D1 5 6 M1 2 जनमेजयम् , K1 Ñ1 D3 T2 G1 M4 °जय ( for °जय ) — T3 om 12c–13d. — d ) K2 3 V2 D1 4 5 द्विजोत्तम ( D5 °मैः ), G1 °त्तमं ( for °त्तम. ) — e ) G1 5 लोभ ( for लोह- ) D4 ऽप्यशमत् ; G1 4 ऽप्यनशत् ( for व्य° ) — f ) Ś1 K2 च , T2 G1 2 स. ( for ह )

13 T3 om 13 ( cf v l 12 ) — a ) K2 वै ( for च ) D1, 2 5 T4 G2 दिव्य- ( for दिव्यो ) T2 राजा ( for राजन् ) — b ) K1 Ñ1 3 V1 B3 Ds D6 T2 G4 M4 तथा ( for तदा ) — c ) Ś1 G2 ततः ( for दत्तः ) Ś1 K Ñ V1 3 B D T G1 3–5 M शक्रेण ( for *शुक्रेण ) V2 G2 दत्ततुष्टेन शक्रेण — d ) D3 [अ]लभत् ( for लेभे ) — After 13, Ñ2 3 V B Dn Ds D6 T1, 4 G3, 4 ins. :

336* बृहद्रथात्क्रमेणैव गतो बार्हद्रथं नृपम् ।
[ B2 प्राप्तो , B3 G4 ततो ( for गतो ) G4 नृप ( for नृपम् ) Ñ3 V1 जरासंधस्तमवाप्तवान् ( for b ) ]

14 a ) M3 गत्वा ( for हत्वा ) — b ) D1 स्वं , D2 6 तद् ( for तं ) Ś1 भीमस्तं रथसत्तमम् — d ) K1 3 4 Ñ V B2 Ds D2–6 T1 3 4 G2–4 नन्दन ( for -नन्दन )

15 a ) K4 सद्वीपां स ( for सप्तद्वीपां ) Ś1 ययाति सप्तद्वीपां तु — b ) G1–3 5 चोर्वीं ( for पृथ्वीं ) — c ) K2 4 Ñ2 3 V1 3 B1 Dn D1 3–6 T1 3 4 G3 राजन् ( for राजा ) — d ) Ś1 K4 T2 G1 5 नहुषस् , K3 नघु° ( for नाहु° ) Ñ1 D3 5 T2–4 तथा ( for तदा )

16 b ) K3 तुर्वसं ( for °सुं ) D4 नृपम् ( for नृप ) Ś1 वशं मतिमतां वर , D6 T1 2 G M तुर्वसु ( T2 °शं ) पतिमादिशत् — c ) V3 प्रतिष्ठाम् , D6 उदीच्याम् , M3 पृथिव्याम् ( for प्रतीच्याम् ) Ś1 K Ñ1 2 V3 B Dn Ds D1 4–6 T1 3 4 G4 5 M4 च ( for तु ) T2 G1 प्राच्यां दिश्युत्तरस्यां च — d ) Some Mss द्रुह्य ( for द्रुह्यु )

17 Ś1 B3 om ( hapl ) 17 — a ) T1 2 G M4 पूर्वोत्तरायां ( for °रस्यां ) Ñ2 V3 B2 च , Bom and Poona eds G ( ed ) वै ( for तु ) K1 ( sup lin as in text ) D5 ययातिर्दिशि पूर्वस्यां , D3 ( marg as in text ) दक्षिणस्यां यदुं ज्येष्ठ — b ) B1 2 Dn D4 6 श्रेष्ठं , M1–3 चैव ( for ज्येष्ठं ) Ñ2 V3 T2 G3 5 M1 3 न्यवेशयत् ; G1 2 न्यवीविशत् , M4 निवेशयत् ( for न्ययोज° ) D3 न्ययोजयत नाहुष. — c ) Ñ2 D6 तु ( for च ) — d ) K1 4 Ñ1 3 V1 T1 2 G1 3 4 अभ्यषिञ्चत ( for °षिञ्चत्स ) K2 पार्थिव· ( for नाहुष ) K3 अभ्यषिञ्चत नाहुष , D6 न्ययोजयदरिंदम·

18 a ) T2 G1 गौर् ( for तैर ) — b ) T3 सपट्टणा ( for °त्तना ) Ś1 K1 2 धर्मेण परिरक्षिता , T1 G4 सशैलवनकानना — d ) M2 धर्मेत ( for धर्मेण ) K1 2 4 Ñ1 3 V2 B1 Dn2 Ds D5 6 M1 प्रति- ( for परि- ) — e ) D6 T1 G2 3 5 M2

धनुर्न्यस्य पृषत्कांश्च पञ्चभिः पुरुषर्षभैः ।
परवानभवद्राजा भारमावेश्य बन्धुषु ॥ १९
निक्षिप्तशस्त्रः पृथिवीं निरीक्ष्य पृथिवीपतिः ।
प्रीतिमानभवद्राजा ययातिरपराजितः ॥ २०
एवं विभज्य पृथिवीं ययातिर्यदुमब्रवीत् ।
जरां मे प्रतिगृह्णीष्व पुत्र कृत्यान्तरेण वै ॥ २१
तरुणस्तव रूपेण चरेयं पृथिवीमिमाम् ।
जरां त्वयि समाधाय तं यदुः प्रत्युवाच ह ॥ २२
अनिर्दिष्टा मया भिक्षा ब्राह्मणस्य प्रतिश्रुता ।
अनपाकृत्य तां राजन्न ग्रहीष्यामि ते जराम् ॥ २३
जराया बहवो दोषाः पानभोजनकारिताः ।
तस्माज्जरां न ते राजन्ग्रहीतुमहमुत्सहे ॥ २४
सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप ।
प्रतिग्रहीतुं धर्मज्ञ पुत्रमन्यं वृणीष्व वै ॥ २५
स एवमुक्तो यदुना राजा कोपसमन्वितः ।
उवाच वदतां श्रेष्ठो ययातिर्गर्हयन्सुतम् ॥ २६
क आश्रमस्तवान्योऽस्ति को वा धर्मो विधीयते ।
मामनादृत्य दुर्बुद्धे यदहं तव देशिकः ॥ २७
एवमुक्त्वा यदुं तात शशापैनं स मन्युमान् ।
अराज्या ते प्रजा मूढ भवित्रीति नराधिप ॥ २८
स तुर्वसुं च द्रुह्युं च अनुं च भरतर्षभ ।
एवमेवाब्रवीद्राजा प्रत्याख्यातश्च तैरपि ॥ २९

---

परस्तात् ( for पुर° ). $T_3$ $_4$ ते ( for तु ) $T_2$ $G_1$ प्रादात्तेषां परस्तात्तु.

19 $^a$ ) $K_2$ ( by corr. ) $_4$ $\tilde{N}_1$ $_3$ $V_1$ $_3$ $Ds_1$ ( *sup lin* ) $D_{2-4}$ $T_3$ $_4$ गृह्य , $G_5$ तस्य ( for न्यस्य ). $K_3$ पृषत्कं ( for °त्कांश् ) $M_1$ $_2$ धर्मनित्यश्च विद्वांश्च — After 19$^{ab}$, $K_4$ ins

337* जिगाय पृथिवीं सर्वां सप्तद्वीपवतीं नृपः ।

— $^c$ ) All MSS ( except Ś$_1$ $M_{1-3}$ ) जरावान् ( for पर° ) — $T_3$ reads 19$^d$–20$^d$ twice

20 For the repetition in $T_3$, cf v l 19. — $^a$ ) $V_2$ $G_2$ वि- ( for नि ) — $^b$ ) $T_3$ ( second time ) निक्षिप्य ( for निरीक्ष्य )

21 Before 21, $G_2$ ins वैशंपायन — $^b$ ) G(ed) ययातिर्युधि दुर्जयः. — $^d$ ) $D_6$ $T_1$ $_2$ $_4$ G पुत्र कार्यान्तरेण वै , $T_3$ पुत्रकृत्यावचो हि वै ( sic )

22 $^b$ ) $Dn_2$ चरेय ( for °य ) $M_1$ $_2$ ( *inf lin.* as in text ) चरेयं विषयानहम् — $^c$ ) Ś$_1$ समायस्य ( for °धाय ) — $^d$ ) Ś$_1$ तं यदुः प्रत्यभाषत — After 22, $K_4$ ins

338* नोत्सहे जरया स्थातुमन्तरा प्राप्तया तव ।
अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुष ॥
[ = Bhāgavata P, 9 18 4 ]

23 $B_3$ om 23$^{ab}$. — $^a$ ) $M_4$ दीक्षा ( for भिक्षा ). — $^b$ ) $B_1$ ब्राह्मणं यं ; $B_2$ °णाय ( for °णस्य ) $T_3$ प्रतिष्ठिता ( for °श्रुता ) — $G_2$ om 23$^c$–26$^b$. — $^c$ ) $T_2$ अनुपाकृत्य ; $M_4$ अनपत्या तु ( for °पाकृत्य ) — $^d$ ) $K_4$ $D_1$ $_4$ ग्रहीष्यामि न ( by transp ).

24 $G_2$ om. 24 ( cf v l 23 ) — $^a$ ) Ś$_1$ $D_3$ जरया , $K_1$ $_4$ $\tilde{N}_3$ $V_1$ Ds $D_2$ $M_3$ जरायां ( for °या ) — $^b$ ) $D_1$ स्नान- ( for पान- ) $T_3$ कारिण. ( for °ता· ) — $^d$ ) $M_{1-3}$ ग्रहीष्यामि कथंचन

25 $G_2$ om 25 ( cf v l 23 ). — $^b$ ) $\tilde{N}_1$ भुवि ( for नृप ) — $^c$ ) $D_3$ $T_1$ $_2$ $G_1$ $_{3-5}$ प्रतिगृह्णन्तु ते राजन् — $^d$ ) $D_3$ ह , $D_4$ ( marg as in text ) हि ( for वै )

26 $G_2$ om 26$^{ab}$ ( cf v l 23 ) — $^b$ ) $D_6$ M यदुं ( for राजा ) $M_2$ क्रोध- ( for कोप- ) — $^c$ ) $G_1$ श्रेष्ठ ( for श्रेष्ठो ) — $^d$ ) $D_3$ नाहुष ( for गर्हयन् )

27 $^a$ ) $V_2$ $D_6$ चाश्रय( $D_6$ °म )स् , Dn Ds $T_1$ $_3$ $_4$ $G_{3-5}$ आश्रयस् ( for °मस् ) Ś$_1$ $D_1$ तथा ( for तव ) $T_2$ $G_1$ आश्रमस्तव नान्योऽस्ति — $^b$ ) $V_2$ धर्मो वा ( by transp ), $D_4$ ऽन्यो धर्मो — $^d$ ) $D_1$ यद्यहं , $D_6$ $M_{1-3}$ अहं वै ; $G_5$ यदिदं ( for यदह ) $K_{2,4}$ $D_1$ $T_4$ देशक ( for देशिक )

28 $^a$ ) $D_2$ $T_2$ तात ( for तात ) — $^b$ ) Ś$_1$ सुमन्युमान् ; $K_3$ समत्सर , $V_2$ $D_2$ स मन्युना ( for स मन्युमान् ) — $^c$ ) $T_3$ न राज्यं ( for अराज्या ) $T_4$ सदा ( for प्रजा ) — $^d$ ) $B_2$ भविष्यति , $G_4$ °त्री वै , M °त्री ते ( for °त्रीति ) Ś$_1$ $\tilde{N}_3$ ( marg ) $V_1$ न संशय , $K_4$ $D_5$ $T_1$ नराधम ( for °धिप ) $K_2$ भवित्री नात्र संशयः , $T_{2-4}$ $G_{1-3}$ $_5$ भवित्री वै ( $T_2$ $G_2$ °त्री ते , $T_3$ $_4$ °ष्यति ) नराधम.

29 $^a$ ) $D_5$ तुर्वसं ( for °सुं ) Ś$_1$ $K_{2-4}$ $V_1$ $_3$ $Ds_2$ $D_{1-4}$ $T_{2-4}$ $G_4$ द्रुह्यं च ; $K_1$ द्रुह्यं वा ( for द्रुह्युं च ). $V_2$ तुर्वसुं चापि द्रुह्य च — $^b$ ) $K_1$ $\tilde{N}_1$ $_3$ B $D_1$ $_5$ [अ]प्यनुं च , $V_1$ $Ds_1$ ( orig ) $_{s2}$ [अ]प्यणुं च , $V_2$ अणुं च ; $D_3$ चाप्यणुं , $D_4$ चानुं च ( for अनुं च ) Ś$_1$ अनुं च पुरुषर्षभ ; $T_1$ $G_4$ अनुं चैव हि भारत , $T_2$ $G_{1,3,5}$ अनुं द्रुह्युं ( $T_2$ $G_5$ °ह्यं ) च भारत ; $G_2$

शशाप तानपि क्रुद्धो ययातिरपराजितः ।
यथा ते कथितं पूर्वं मया राजर्षिसत्तम ॥ ३०
एवं शप्त्वा सुतान्सर्वांश्चतुरः पूरुपूर्वजान् ।
तदेव वचनं राजा पूरुमप्याह भारत ॥ ३१
तरुणस्तव रूपेण चरेयं पृथिवीमिमाम् ।
जरां त्वयि समाधाय त्वं पूरो यदि मन्यसे ॥ ३२
स जरां प्रतिजग्राह पितुः पूरुः प्रतापवान् ।
ययातिरपि रूपेण पूरोः पर्यचरन्महीम् ॥ ३३
स मार्गमाणः कामानामन्तं भरतसत्तम ।
विश्वाच्या सहितो रेमे वने चैत्ररथे प्रभुः ॥ ३४
स यदा ददृशे कामान्वर्धमानान्महीपतिः ।
ततः पूरोः सकाशाद्वै स्वां जरां प्रत्यपद्यत ॥ ३५
तत्र गाथा महाराज शृणु गीता ययातिना ।
याभिः प्रत्याहरेत्कामान्सर्वशोऽङ्गानि कूर्मवत् ॥ ३६
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३७
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ ३८ C 1640 B 1 30 39 P 1 30 39

---

[अ]प्यनुं चैव च भारत, M4 अनुज चैव भारत — c) D3 (अ]-वदद् (for [अ]ब्रवीद्) — d) Ś1 प्रत्यायातैश् (for °ख्यातश्) K2 4 Ñ2 3 V1 3 D1–3 5 T3 4 तु (for च) K1 इति, D3 सुतै. (for अपि)

30 a) Ś1 M3 अभि-, K3 Ñ1 B3 T1 3 G3 अति- (for अपि) — b) Ś1 ययाति पृथिवीपति — M1–3 om $30^{cd}$ — c) K1 V3 ययातेः (V3 °ते), K2 यथैतत्, Ñ1 तवायं, G2 यथा तै (for यथा ते) D3 सर्वं (for पूर्वं)

31 a) Ś1 D6 T1 3 G1 3 5 M4 सुतान्राजा, T2 G1 च राजा च (for सुतान्सर्वांश्) — b) D4 चतुर पूर्वजान्सुतान्, T3 4 चतुर पूरुमुक्तवान् — d) D5 पूरुं च प्रत्युवाच ह

32 b) M1 2 (*inf lin* as in text) चरेय विषयानहम् — d) D2 परो (for पूरो) — After 32, K4 ins

339* पूरुरुवाच ।
को नु लोके मनुष्येन्द्र पितुरात्मकृत· पुमान् ।
प्रतिकर्तुं क्षमो यस्य प्रसादाद्विन्दते परम् ॥
अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितु ।
सोऽपि तद्वयसा कामाञ्जुजुषोऽव्याहतेन्द्रिय ॥
[ = (var) Bhāgavata P, 9 18 43, $44^{cd}$, $45^{cd}$ ]

33 a) K4 जरा स (by transp), Ñ1 स राजा — b) K4 Dn पुत्र (for पितु) M3 पुत्र (for पूरु) — c) B1 इति, D6 प्रति- (for अपि)

34 a) T3 4 अमार्गमाणः (for स मा°) — b) V1 अस्त (for अन्त) T1 G4 M4 भारत- (for भ°) K1 D3 -सत्तम (for °म) — c) Ds1 (*sup lin*) द्विभार्या, D1 4 5 भार्यया, D2 भार्याभ्यां (for विश्वाच्या) — d) D5 नृप, M1–3 शुभे (for प्रभु') — After 34, K1 D1 ins 340*

35 a) T1 स यथा, G2 सर्वदा (for स यदा) Ś1 K1 3 D1 G1 कामं (for कामान्) — b) Ś1 K1 3 D1 G1 वर्धमानं (for °मानान्) — K1 D1 ins. after 34 K2 4 Ñ V B Dn Ds D2–5 T3 4 subst for $35^{ab}$

340* यदावितृप्त कामाना भोगेषु च नराधिप ।
[ Ñ3 D3 नु (D5 तु) तृप्त, V1 D5 त्वतृप्त, V3 Dn [अ]-वितृप्ण, D2 वै तृप्त (for [अ]वितृप्त) Ñ1 B2 कामेषु (for कामाना) V2 B1 3 D5 यदा त्वतृ(V2 तु तृ)प्त कामेषु (B3 °च्छा) (for a) Dn Ds स (for च) ]

— c) K2 4 Ñ V B Dn Ds D1–5 T3 4 तदा (for तत) D6 पुत्र- (for पूरो) G2 हि (for वै) — d) S1 Ds तां (for स्वां) K1 3 ता जरा प्रत्यगृह्णत — After 35, Ś1 K1 ins

341* वरं चास्मै ददौ प्रीतो विपुलं वशमीश्वर ।
आचन्द्रार्कग्रहा भूमिर्भवेदिति मतिर्मम ।
अपौरवा न तु मही भविष्यति कदाचन ॥
[ K1 reads lines 2–3 on marg ]

36 a) B1 T4 अत्र (for तत्र) D4 6 G2 5 M4 गाथां (for गाथा) — b) Ñ2 V3 पुरा (for शृणु) D4 6 G2 5 गीतां (for गीता) — c) K2 यति, D5 T G M4 यो हि (for याभि) D3 कामं (for कामान्) — d) B1 2 T1 G4 सर्वतो (for °शो) B3 कूर्मोऽङ्गानीव सर्वश — After 36, V2 ins

342* स सुखी धृतिमान्धन्य परत्रेह च मोदते ।

37 c) D3 विषयै (for हविषा) — d) B2 हि (for [अ]-भि-) K2 -वर्तते (for वर्धते) — After 37, K4 ins

343* यदा न कुरुते भाव सर्वभूतेष्वमङ्गलम् ।
समदृष्टेस्तदा पुस· सर्वा' सुखमया दिश' ॥
[ = (var) Bhāgavata P, 9 19 15 ]

38 a) Ñ2 -यवौ (for -यवं) — c) D6 T1 2 G M4 एकस्यापि न पर्याप्तम् — d) K2 इति पश्यन्नमुह्यत, K4 Ñ V B Dn Ds D1–3 5 T3 4 इति पश्यन्न (Ñ1 Ds कृत्वा न, B3

यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ३९
यदान्येभ्यो न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ४०
एवमुक्त्वा स राजर्षिः सदारः प्राविशद्वनम् ।
कालेन महता चापि चचार विपुलं तपः ॥ ४१
भृगुतुङ्गे तपश्चीर्त्वा तपसोऽन्ते महायशाः ।
अनश्नन्देहमुत्सृज्य सदारः स्वर्गमाप्तवान् ॥ ४२
तस्य वंशे महाराज पञ्च राजर्षिसत्तमाः ।
यैर्व्याप्ता पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥ ४३
यदोस्तु शृणु राजर्षे वंशं राजर्षिसत्कृतम् ।
यत्र नारायणो जज्ञे हरिर्वृष्णिकुलोद्वहः ॥ ४४
स्वस्थः प्रजावानायुष्मान्कीर्तिमांश्च भवेन्नरः ।
ययातेश्चरितं नित्यमिदं शृण्वन्नराधिप ॥ ४५

इति श्रीहरिवंशे द्वाविंशोऽध्यायः ॥ २२ ॥

---

मत्वा न ) मुह्यति — After 38, D6 T1 2 G M4 ins :

344* उत्पन्नस्य रुरो शृङ्ग वर्धमानस्य वर्धते ।
[ G1 2 वर्धति ( for °ते ) ]

39 $^{b}$ ) Ś1 V3 D6 G4 पावकम्, K1 ( *sup lin* ) 3 4 D2 5 पातकम्, T2 पापक ( for °कम् ) —After 39$^{ab}$, T2 G1 ins 345* —T2 om 39$^{c}$–40$^{d}$ — After 39, D2 ins 345*

40 T2 om. 40 ( cf v. l 39 ) M4 om ( hapl ) 40. — $^{a}$ ) D3 यश्च (for यदा ) Ś1 K3 परेभ्यो ( hypermetric ), Ñ1 B1 तेभ्यो, D6 G2 5 M1–3 चायं ( for [अ]न्येभ्यो ) B2 3 D5 बिभ्येत ( for बिभेति ) K1 T3 4 यदा परेभ्यो न बिभेद्, D2 न बिभेति परेभ्योऽयं — $^{b}$ ) K3 D4 [अ]न्यान् ( for [अ]स्मान् ) B2 3 बिभेति ( for बिभ्यति ) D3 यस्मादन्ये न बिभ्यति — G1 om ( hapl ) 40$^{cd}$ — $^{d}$ ) T3 सदा, G2 तत ( for तदा ) — K Ñ2 3 V B Dn Ds D1 3–6 T1 3 4 G2 3 5 ins after 40 D2 after 39 T2 G1 after 39$^{ab}$

345* या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजत सुखम् ॥
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
धनाशा जीविताशा च जीर्यतोऽपि न जीर्यति ॥
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । [5]
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

[ ( L 1 ) Ñ2 यान्दुस्त्यजान् ( for या दुस्त्यजा ) T G1 3 5 जीर्यतो या न जीर्यते ( G1 5 °ति, G3 °त ) ( for $^{b}$ ) — After line 1, K4 ins

345A* ता तृष्णां दु खनिवहा शर्मकामो द्रुत त्यजेत् ।
[ = Bhāgavata P., 9 19 16$^{cd}$ ]

— D3 om ( hapl. ) lines 2–3. — ( L 2 ) K3 4 Dn D4 G1 या ( for यो ) K2 तान्दृष्ट्वा ( for ता तृष्णा ) — ( L. 3 ) T1 2 4 G1 2 5 जीर्यन्ते ( for the first °न्ति ) — After line 3, B1 ins

345B* चक्षु श्रोत्रे च जीर्येते तृष्णैका तरुणायते ।

— G1 om ( hapl ) line 4 — ( L 4 ) K1 3 4 Dn1 D1 4 5 G3 जीविताशा धनाशा च, Dn2 जीविताशा च धनाशा च ( hypermetric ), T4 धनाशा जीविताशाश्च ( for $^{a}$ ) T2–4 G4 5 जीर्यत ( for °ति ) — ( L 5 ) K1 शमात् ( for महत् ) — ( L 6 ) K3 [इ]ह ( for [ए]ते ). Ñ2 V3 D1 2 4 T2 G1 कला नार्हन्ति षोडशीम् ( for $^{b}$ ) ]

41 Before 41, V2 ins वैशंपायन उवाच — $^{a}$ ) V3 तु ( for स ) — $^{d}$ ) T2 G1 3 5 ववृधे ( for चचार )

42 $^{a}$ ) Ś1 महाराज, K1–3 Dn Ds1 ( marg ) D4 5 तपस्तप्त्वा, D6 T1 2 G M1 °श्रृङ्गे, T3 4 M2 3 °श्रत्वा ( °श्रीत्वा ) — $^{b}$ ) Ś1 K1 3 Ñ2 V3 G2 3 महातपा ( for °यशा ) — Ś1 om 42$^{c}$–43$^{b}$ — $^{c}$ ) D5 अमुह्यन्, D6 T1 अयत्नाद्, T2 G1–3 5 अयत्नं ; G4 अधस्ताद् ( for अनश्नन् ) — $^{d}$ ) K2 D6 T1 2 G M सदार सोऽगमद्दिवम्

43 Ś1 om 43$^{ab}$ ( cf v l 42 ). — $^{a}$ ) D4 [ए]ते वै, D6 T1 2 G M4 वश्या, M1–3 जज्ञुर् ( for वंशे ) — G2 lacuna for $^{b}$ — $^{b}$ ) T2 G1 4 -सत्तम ( for °मा ) — $^{c}$ ) T1 2 G1 M4 तैर् ( for यैर् ) T2 आसा ( for व्याप्ता )

44 $^{a}$ ) V2 T2 G1 च ( for तु ) Ś1 K1 2 राजेन्द्र ( for राजर्षे ) — $^{b}$ ) Ś1 -सत्तमम् ; K3 V2 -सत्तम, Ñ1 D5 सत्कृत , M2 ( *inf lin* ) संस्कृतम् ( for -सत्कृ° ) — $^{d}$ ) Ś1 कृष्ण. ( for वृष्णि )

45 V1 Dn D1 transp 45$^{ab}$ and 45$^{cd}$. — $^{a}$ ) Ś1 K1 3 4 Ñ3 V1 2 D1 4 T2 धन्य , K2 स्वर्ग्य ; Ñ2 V3 D3 5 T4 G2 शृण्वन्, B1 धर्म्यः, D6 M1–3 तत. ; G3 स्मृतः ;

# २३

जनमेजय उवाच ।
पूरोर्वंशमहं ब्रह्मञ्श्रोतुमिच्छामि तत्त्वतः ।
द्रुह्योश्चानोर्यदोश्चैव तुर्वसोश्च द्विजोत्तम ।
विस्तरेणानुपूर्व्या च तद्भवान्वक्तुमर्हति ॥ १
वैशंपायन उवाच ।
वृष्णिवंशप्रसङ्गेन स्वं वंशं पूर्वमेव हि ।
शृणु पूरोर्महाराज वंशमग्रे महात्मनः ।
विस्तरेणानुपूर्व्या च यत्र जातोऽसि पार्थिव ॥ २
हन्त ते वर्तयिष्यामि पूरोर्वंशमनुत्तमम् ।
द्रुह्योश्चानोर्यदोश्चैव तुर्वसोश्च परंतप ॥ ३
पूरोः प्रवीरः पुत्रोऽभून्मनस्युस्तस्य चात्मजः ।
राजा चाभयदो नाम मनस्योरभवत्सुतः ॥ ४
तथैवाभयदस्यासीत्सुधन्वा च महीपतिः ।
सुधन्वनः सुबाहुस्तु रौद्राश्वस्तस्य चात्मजः ॥ ५　C 1658 B 1 31 8 P 1 31 8

---

G5 M4 स्वन्त ( for स्वस्थ ) — After $45^{ab}$, D6 T1 2 G2–5 M ins

346* धन्यस्य महतो धर्म्यं श्रीमतो धीमतस्तथा ।

[ T1 G5 M4 धन्य ( for धर्म्यं ) T2 G4 ऽभिमतम् ( for धी° ) ]

— K4 Ñ1 V3 D4 5 om $45^{cd}$ — $^{c}$) K2 3 ययाति- ( for °तेश् ). K2 V2 B1 T2 3 दिव्यम् ; Ñ3 V1 B2 Dn D1 T1 G3 4 पुण्यम् ( for नित्यम् ) — $^{d}$) K1 Ds D3 G3 M4 इदं शृणु , B1 शृण्वन्नित्यं , B2 Dn D1 G4 पठञ्शृण्वन् ( for इद शृ° ) K2 D3 T3 4 नर सदा ( for नराधिप ) — After 45, D2 ins

347* मुच्यते पातकेभ्यश्च अपुत्री न भवेत्कदा ।

COLOPHON — *Mention of the Epic* K3 B3 Dn Ds2 — *Mention of Khila* Ś1 K3 Ñ3 V B Dn Ds1 D1 2 4 6 — *Sub-parvan* D5 पारिजात — *Adhy name* K2 4 Ñ V1 D4. 5 ययातिवंश , K3 V2 B Dn Ds D6 T2 G1–3 M4 ययातिचरितम् , D1 ययातिमोक्षः , D2 3 ययातिवंशवर्णनम् ( D3 °शानुकीर्तनम् ) — *Adhy no* ( figures, words or both ) Ś1 23 , K3 D1 3 T1 G2 4 5 28 , Ñ3 V1 D4 29 , V2 Dn Ds2 T3 30 , D6 T4 31 , T2 G1 M4 27 , G3 20 , M1–3 24 — *Śloka no* K1 Dn 51 , D3 33

## 23

1 M4 om the ref D2 om $1^{cd}$ — $^{c}$) Ś1 K1 3 4 D3 द्रुह्यस्य ( for द्रुह्योश्च ) D6 T1–3 G1–3 5 M अनोर् , some Mss चाणोर् ( for चानोर् ) — $^{d}$) D1 वंशं चैव , some Mss तुर्वशोश्च ( for तुर्वसोश्च ) K2 Ñ V B D ( D2 om ) T4 G4 पृथक्पृथक् , T1 3 परंतप ( for द्विजोत्तम ) T2 G2 तुर्वशोर्द्विजसत्तम — After $1^{cd}$, D6 reads $2^{ab}$, repeating it in its proper place G2 om ( hapl. ) $1^{e}$–$2^{d}$ Ñ3 V1 2 B1 2 Ds transp $1^{ef}$ and $2^{ab}$ — $^{e}$) Ś1 T1 2 4 G1 3 5 M3 [आ]नुपूर्व्याच् ( for °पूर्व्या ) — T2 repeats $1^{f}$–$2^{a}$ after $2^{c}$. — $^{f}$) V2 तं ( for तद् ) V1 तद्भवान्प्रब्रवीतु मे

2 G2 om $2^{abcd}$ ( cf v l 1 ) Ñ3 V1 2 B1 2 Ds transp $1^{ef}$ and $2^{ab}$ D6 reads $2^{ab}$ for the first time after $1^{cd}$ — $^{a}$) K3 वृष्णेर् ( for वृष्णि- ) — $^{b}$) Ś1 K V1 3 Dn2 Ds1 D1 3 4 T2 4 G1 M4 स्व ( for स्वं ) S1 च , K1 3 B2 3 D5 6 ( second time ) T1–3 G1 3–5 M तु ( for हि ) — Before $2^{cd}$, some Mss ins वैशंपायन उवाच — $^{d}$) K2–4 Ñ1 2 V3 B Dn D1–5 T3 4 वंशमुत्तमपौ( K3 D2 4 5 °पू )रुषम् — $^{e}$) Ś1 Ñ1 D6 T G1–3 5 M3 [आ]नुपूर्व्याच् ( for °पूर्व्या ) — After $2^{e}$, T2 repeats $1^{f}$–$2^{a}$ — $^{f}$) T3 भारत ( for पार्थिव )

3 T4 om 3 — $^{a}$) Ś1 यत्र , T1 G4 अहं ( for हन्त ) K2 V2 D2 4 T3 G1 3 5 M1 2 4 कथयिष्यामि , K4 Ñ2 3 V1 B2 3 Ds कीर्त° , V3 D5 वर्ण° ( for वर्त° ) — $^{c}$) K1 2 4 D3 द्रुह्यस्य ( for द्रुह्योश्च ) S1 द्रुह्यस्यानुयदोश्चैव — $^{d}$) S1 जनाधिप , K Ds2 D3 नराधिप , M1 नृपोत्तम ( for परंतप ).

4 $^{a}$) T1 2 G M4 तु ( for ऽभून् ) K2 4 Ñ1 Dn D1 3–5 T3 4 पूरो पुत्र ( D1 पुत्र पूरो ) प्रवीरोऽभून् , Ñ2 3 V B Ds D6 प्रचिन्वन्त प्रवीरोऽभून् — $^{b}$) Ñ2 मनस्यस् , T2 G1–3 5 M नमस्युस् ( for मन° ) D6 T1 2 G M4 वै सुत ( for चात्मज ) — $^{c}$) K1 4 राजापि , Ñ1 राजासाव् ( hypermetric ), Ñ2 3 V1. 3 B2 D1 3 5 राजाथ , D3 6 राजा तु , T1 2 G M तथैव ( for राजा च ). — $^{d}$) T2 G1 2 5 M नमस्योर् ( for मन° )

5 $^{a}$) D1 [अ]पि ( for [आ]सीत् ) — $^{b}$) Ñ1 [अ]पि , B1 D4 स , B3 D5 तु ( for च ) V2 Ds D2 6 T1 2 G M सुधन्वा नाम पार्थिव ( T1 °व ) — After $5^{ab}$, M4 reads 11–12 Ds2 repeats $5^{c}$–$6^{b}$ after $7^{ab}$ D6 reads $5^{c}$–$6^{b}$ twice — $^{c}$) K2 4 V3 Ds1 s2 ( first time ) D2 4 T3 4 सुबाहुश्च , Ñ2 बाहुगवो , Ñ3 V1 बहुवर' ; V2 B3 D5 6 ( first

रौद्राश्वस्य दशार्णेयुः कृकणेयुस्तथैव च ।
कक्षेयुः स्थण्डिलेयुश्च संनतेयुस्तथैव च ॥ ६
ऋचेयुश्च जलेयुश्च स्थलेयुश्च महाबलः ।
वननित्यो वनेयुश्च पुत्रिकाश्च दश स्त्रियः ॥ ७
रुद्रा शूद्रा च मद्रा च मलदा मलहा तथा ।
खला बला च राजेन्द्र तलदा सुरथापि च ।
तथा गोपबला च स्त्री रत्नकूटा च ता दश ॥ ८
ऋषिर्जातोऽत्रिवंशे च तासां भर्ता प्रभाकरः ।

---

time) बहुगव , Ds2 (second time) बहुशर (for सुबाहुस्तु). S1 सुधन्वो सुबहु पुत्रो, Ñ1 सुधन्वन· सुबर्हं पुत्रो (hypermetric), M1–3 बाहु सुधन्वन पुत्रो — Ñ2 3 V1 2 B°. 3 D. ins after $5^{c}$ Ds2 D6 after the repetition of $5^{c}$

348* संपातिस्तस्य चात्मज ।
सपानेस्तु रहस्याती

[(L 1) Ñ2 D5 शम्यातिस्, Ñ. V1 सजा° (for सपा°) — D5 om line 2. — (L 2) Ñ2 शम्यातेस्त (for सपा°) Ds2 D6 रहपाता (for रहस्याती) Ñ3 V1 सजातिश्च रहजाती ]
— $^{d}$) D2 सुबाहोस् (for रौद्राश्वस्) B2 Ds2 (second time) T1 2 G M4 वै सुत (for चात्मज) D6 (first time) रुद्राश्वस्तस्य वै सुत·, D6 (second time) रौद्राश्वास्तस्य चात्मजा

6 For the repetition in Ds2 D6, cf v 1 5 — $^{a}$) Ñ1 तु पुत्राश्च , Ñ2 3 V1 2 B° 3 Ds2 (second time) घृताच्यां वै ; D1 5 दशार्णेषु, D6 (first time) दशाश्वस्तु (for °र्णेयुः). D6 (second time) दशाश्वस्य घृताच्यां वै — Ñ2 3 V1 2 B2 3 ins after $6^{a}$ Ds2 D6 after the second occurrence of $6^{a}$

349* दशाप्सरसि सूनव· ।
ऋचेयु· प्रथमस्तेषां

[(L 1) Ñ2 3 V2 Ds2 दशाप्सरससूनव· — (L 2) Ds2 कृत्वेयु (for ऋचेयु).]
— Ñ1 om $6^{b}$–$7^{c}$ — $^{b}$) V1 कृकलेय्वस्, V3 °णेयस्; D5. 6 (first time) G1 4 M कृपणेयुस् (for कृक°) — V2 om (hapl) $6^{cd}$ D6 transp $6^{cd}$ and $7^{ab}$ — $^{c}$) B1 च स्थलेयुश्, T1 कुण्डलेयुश्, T3 च बलेयुश् (for स्थण्डिलेयुश्) — $^{d}$) S1 च वीर्यवान्, M1–3 च पार्थिवः (for तथैव च) V8 (marg as in text) जलेयुश्च महायशा ·

7 Ñ1 om $7^{abc}$ (of v 1 6) D6 transp $6^{cd}$ and $7^{ab}$ — $^{a}$) Ñ2 V2 B2 3 दशार्णेयुश्, D2 ऋते° (for ऋचे°) B1 Dn D1 4 स्थलेयुश् (for ज°) K1 चिरेयुश्च स्थलेयुश्च, Ñ3 वत्तेयुश्च स्थले°; V1 ऋतेय्वश्च स्थलेय्वश्च, D6 दशार्णेयु· स्थलेयु°, T3 4 कक्षेयुश्च: स्थण्डिलेयुश्च ; G1 ऋचेयु शल्मलेयुश्च · — $^{b}$) K1 3 Ñ3 B1 Dn D1 4 6 T3 4 G2 जलेयुश्, V1 जलेय्वश्; D2 अब्जेयुश्; D5 व्रते°, G1 स्थिते° (for स्थले°) S1 K1 3 4 Ñ2 3 V1 Dn D1 6 महायशाः (for °बलः). — After $7^{ab}$, Ds2 repeats $5^{c}$–$6^{b}$ — For $7^{ab}$, D3 subst

350* षष्ठश्चैव रुचेयुश्च जलेयुश्चैव सप्तम ।
धर्मेयुश्च दृढेयुश्च वनेयुर्दशम स्मृत ॥

— $^{c}$) K2 B3 Dn D3 5 धलेयुश्च , Ñ3 धर्मेयुश्च , D1 धननित्यो , D4 वधेयुश्च (for वननित्यो) S1 परेयुश् (for वने°) V1 धर्मेय्वश्च वनेय्वश्च , V2 3 वलनित्यो वलेयुश्च — $^{d}$) D1 स्युर् (for च) T4 पुत्रका दश च स्त्रिय — After 7, K4 ins

351* दशैतेऽप्सरस· पुत्रा वनेयुश्चावम स्मृतः ।
घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मन ॥

8 $^{a}$) K1 3 4 Ñ2 3 V B2 Dn D1 2 4–6 T4 भद्रा ; M4 आर्द्रा (for रुद्रा) K1 (*sup lin* as in text) सुरा , T3 4 G2 श्रमा (for शूद्रा) S1 K2 B2 3 T4 G3–5 भद्रा , Ñ2 B1 माद्रा , V1 मुद्रा , D6 मन्द्रा , T3 रुद्रा , G2 मात्रा , M4 चन्द्रा (for मद्रा) T2 G1 भ( T2 रु )द्रा च मा च माता च — $^{b}$) T3 4 मद्रा वा (for मलदा) M4 मलभा (for °हा) K V2 Dn D1–4 6 शलदा म( D4 न )लदा तथा , V1 सलदा चामला तथा , V3 शमहा मदना तथा , G5 मदला मदहा तथा — $^{c}$) S1 खला खमा , K1 बेला बला , K2 शला वना ; K3 वेला खला , K4 Dn D1–3 ख( D1 खे )ला चला , V3 खसा वला , D4 वेला वला , T1 G3 खल्वा माला , T3 हला मला , T4 बला मला , G° 5 M4 खला मला , G4 खलानाले , M1–3 बलाबले (M1 °ला) (for खला बला) Ñ V1 ख( Ñ3 खि )लदा चैव राजेन्द्र , V2 B D5 खलदा च ततो ( B2 °था ) राजन् , T2 बला मलेन्द्र राजेन्द्र , G1 खिला मला च राजेन्द्र — $^{d}$) S1 G5 तलवा , K1 नरदा , V3 D1–3 नलदा , Dn Ds1 बलदा , T1 2 G2–4 तलावा ; G1 तथा वा , M1 3 तलपा , M2 स्थलपा (for तलदा) K2 बलदा सुरदापि च , K3 तथैभा सुरथा नृप ; Ñ1 V2 नलदा सुरसापि च , Ñ2 V1 नलदा सुरदापि च , Ñ3 B Ds बलदा सुर( Ds2 च र )सापि च , D4 5 नरदा सुरथा ( D5 °दा ) अपि , D6 बलदा सुरसा अपि , T3 तलवा सरतापि च , T4 तलवापरितोपि च , M4 तलावा सुरथैव च — $^{e}$) S1 सोमबला , K1 गोमफला , K2 Ñ1 2 V2 B Dn Ds D3. 5 गोचपला , K4 V3 D1 2 गोपाचला , T3 4 [ए]व चपला (for गोपबला) Printed eds तु (for च) T2 G1 [ए]व (for स्त्री). Ñ3 V1 तथा गोचपला चैव — $^{f}$) K1 3 4 D5 G2 रत्नकोटी ; D1 रत्नोत्करा , D2 रत्नकण्ठी ; D6 °पूती , T1 G1 3–5 M °कुट्टी ; T4 °दण्डा (for °कूटा) S1 D4 [इ]ति ता , Ñ2 V8 तथा (for च ता)

रुद्रायां जनयामास सोमं पुत्रं यशस्विनम् ॥ ९
स्वर्भानुना हते सूर्ये पतमाने दिवो महीम् ।
तमोभिभूते लोके च प्रभा येन प्रवर्तिता ॥ १०
स्वस्ति तेऽस्त्विति चोक्तो वै पतमानो दिवाकरः ।
वचनात्तस्य विप्रर्षेर्न पपात दिवो महीम् ॥ ११
अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः ।
यज्ञेष्वत्रिधनं चैव सुरैर्यस्य प्रवर्तितम् ॥ १२
स तासु जनयामास पुत्रिकासु सनामकान् ।
दश पुत्रान्महात्मानस्तपस्युग्रे रतान्सदा ॥ १३
ते तु गोत्रकरा राजन्नृषयो वेदपारगाः ।
स्वस्त्यात्रेया इति ख्याताः किं त्वत्रिधनवर्जिताः ॥ १४
कक्षेयुतनयास्त्वासंस्त्रय एव महारथाः ।
सभानरश्चाक्षुषश्च परमेक्षुस्तथैव च ॥ १५
सभानरस्य पुत्रस्तु विद्वान्कालानलो नृपः ।
कालानलस्य धर्मज्ञः सृञ्जयो नाम वै सुतः ॥ १६
सृञ्जयस्याभवत्पुत्रो वीरो राजा पुरंजयः ।
जनमेजयो महाराज पुरंजयसुतोऽभवत् ॥ १७
जनमेजयस्य राजर्षेर्महासालोऽभवत्सुतः ।
देवेषु स परिज्ञातः प्रतिष्ठितयशास्तथा ॥ १८
महामना नाम सुतो महासालस्य धार्मिकः । C 1672 B I 31 22 P I 31 22

9 a) T3 4 ऽस्य (for ऽत्रि-) K Ñ3 V B2 Dn D1–3 , 6 T G M1 3 4 तु, M2 वै (for च) — b) Ś1 च भास्कर, Ñ1 भयंकर, D6 प्रजाकर (for प्रभा°) — c) K Ñ2 3 V Dn D1–4 6 T4 G1 2 भद्रायां, M4 आर्द्रायां (for रुद्राया) — d) Ś1 M4 सोमपुत्रं, K1 सोऽथ पुत्रं, K2–4 Ñ V1 B2 3 Dn1 Ds D1 2 4–6 T2–4 G1 2 सुत सोम, B1 स तं सोम, Dn2 D3 सुतसोम, T1 G3 सुतं पुत्रं (for सोम पुत्र)

10 a) V1 वृते (for हते) — c) D2 तेनाभि-, G1 ततोऽभि- (for तमोभि-) G2 लोकेश (for लोके च) T1 तमोभूते च लोके च — d) V3 प्रजा (for प्रभा) K1 3 B2 D4 प्रकल्पिता, Ñ1 प्रदर्शिता (for प्रवर्तिता)

11 M4 reads 11–12 after $5^{ab}$ — a) T2 G1 स्वस्ति (for ऽस्त्विति) K1 [उ]क्तं, K2 G5 [उ]क्त्वा (for [उ]क्तो) — b) Ds1 om (hapl) from दिवाकर up to पपात (in $11^{d}$) D5 पतमाने दिवाकरे — c) K3 राजर्षेर्, T2 G1 विषय, M1–3 ब्रह्मर्षेर् (for विप्र°) — d) Ñ1 B1 ततो (for दिवो)

12 For the sequence in M4, cf v l 11 — b) K4 M1–3 महायशा (for °तपा) — c) D4 यज्ञेऽपि (for यज्ञेषु) Ñ1 त्रिविधं, V3 अत्रेर्धन (for अत्रिधन) K3 Dn Ds यस्य (for चैव) — d) Ś1 मुनेर्, V2 B2 3 देवैर् (for सुरैर्) K3 Dn Ds1 चैव, T3 अस्य, G2 4 यत्र (for यस्य)

13 b) Ś1 सनाभिकान्, K2 पुलोमकान्, K4 G3 सुनाम°; V2 सनातनान् (for सनामकान्) K3 पुत्रकान्पुरुनामकान् — c) K1 T G1 2 4 M4 पुत्रा (for पुत्रान्) K2 B2 3 D2 4 महासत्त्वांस्, K4 Dn Ds D1 °त्मासौ, V2 B1 °सत्त्वास्; D3 T4 G5 °त्मा स, D6 °त्मा वै (for °त्मानस्) — d) Ś1 Ñ2 T1 2 रता सदा, K2 रतास्तदा, D2 रतांस्तथा, T3 4 सदा रता, G1 2 रतास्तदा (for रतान्सदा) G4 M4 तप सु निरता सदा

14 a) K2 तेषु, V2 तत्ते, M1–3 ते तद् (for ते तु) M1 3 -धरा (for -करा) — d) K1 Ñ3 B2 3 G1 [अ]त्रि (for [अ]त्रि-)

15 T2 G1 repeat 15 after $22^{ab}$ — a) K1–3 Ñ V2 B D T2 (second time) 3 4 G1 (second time) 3 5 M4 कक्षेयोस्, K4 काक्षेयास्, V1 कक्षेयास् (for °यु) K2 Ñ1 3 V1 2 B2 3 Dn Ds D2 T2 G1 (both second time) 5 चासंस्, T3 राजस्, M1 3 तत्र (for त्वासंस्) — b) K2 एते (for एव) — c) K2 संतानवश् (for सभानरश्) M1 2 च परम. (for चाक्षुषश्च) T2 G1 (both second time) महानश्चाक्षुषश्चैव — d) K2 Ñ1 3 V1 2 B2 3 परमन्युस्, Ñ2 V3 T2 G1 (last two first time) M4 °मेषुस्, D4 °मक्षैस्, T2 G1 (both second time) परमेष्ठी, T3 परायुश्च, T4 परमेयुस्, M1 2 °वीर्यस्, M3 °माक्षस् (for °मेक्षुस्) B1 परमन्युश्च भारत

16 K3 om 16 — a) K2 संतानवस्य पुत्रस्तु, M1 सदानरस्य पु° — b) M4 विद्वान्कालानलोपम — c) T1 G5 M1 कालानरस्य (for °नलस्य) — d) Ś1 वीर्यवान्, K4 विश्रुत., T1 2 G1 4 5 भारत, G3 पार्थिव (for वै सुत)

17 Ñ2 om (hapl) $17^{cd}$ — c) Hypermetric V3 महाबाहु (for °राज) — For $17^{cd}$, D3 subst

$352^{*}$ पुरंजयान्महाराज पुत्रोऽभूज्जनमेजय ।

18 a) V1 Dn राजर्षिर् (for °र्षेर्) — b) Some Mss महाशालो (for °सालो) M4 सुतोऽभवत् (by transp) — c) Ś1 वेदेषु, D4 5 यज्ञेषु (for देवेषु) D6 G1 2 5 M1–3 सु-, G4 च (for स) K4 परिख्यात (for °ज्ञात°) K1 3 वेदेषु परिनिष्णात — d) N (except Ś1 K1 3) T2–4 G1 2 भुवि (for तथा) M4 प्रतिष्ठा यत्र शाश्वती

जज्ञे वीरः सुरगणैः पूजितः स महामनाः ॥ १९
महामनास्तु पुत्रौ द्वौ जनयामास भारत ।
उशीनरं च धर्मज्ञं तितिक्षुं च महाबलम् ॥ २०
उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः ।
नृगा कृमी नवा दर्वा पञ्चमी च दृषद्वती ॥ २१
उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः ।
तपसा चैव महता जाता वृद्धस्य चात्मजाः ॥ २२
नृगायास्तु नृगः पुत्रः कृम्याः कृमिरजायत ।
नवायास्तु नवः पुत्रो दर्वायाः सुव्रतोऽभवत् ॥ २३
दृषद्वत्यास्तु संजज्ञे शिबिरौशीनरो नृप ।
शिबेस्तु शिबयस्तात यौधेयास्तु नृगस्य ह ॥ २४
नवस्य नवराष्ट्रं तु कृमेस्तु कृमिला पुरी ।
सुव्रतस्य तथाम्बष्ठा तितिक्षोस्तु प्रजाः शृणु ॥ २५
तितिक्षुरभवद्राजा पूर्वस्यां दिशि भारत ।
उशद्रथो महाबाहुस्तस्य फेनः सुतोऽभवत् ॥ २६
फेनात्तु सुतपा जज्ञे जज्ञे सुतपसः सुतः ।

19 $^{b}$) Ś1 V1 3 (marg as in text) T1 G4 M4 धीमत (for धार्मिक.) — $^{c}$) D5 वव्रे (for जज्ञे) — $^{d}$) Ś1 K4 Ñ V B Dn1 D1 3 5 6 G2 पूजित सु-, T2 G1 सुपूतस्तु (for पूजित. स) M4 महायशा (for °मना.) K1 3 T1. 3 4 G3 5 M2–4 पूजित सुम( K3 M3 °स्तु म )हायशा

20 $^{a}$) K2 च (for तु) Ñ1 V2 G4 M द्वौ पुत्रौ (by transp) — $^{b}$) T1 G4 पार्थिव (for भारत)

21 $^{a}$) D2 कान्तास्तु, D3 पत्न्यश्च (for °स्तु) — $^{b}$) M1 2 (*inf lin* as in text) 3 -कन्यका (for -वंशजा) D2 पञ्च राजसुतोपमा — D4 reads $21^{c}$–$22^{d}$ on marg — $^{c}$) Ds1 मृ( *sup lin* नृ )गी, D1 नृगी, D3 मृ( *sup lin* as in text )गा (for नृगा) Ś1 (*inf lin*) क्षमी, K2 V2 B1 2 T4 कृमिर्; T2 G1 कृतिर् (for कृमी) Ñ2 दर्वी, D1 दीर्घा, T2 दर्पा (for दर्वा) — $^{d}$) T1 G3–5 M3 तु (for च)

22 $^{a}$) V3 च (for तु). — $^{b}$) Ñ1 तात, D2 [ए]ते स्म (for तासु) M1–3 महाबला (for कुलोद्वहा·). — After $22^{ab}$, T2 G1 repeat 15 K2 transp $22^{cd}$ and $23^{ab}$ — $^{c}$) K1 3 D1 5 T1 G4 M वै सु- (for चैव) K2 T3 4 तपसा महता चैव — $^{d}$) K1 3 T1 G3–5 M भारत (for चात्मजा·)

23 K2 transp $22^{cd}$ and $23^{ab}$ — $^{a}$) Ś1 नृगायां; D3 (marg as in text) मृगायास् (for नृगा°) D3 मृग· (for नृग.) V3 पुत्रं (for पुत्रः) — $^{b}$) Ś1 K1 2 Ñ1 2 V B Ds D2 3 5 6 T1 G2. 3 5 M4 कृम्यां, T2 G1 कृत्या (for कृम्या·) T2 G1 कृतिर् (for कृमिर्) — $^{c}$) T2 G1 नवायां (for °यास्) Ñ2 V नरायास्तु (V3 °यां तु) नरः पुत्रो — $^{d}$) D1 दीर्घाया· (for दर्वायाः) M1–3 दुद्रुवो (for सुव्रतो)

24 $^{a}$) D6 G5 M1 3 दृषद्वत्यां (for °त्यास्) T2 G1 सुतो (for तु सं-) — $^{d}$) V2 तु; D3 T4 च (for ह). D3 यौधेयाश्च मृ( *sup lin* नृ )गस्य च.

25 $^{a}$) B2 D6 T2 G1 4 -राष्ट्रस् (for -राष्ट्रं). V3 D2 च (for तु). Ñ2 V1 2 नरस्य नरराष्ट्रं तु — $^{b}$) Ñ1 कृमिला येन सा पुरी, D6 निमेस्तु मिथिला पुरी· — $^{c}$) M1–3 दुद्रुवस्य (for सुव्रतस्य) T4 सुता (for तथा) — N (except Ś1 Ñ1) T2–4 G1–3 5 M4 ins after $25^{c}$ T1 G4 cont after 354*

353* शिबिपुत्रान्निबोध मे ॥
शिबेश्च पुत्राश्चत्वारो वीरा वै लोकविश्रुता· ।
वृषदर्भ सुवीरश्च कैकेयो मद्रकस्तथा ॥
तेषां जनपदा· स्फीता कैकेया मद्रकास्तथा ।
वृषदर्भा सुवीराश्च [5]

[T1 G4 read lines 1–4 after line 5 —(L 2) K1 पुत्राश्च (by transp), K3 पुत्रास्तु B1 2 Ds D6 T1 2 G1 2 4 5 M4 शिबेश्च शिबय पुत्राश् (for $^{a}$) B1 Ds D6 T1 2 G1 2 4 5 M4 चत्वारो (for वीरा वै) Dn D5 त्रैलोक्य-, D2 लोकेषु (for वै लोक-) — T4 reads line 3 twice —(L 3) D1 वृषादर्भि, D6 वृषादर्वि (for वृषदर्भ) D3 सुराष्ट्रश् (for सुवीरश्) K1 मद्रक कैकयस्तथा, K3 मद्रक कैकय तथा, K4 Ñ3 V3 D1 G1 कैकयो मद्रकस्तथा (for $^{b}$) — T1 3 4 om line $4^{a}$ —(L 4) Ds मद्रका कै( Ds2 के )कया-स्तथा (for $^{b}$) — G3 om line 5 —(L 5) D3 G2 वृषदर्भ (for °र्भा) G5 पृषदश्च सुवीरश्च]

— $^{d}$) K1 ° सु-, K2 B1 D5 T3 4 च (for तु). D5 प्रजा (for प्रजा)

26 $^{a}$) K1 3 तैतिक्षुर्; B Ds तैतिक्षवो, D5 तितिक्षेयो (for तितिक्षुर्) — $^{c}$) Ś1 D6 G2–5 M4 कुशद्रथो; Ñ1 दृष°, Ñ2 B1 जय°, D1 2 बृह°, T2 G1 कुशक्रोधो, M1 3 ककुद्रथो (for उशद्रथो) K2 4 Ñ V B1 2 Dn Ds D1 2 4. 5 T4 महाराज; M1 महाभाग (for °बाहु) D3 उषद्रथोऽभवत्तस्मात्, T3 उषद्रथ इति ख्यात. — $^{d}$) K1 तस्य शैल., K2 4 Ñ1 3 V3 D1 2 4 5 T3 4 शैलस्तस्य; Ñ2 V1 2 Dn Ds D3 फेनस्तस्य (by transp). D6 T1 2 G M ऽभवत्सुत· (by transp).

27 $^{a}$) Ś1 B1 Dn D3 फेनस्य; K1 D5 शलस्य; K2. 4 Ñ3 V3 D1. 2 4 T3. 4 शैलस्य (for फेनात्तु) Ñ1 शैलस्य तु सुतो

बलिर्मानुषयोनौ तु स राजा काञ्चनेषुधिः ।। २७
महायोगी स तु बलिर्बभूव नृपतिः पुरा ।
पुत्रानुत्पादयामास पञ्च वंशकरान्भुवि ।। २८
अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च ।
पुण्ड्रः कलिङ्गश्च तथा बालेयं क्षत्रमुच्यते ।
बालेया ब्राह्मणाश्चैव तस्य वंशकरा भुवि ।। २९
बलेस्तु ब्रह्मणा दत्तो वरः प्रीतेन भारत ।
महायोगित्वमायुश्च कल्पस्य परिमाणतः ।
चतुरो नियतान्वर्णास्त्वं च स्थापयितेति ह ।। ३०

इत्युक्तो विभुना राजा बलिः शान्तिं परां ययौ ।
कालेन महता राजन्स्वं च स्थानमुपागमत् ।। ३१
तेषां जनपदाः पञ्च वङ्गाङ्गाः सुह्मकास्तथा ।
कलिङ्गाः पुण्ड्रकाश्चैव प्रजास्त्वङ्गस्य मे शृणु ।। ३२
अङ्गपुत्रो महानासीद्राजेन्द्रो दधिवाहनः ।
दधिवाहनपुत्रस्तु राजा दिविरथस्तथा ।। ३३
पुत्रो दिविरथस्यासीच्छक्रतुल्यपराक्रमः ।
विद्वान्धर्मरथो नाम तस्य चित्ररथः सुतः ।। ३४
तेन धर्मरथेनाथ तदा विष्णुपदे गिरौ । C 1695 B 1 31 45 P 1 31 45

जज्ञे — $^b$ ) $K_2$ $T_{3\ 4}$ राज्ञ , $V_2$ $B_{2\ 3}$ Ds $D_1$ सुत., $T_1$ $G_{1\ 3-5}$ $M_{2\ 4}$ बलि , $T_2$ बल , $G_2$ $M_3$ बली ( for जज्ञे ) $Ñ_1$ च ( for सु- ) $K_{1\ 4}$ $Ñ_2$ $V_{2\ 3}$ B Dn Ds $D_{1\ 2\ 4\ 5}$ $M_1$ बलिः ( for सुत ) — $^c$ ) $Ś_1$ $K_1$ बडिर्, $V_2$ B Dn Ds $D_5$ $G_4$ जातो , $T_1$ बली , $T_2$ $G_1$ बलान् ( for बलिर् ) $T_2$ $G_1$ -धन्वा ( for -योनौ ) $Ś_1$ च , $B_2$ वै ( for तु )

28 $^a$ ) $K_{1\ 3}$ $D_6$ $T_1$ $G_{3\ 5}$ $M_{1\ 3\ 4}$ तु स ( by transp ), $T_2$ $G_1$ स च $Ś_1$ $K_1$ बडिर्, $K_2$ $D_{1\ 3\ 4}$ $G_{1\ 5}$ बली ( for बलिर् )

29 $Ś_1$ om $29^a$–$30^b$ — $^a$ ) $D_6$ $T_2$ $G_{1\ 2}$ प्रथमजो , $G_3$ तु प्रथमो ( for प्रथमतो ) — $^b$ ) $B_1$ स्वन्तस् ( for सुह्मस् ) — $^c$ ) Some Mss पुण्ढ्र: $Ñ_3$ $V_1$ पुण्ड्रश्चैव कलिङ्गश्च — $^d$ ) $T_3$ यैरियं पाल्यते मही — $^f$ ) $M_{1-3}$ बलि- ( for तस्य ) $D_6$ $T_{1\ 2}$ $G_{1\ 2\ 4}$ M विभो ( for भुवि )

30 $Ś_1$ om $30^{ab}$ ( cf v l 29 ) — $^{ab}$ ) $K_{1\ 4}$ $Ñ_2$ Dn $Ds_2$ $D_{1\ 2\ 4}$ $T_1$ $G_3$ दत्ता वरा. ( for दत्तो वर. ) — $M_2$ om $30^{cd}$ — $^d$ ) $D_3$ बल चापरिमाणत. — After $30^{cd}$, N ( except $Ś_1$ $Ñ_1$ ) S ( except $M_{1-3}$ ) ins.

354* संग्रामे चाप्यजेयत्वं धर्मे चैव प्रधानताम् ।
त्रैलोक्यदर्शनं चापि प्राधान्य प्रसवे तथा ।
बलस्याप्रतिमत्व वै धर्मतत्त्वार्थदर्शनम् ॥

[ $D_6$ om line $1^a$ —( L 1 ) $T_1$ $G_5$ धर्मं ( for धर्मे ) $D_5$ धर्मे प्रज्ञानता तथा , $M_4$ धर्मश्चैव प्रधानत ( for $^b$ ) —( L 2 ) $K_3$ -दीपन ( for -दर्शन ) $K_{1\ 3}$ $B_{2\ 3}$ $D_1$ [ए]व ( for [अ]पि ) $K_2$ सामर्थ्यं ( for प्राधान्यं ) $K_{1\ 3}$ $D_{3\ 4}$ यशसे ( for प्रसवे ) $Ñ_2$ सामान्य लप्स्यसे तथा ( for $^b$ ) — After line 2, $G_4$ reads $31^{ab}$, repeating it in its proper place —( L 3 ) $V_2$ बलेन , B Dn Ds $D_{5,6}$ $T_{1\ 2}$ $G_{1-3\ 5}$ $M_4$ बले च ( for बलस्य ) ]
— After the above, $T_1$ $G_4$ cont 353* — $^e$ ) $K_4$ ऽपि यतो ( for नियतान् ) $T_{3\ 4}$ अर्थास् ( for वर्णास् ) — $^f$ ) $G_1$ स्वांश् ( for त्वं ) $Ś_1$ $K_4$ $D_{2\ 5}$ $M_4$ [इ]ति च , $K_3$ Dn $T_1$ भुवि , $V_2$ ह्यसि ( for [इ]ति ह )

31 $G_4$ reads $31^{ab}$ for the first time after line 2 of 354* — $^a$ ) $K_2$ $T_2$ $G_1$ बलिना , $V_2$ विधिना ( for विभुना ) — $^b$ ) $V_3$ Ds पर ( for परां ) — After $31^{ab}$, $Ñ_{2\ 3}$ V $B_{2\ 3}$ Dn Ds ins

355* तस्य ते तनया. सर्वे क्षेत्रजा मुनिपुंगवा ।
संभूता दीर्घतपस' सुदेष्णायां महौजस. ।
बलिस्तानभिषिच्ये ह पञ्च पुत्रानकल्मषान् ॥
कृतार्थ सोऽपि योगात्मा योगमाश्रित्य स प्रभु ।
अधृष्य सर्वभूताना कालापेक्षी चरत्युत ॥ [5]

[ L 1 ) $B_2$ क्षेत्रेपु , $B_3$ क्षत्रिया ( for क्षेत्रजा ) Ds -पुगवान् ( for °वा ) $Ñ_2$ क्षत्रिया बलिपुंगवान् ( for $^b$ ) —( L 2 ) $Dn_2$ -तमस ( for -तपस ) —( L 4 ) $Ñ_3$ $V_{1\ 2}$ धर्मात्मा ( for योगात्मा ) — ( L 5 ) Dn Ds चरन्नपि ( for °त्युत ) ]
— $^c$ ) $Ś_1$ $Ñ_2$ $V_3$ राजा ( for राजन् ) — $^d$ ) $K_{2\ 4}$ Ñ $V_{2\ 3}$ $B_1$ Dn Ds $D_{1-5}$ उपेयिवान् ( for उपागमत् ) $T_{3\ 4}$ सम्यग्ज्ञा- ( $T_4$ स्वं च ज्ञा )नमुपेयिवान्

32 $^b$ ) $T_4$ सर्वकास्, $G_{3\ 5}$ सुह्मगास्, $M_3$ °ह्मस् ( for °कास् ) $Ñ_1$ वङ्गसुह्मास्तथैव च , $Ñ_3$ $V_{1\ 2}$ B Ds अङ्गा वङ्गा ससु- ( $Ñ_3$ $V_{1\ 2}$ °ङ्गाश्च सु )ह्मका , $G_2$ वङ्गका सिन्धुकास्तथा — $^c$ ) $K_{1\ 3}$ पौण्ड्रकाश्, $K_3$ पुण्ड्रि°, $Ds_1$ $D_{1\ 2\ 4}$ $T_4$ पुण्ढ्र° ( for पुण्ड्र° ) — $^d$ ) $D_3$ पुत्राश्च ( for प्रजास्तु ) $T_4$ वै ( for मे )

33 $^d$ ) $K_2$ दधि- ( for दिवि- ) $K_{2\ 4}$ Ñ V B Dn Ds $D_{1-5}$ $T_{3\ 4}$ ऽभवत् ( for तथा )

34 $^a$ ) $D_4$ [अ]पि ( for [आ]सीच् ) $K_2$ पुत्रो दधिरथस्यापि — $^b$ ) $K_2$ आसीच्छक्र- ( for शक्रतुल्य- ) — $^d$ ) $Ñ_2$ चैत्र- ( for चित्र- ) $T_{3\ 4}$ स्मृत. ( for सुत. )

35 $^a$ ) $K_{1\ 3,\ 4}$ Dn $D_4$ $T_{3\ 4}$ $G_4$ चित्र- ( for धर्म- ). $B_1$

यजता सह शक्रेण सोमः पीतो महात्मना ॥ ३५
अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत् ।
लोमपाद इति ख्यातो यस्य शान्ता सुताभवत् ॥ ३६
तस्य दाशरथिर्वीरश्चतुरङ्गो महायशाः ।
ऋश्यशृङ्गप्रभावेन जज्ञे कुलविवर्धनः ॥ ३७
चतुरङ्गस्य पुत्रस्तु पृथुलाक्ष इति स्मृतः ।
पृथुलाक्षसुतो राजा चम्पो नाम महायशाः ।
चम्पस्य तु पुरी चम्पा या पूर्वं मालिनी बभौ ॥ ३८
पूर्णभद्रप्रसादेन हर्यङ्गोऽस्य सुतोऽभवत् ।
ततो विभाण्डकस्तस्य वारणं शत्रुवारणम् ।
अवतारयामास महीं मन्त्रैर्वाहनमुत्तमम् ॥ ३९
हर्यङ्गस्य सुतः कर्णो विकर्णस्तस्य चात्मजः ।

---

$T_1$ $G_{3-5}$ [अ]पि ( for [अ]थ ) — $^{b}$) $B_{2\ 3}$ $Ds_1$ ( marg ) $D_6$ $M_3$ तथा ( for तदा ) $\tilde{N}_{1\ 3}$ ( marg ) $V_{1\ 2\ 3}$ ( marg ) $Ds_1$ ( marg as in text ) कालजरे, $B_1$ $Ds_2$ कालजिरे ( for विष्णुपदे )

36 $^{b}$) $D_6$ $T_{1\ 2}$ $G_{1-3\ 5}$ M सुतो ( for पुत्रो ) $D_3$ तदा ( for ऽभवत् ) — $^{c}$) Some Mss रोमपाद ( for लो° )

37 $^{a}$) $Ś_1$ चातिरथिर्, $K_{1\ 3\ 4}$ चातिरथो ( for दाशरथिर् ) — $^{c}$) Some Mss ऋष्यशृङ्ग- ( for ऋश्य° ) K $\tilde{N}_{2\ 3}$ V $B_{2\ 3}$ D ( except $D_6$ ) $T_{3\ 4}$ $G_{3-5}$ -प्रसादेन ( for -प्रभावेन )

38 $D_4$ reads 38 on marg — $^{a}$) $D_4$ ऽभूत् ( for तु ) — $^{b}$) $D_2$ महायशा., $D_6$ $T_{1\ 2}$ $G_{2\ 3\ 5}$ $M_1$ इति श्रुत ( for इति स्मृत ) — $T_3$ om ( hapl ) $38^{c}$ — $^{f}$) $T_2$ पूर्वा ( for पूर्वं ) $D_6$ $G_2$ मालती ( for मालिनी ) $Ś_1$ [अ]भवत् ( for बभौ ) $K_{2\ 4}$ $\tilde{N}_{2\ 3}$ V Dn $D_{1\ 2\ 4}$ $T_4$ मालिनी याभवत्पुरा, $\tilde{N}_1$ B Ds $D_{3\ 5}$ या ( $B_1$ सा ) मालिन्यभवत्पुरा

39 $^{a}$) $K_4$ $D_{1\ 4}$ $T_4$ पूर्णचन्द्र-, $D_6$ $T_{1\ 2}$ $G_{1-3\ 5}$ $M_4$ पूर्वभद्र ( for पूर्ण° ) $M_{1\ 2}$ ( *inf lin* ) -प्रभावेन ( for -प्रसादेन ) — $^{c}$) $K_{1-3}$ $Dn_2$ $D_{1\ 4}$ वै( $D_{1\ 4}$ वि )भाण्डकस्; $\tilde{N}$ V B $Dn_1$ Ds $D_{2\ 5\ 6}$ वै( $\tilde{N}$ $V_1$ $D_2$ वि )भाण्डकिस्, $M_1$ वैभण्डकिस् ( for विभाण्डकस् ) — $^{d}$) $K_4$ वाहनं, $T_1$ दारुणं, $T_2$ $G_1$ वारण ( for °णं ) $Dn_1$ om ( hapl ) शत्रुवारणम्. K $\tilde{N}$ $V_{2\ 3}$ B $Dn_2$ Ds $D_{2-6}$ $T_{1\ 2}$ G $M_4$ शक्र- ( for शत्रु ). $Ś_1$ वारणः शत्रुवारणः — $^{e}$) Hypermetric — $^{f}$) $\tilde{N}_1$ $V_2$ $D_{2\ 5}$ $T_2$ $G_{1-3,\ 5}$ $M_{1\ 4}$ वारणम्; $\tilde{N}_2$ बलिनम् ( for वाहनम् ).

40 $D_6$ $T_2$ $G_{1-3\ 5}$ repeat $40^{a}$ and $40^{b}$ ( by transp. ) after 356* — $^{a}$) $V_3$ हर्यशस्य; $D_1$ हर्यश्वस्य ( for °ङ्गस्य ) K $\tilde{N}_{2\ 3}$ V B Dn Ds $D_{1-5\ 6}$ ( first time ) $T_{1\ 2}$ ( first time ) $_{3\ 4}$ ( orig ) $G_{1-3}$ ( last three first time ) $_{4\ 5}$ ( first time ) $M_4$ तु दायादो, $T_4$ ( marg ) तु तत्त्वज्ञो ( for सुतः कर्णो ) — K $\tilde{N}_{2\ 3}$ V B Dn Ds $D_{1-5}$ $T_{1\ 3\ 4}$ $G_4$ $M_4$ ins after $40^{a}$ $D_6$ $T_2$ $G_{1-3\ 5}$ after the first occurance of $40^{a}$.

356* राजा भद्ररथः स्मृत ।
पुत्रो भद्ररथस्यासीद्बृहत्कर्मा प्रजेश्वर ।
बृहद्भर्भः सुतस्तस्य यस्माज्जज्ञे बृहन्मना ॥
बृहन्मनास्तु राजेन्द्रो जनयामास वै सुतम् ।
नाम्ना जयद्रथं नाम यस्माद्दृढरथो नृप ॥
आसीद्दृढरथस्यापि विश्वजिज्जनमेजय ।
दायादस्तस्य कर्णस्तु

[ ( L 1 ) $D_4$ भद्रो, $M_4$ नाम्ना ( for राजा ) $T_2$ $G_1$ भद्र इति ( for भद्ररथ ) — ( L 2 ) $\tilde{N}_3$ ( marg ) $V_1$ इन्द्रो ( for पुत्रो ) $T_2$ -सुतस्य ( for -रथस्य ) $T_1$ बृहद्भानु, $T_2$ $G_3$ ब्रह्मकर्मा ( for बृहत्कर्मा ) — ( L 3 ) $\tilde{N}_3$ $V_1$ $T_{1\ 4}$ $G_4$ बृहद्भानु, $V_3$ $D_5$ $D_{2\ 3\ 6}$ °द्रर्भ, $T_2$ $G_{1\ 3}$ ब्रह्मद( $G_3$ °ग )र्भ ( for बृहद्दर्भ ) $K_2$ $\tilde{N}_2$ $V_{2\ 3}$ $B_{1\ 2}$ Ds तस्माज् ( for य° ) — ( L 4 ) $D_{2\ 3}$ $T_3$ राजेन्द्र, $G_3$ दायादो ( for राजेन्द्रो ) — ( L 5 ) $Dn_1$ वीर, $Dn_2$ वीर ( for नाम ) $T_1$ नाम्ना जयद्रथ इति ( for $^{a}$ ) $\tilde{N}_2$ $V_2$ तस्माद् ( for य° ) $T_2$ $G_{1\ 3\ 5}$ जातो दृढो, G ( ed ) विड्रथो ( for दृढरथो ) $K_2$ सुत, $D_3$ $T_3$ ऽभवत् ( for नृप ) — ( L 6 ) G( ed ) विड्रथस्य ( for दृढ° ) — ( L 7 ) $D_4$ शत्रुजित्तन्महावीरो ]

— $^{b}$) $D_4$ दायादस् ( for विकर्णस् ) $D_6$ $T_2$ $G_{1-3\ 5}$ ( all second time ) हर्यङ्गस्तस्य चाभवत् — $K_2$ reads $40^{cd}$ after 358A — $^{c}$) $K_1$ $D_{5\ 6}$ च ( for तु ) — For $40^{cd}$, $M_{1-3}$ subst ·

357* विकर्णस्य सुतस्त्वासीदङ्गदः कुलवर्धन ।

— $K_{1\ 3,\ 4}$ $\tilde{N}_{2\ 3}$ $V_1$ Dn Ds $D_{1\ 3\ 4\ 6}$ ins after 40 $K_2$ after $40^{ab}$ $V_2$ after the repetition of line 3 of 363*.

358* बृहद्दर्भसुतो यस्तु राजा नाम्ना बृहन्मना ।
तस्य पत्नीद्वय चासीच्चैद्यस्यैते सुते शुभे ।
यशोदेवी च सत्त्वी च ताभ्यां वंशः स भिद्यते ॥
जयद्रथस्तु राजेन्द्र यशोदेव्यां व्यजायत ।
ब्रह्मक्षत्रोत्तर सत्त्व्यां विजयो नाम विश्रुत. ॥
विजयस्य धृतिः पुत्रस्तस्य पुत्रो धृतव्रत ।
धृतव्रतस्य पुत्रस्तु सत्यकर्मा महाव्रत ॥
सत्यकर्मसुतश्चापि सूतस्त्वधिरथस्तु वै ।
यः कर्णं प्रतिजग्राह तत कर्णस्तु सूतज ॥
एतद्व कथितं सर्वं कर्णं प्रति महाबलम् ।
कर्णस्य वृषसेनस्तु वृषस्तस्यात्मज स्मृत ॥

[ ( L 1 ) $K_2$ बृहद्धर्म-, $\tilde{N}_{2\ 3}$ $V_{1,\ 2}$ °द्भानो ( for °द्दर्भ- ) $D_3$ बृहद्भानु सुतो यस्य ( for $^{a}$ ) $V_2$ यस्य जातो ( for राजा नाम्ना ) $K_2$ नाम्ना राजा बृहद्रथः ( for $^{b}$ ). — ( L. 2 ) $D_3$

तस्य पुत्रशतं त्वासीदङ्गानां कुलवर्धनम् ॥ ४०
एतेऽङ्गवंशजाः सर्वे राजानः कीर्तिता मया ।
सत्यव्रता महात्मानः प्रजावन्तो महारथाः ॥ ४१
ऋचेयोस्तु महाराज रौद्राश्वतनयस्य वै ।
शृणु वंशमनुप्रोक्तं यत्र जातोऽसि पार्थिव ॥ ४२

ऋचेयुतनयो राजन्मतिनारो महीपतिः ।
मतिनारसुताश्चासंस्त्रयः परमधार्मिकाः ॥ ४३
तंसुरोघोऽप्रतिरथः सुबाहुश्चैव धार्मिकः ।
सर्वे वेदव्रतस्नाता ब्रह्मण्याः सत्यवादिनः ॥ ४४
इला नाम तु यस्यासीत्कन्या वै जनमेजय । C 1.7 9 B 1 32 6 P 1 32 6

---

भार्या- ( for पत्नी- ) K1 चैद्यस्योभे , Ñ3 ( marg ) V1 वैद्य- तस्य , V2 वैनतेय- , D3 वैद्यस्योभे ( for चैद्यस्यैते ) K1 3 उभे सुते , Ñ2 शुभे सुते ( by transp ) Ñ3 वैनतेयसुते उभे ( for b ) — ( L 3 ) K2 V2 Dn1 D3 सत्या , Ñ2 3 V1 सधी ( for सत्वी ) K2 V2 D3 तु , Dn Ds प्र- ( for स ) — D6 om lines 4–6 — ( L 5 ) Ds2 -दत्तोत्तर ( for -क्षत्रोत्तर ) K1 V1 Dn1 Ds सत्या ( for सत्व्या ) K2 ब्रह्मदत्तोत्तर सत्या , Ñ2 °क्षत्रोद्भव सत्या , Ñ3 V2 °क्षत्रात्मज सत्या ( for a ) K2 विजय नाम विश्रुतम ( for b ) — ( L 7 ) D6 धृतव्रत सुतस्तस्याः ( for a ) K2 महारथ , Ñ2 3 D3 4 6 °यशा ( for °व्रत ). V2 सत्यधर्मा महायशा ( for b ) — ( L 8 ) V2 सत्यधर्म ( for °कर्म- ) D3 विश्वकर्मा सुतस्तस्य ( for a ) K2 तत्सुतो ( for सुतस्तु ) V1 विरथस्तु , Dn2 [अ]धिरथ स ( for °थस्तु ) Ñ3 V2 राजा अधिरथि स्मृत ( Ñ3 °थिर्मत ) — After line 8, K2 ins

358A* धार्मिक सर्ववर्णस्तु सेनस्तस्यात्मजोऽभवत् ।

— K2 om lines 9–11 — ( L 9 ) Ñ2 3 V2 D3 तेन ( for तत ) — D6 om line 10 — ( L 10 ) Dn वै ( for व ) — ( L 11 ) K1 3 Dn2 D6 सुत ( for स्मृत ) ]

41 B2 om 41 — a ) K4 D2 -वङ्गजा ( for -वंशजा ) — b ) D4 राजन्या ( for राजान. ) Ś1 राजान कीर्तिवर्धना — c ) T2 G1 2 तस्य पुत्रा ( for सत्यव्रता )

42 b ) K4 Ñ3 V1, 3 B2 D1 2 भद्राश्व ( for रौद्राश्व- ) K1 3 D5 6 T1 2 M ह ( for वै ) T3 वंश वक्ष्यामि तच्छृणु — T3 om $42^{cd}$. — c ) V2 मया ( for अनु- ) Dn -प्रासं ( for -प्रोक्तं ) — d ) D5 G3 M1 2 तत्र ( for यत्र ) — After 42, N ( except Ś1 Ñ1 ) T3 4 ins an addl colophon [ *Mention of the Epic* K3 Dn Ds2 — *Mention of Khila* K1 3 V2, 3 B D ( except D5 ) — *Adhy name* K2–4 Ñ2 3 V B D कक्षेयु( V2 क्षेमक , B2 कुक्षेयु )वंशानुकीर्तनम् — *Adhy no* . K3 D1 3 29 , Ñ3 V1 D4 30 , V2 3 B2 Dn2 Ds2 31 , D6 T3 4 32 ]

— After the addl colophon, all Mss ( except Ś1 Ñ1 M1–3 ) ins.

359* वैशंपायन उवाच ।
अनाधृष्यस्तु राजर्षिर्ऋचेयुश्चैकराट् स्मृत ।
ऋचेयोर्ज्वलना नाम भार्या वै तक्षकात्मजा ॥

[ Some Mss om the ref — ( L 1 ) K1 2 D1 अनाधृष्टस् , K3 B3 Dn °धृष्टिस , T2 G1 °युषस ( for °धृष्यस ) D2 3 ऋतेयुश् ( for ऋचे° ) T3 ऋचेयुरभवत्सुत ( for b ) ]

43 G2 M4 read $43^{ab}$ twice — a ) K Ñ3 V1 B1 3 Dn Ds2 D1–6 T1 3 4 G2 ( both times ) 4 M4 ( both times ) तस्या स देव्या राजर्षिर ( T4 जनिता ), Ñ2 V2 3 B2 Ds1 तस्या देव्या स राजर्षिर् , T2 G1 3 5 तस्यां राजर्षिरभवन् — b ) Ñ1 मतिमानो , some Mss अन्तिनारो ( for मति° ) M4 ( first time ) महामति ( for महीपति ) — After $43^{ab}$, T3 reads $44^{ab}$, repeating it in its proper place T1 transp $43^{cd}$ and $44^{ab}$

44 S1 om 44 T1 transp $43^{cd}$ and $44^{ab}$ T3 reads $44^{ab}$ for the first time after $43^{ab}$ — a ) Ñ2 तंसुराद्यो , D6 M1–3 त्रस्नुरोघो , Cnp तंसुरोघ ( for तंसुरोघो ) K1 2 तसु सुरौघोऽतिरथ , V2 Dn1 D3 तंसुराद्य प्र° , T3 ( second time ) ज्येष्ठस्तस्य प्रतिरथ — b ) V2 सुबलिश् , V3 सुवार्णश् , D6 G2 5 सुतपाश् ( for सुबाहुश् ) K3 पार्थिव ( for धार्मिक ) D2 सुधन्वांशुश्च धार्मिक , M1 युवनाश्वश्च पार्थिव ( *inf lin* धार्मिक ), M2 3 युवनाश्वस्तु ( M3 °श्च ) धार्मिक — K Ñ2 3 V B D T2 4 G ins after $44^{ab}$ T1 after $43^{cd}$ T3 after the repetition of $44^{ab}$

360* गौरी कन्या च विख्याता मान्धातृजननी शुभा ।

[ V1 परि- ( for च वि- ) D1 3 6 T4 मान्धातुर् ( for °तृ- ) B3 तथा ( for शुभा ) ]

— K1 om $44^{cd}$ — c ) K2 3 D4 -व्रतास्नात ; Ñ1 Ds1 -विद स्नात , V2 B1 2 Ds2 -विदस्तत्र , T1 -विद स्नाता ( for -व्रत स्नाता ) — d ) D6 T2 G2 3 5 M4 सर्वे ब्रह्मण्यवादिन — K2–4 Ñ2 3 V B D ( except D6 ) T G1 3–5 ins after 44 K1 cont after 360*

361* सर्वे कृतास्त्रा बलिन सर्वे युद्धविशारदा ।
पुत्रोऽप्रतिरथस्यासीत्कण्वः समभवन्नृप ।
मेधातिथि सुतस्तस्य यस्मात्काण्वोऽभवद्द्विज ॥

[ T1 2 G1 3 4 om line 1 — ( L 2 ) Some Mss. प्रतिरथस्य K2 T2 4 G1 3 4 [अ]पि ( for [आ]सीत् ) — ( L 3 ) Dn यस्मात्काण्वायना द्विजा , T2 G1 °त्कण्वाभवन्द्विजा ( for b ) ]

45 M1 om 45 — a ) Ñ1 corrupt Some Mss इडा and इळा ( for इला ) D4 नाम्ना ( for नाम ). Ś1 K1 ( marg

हतस्त्वं दर्पजैर्दोषैः क्षमां योऽतीत्य भाषसे ॥ २४
अधमस्त्वं मम मतो धिगेतत्तव वाग्बलम् ।
न तत्र पुरुषाः सन्ति यत्र गर्जन्ति योषितः ॥ २५
अहं त्वां दैत्य पश्यामि पूर्वेषां मार्गगामिनम् ।
प्रजापतिकृतं सेतुं को भित्त्वा स्वस्तिमान्व्रजेत् ॥ २६
अद्य त्वां नाशयिष्यामि देवव्याघातकारिणम् ।
स्वेषु स्वेषु च स्थानेषु स्थापयिष्यामि देवताः ॥ २७
एवं ब्रुवति वाक्यं तु मृधे श्रीवत्सधारिणि ।
जहास दानवः क्रोधाद्धस्तांश्चक्रे च सायुधान् ॥ २८
स बाहुशतमुद्यम्य सर्वास्त्रग्रहणं रणे ।
क्रोधाद्रुधिररक्ताक्षो विष्णोर्वक्षस्यताडयत् ॥ २९
दानवाश्चापि समरे मयतारपुरोगमाः ।
उद्यतायुधनिस्त्रिंशाः सर्वे विष्णुमभिद्रवन् ॥ ३०
स ताड्यमानोऽतिबलैर्दैत्यैः सर्वायुधोद्यतैः ।
न चचाल हरिर्युद्धेऽकम्प्यमान इवाचलः ॥ ३१
संसक्तश्च सुपर्णेन कालनेमिर्महासुरः ।
सर्वप्राणेन महतीं गदामुद्यम्य बाहुभिः ।
मुमोच ज्वलितां घोरां संरब्धो गरुडोपरि ॥ ३२
कर्मणा तेन दैत्यस्य विष्णुर्विस्मयमागमत् ।
येन तस्य सुपर्णस्य पतिता मूर्ध्नि सा गदा ॥ ३३

— c) K Ñ1 2 V2 3 B1 2 D T2–4 G4 M4 महता, T1 सहसा (for मनसा) Ñ3 V1 क्षमा बल हि महतां, M3 क्षमां च लेभे मनसा — d) T1. 2 4 G1–3 5 M चेदम् (for वाक्यम्)

24 B3 om 24 (cf v l 22) — a) Ñ2 V2 Ds M4 अल्पं दर्प-, D6 अल्प दैत्य- (for अलं दर्प-) T2 G1 3–5 -बल-दैत्य (for -बल दैत्य) Ś1 D1 चरं (D1 °लं) दर्पबलं दैत्य, K Ñ1 3 V1 B2 Dn D3 5 T1 M2 अल्पदर्पबलो दैत्यः (K3 V1 B2 Dn D3 °त्य), G2 अल्पदर्पबलं दैत्य — b) Ś1 Ñ2 V2 3 B1 2 Ds D1. 2 4 6 T1 4 G2 M1 2 4 अक्रोधजं (for मत्क्रो°) K Ñ1 3 V1 Dn D3 5 स्थित क्रोधादमद्रुदन् T2 G1 3 स्थिरक्रोधम(G3 °ब)ल बलम्, T3 वीरमक्रोधज बलम्, G4 5 स्थित क्रोधामलं बलम् (sic) — c) G1 4 5 तु (for त्वं) K Ñ V B1 D (except D6) T1 आत्मनो (for दर्पजैर्) — d) D1 हि न (for ऽतीत्य) G1 भाषसि (for °से)

25 a) M3 अबलस् (for अधमस्) T2 G1 मदोन्मत्त; G3–5 इमं मत्त (for मम मतो) — b) T2 G M4 किम् (for धिग्) Ś1 दैत्य (for एतत्)

26 D6 om 26 T4 om. 26–27. — d) Ñ3 भित्त्वा क (by transp), S (T4 om) को हित्वा Ś1 K2–4 V3 B3 D5 G2 भवेत् (for व्रजेत्) V1 हित्वा क स्वस्तिमान्भवेत्

27 T4 om 27 (cf v l 26) — a) D6 अहं (for अद्य) D2 अद्य त्वां घातयिष्यामि — b) Ds2 -व्यापार- (for व्याघात). K1 2 Ñ3 V1 2 D2 3 5 -कारकम, K3 T1 कारणम् (for -कारि°) Ś1 K4 V3 देवव्यापारकण्ट(K4 °घात)कम्, Ñ1 2 Dn D1 T3 °व्यापार(Ñ2 T3 °द)कारकम्, T2 G M देवा(G1 °हि)नामपकारिणम् — c) V1 [ए]व (for च) T1 2 G स्थानेषु स्वेषु च स्वेषु (G2 स्वेषु स्वान्), M4 स्थानेषु प्रापयिष्यामि. — d) M4 स्वेषु स्वेषु च देवता

28 Before 28, Ñ2 V2 B1, 2 Ds ins. वैशंपायन उवाच. — a) Ś1 K1 3 B2 तद्वाक्य, B3 D3 6 वाक्ये तु (for वाक्यं तु) T3 4 इति ब्रुवति वा तस्मिन् — d) T3 बाहूंश्च (for हस्तांश्च) G1 4 5 M4 ऽथ, M3 स (for च) K3 D1 सायकान् (for सायुधान्) K4 Ñ1 2 3 (marg as in text) V3 Dn D2–4 हस्ते कृत्वा च सायकान्, V2 हस्तांश्चक्रे तु सायकान्, T1 G3 हस्त चक्रे च सायुधम्

29 a) T4 -चयम् (for -शतम्) — b) D2 प्रग्रहं, T2 G M4 -गहनं (for -ग्रहणं) M1 2 उत्प्लुवन्गगनं रणे — c) Ś1 K1 3 Ñ3 V1 B Ds D4–6 T G2 3 5 M3 4 द्विगुण- (for रुधिर-) G1 4 क्रोधाद्द्विगुणताम्राक्षो — d) N (except Ś1) T4 G3 विष्णुं (for विष्णोर्)

30 b) M1 3 सर्वे मय- (for मयतार-) — After 30ab, G1 reads line 1 of 523*, repeating it in its proper place — d) K2 3 Ñ V2 3 B1 2 Ds1 D2–6 दृष्ट्वा विष्णुम्, Ñ3 (marg) V1 दृष्ट्वा कृष्णम् (for सर्वे विष्णुम्). Ś1 उपाद्रवन् (for अभि°) K4 Dn Ds2 D1 दृष्ट्वा विष्णुमुपा(Ds2 °मथा)द्रवन्, T G M2 4 विष्णुमभ्यद्रवन्रणे

31 a) T3 हास्यमानो (for ताड्य°) K1 ऽपि बलैर्, K2 ऽरिबलैर्; Ñ1 2 ऽरिगणैर्. V3 विमलैर् (for ऽतिबलैर्) — b) K4 दैत्य (for दैत्यै) — d) K2 4 V1 B2 Dn1 D1 2 4 6 ऽकम्पमान (for ऽकम्प्य°)

32 a) T2 सरक्तश्च, T3 स सलक्त, T4 स सयुक्त (for ससक्तश्च) K4 असकृच्च सुपर्णे तु — c) Ñ1 महता (for °तीं) — d) T3 दानव (for बाहुभि) — e) D6 T G1 3 4 M4 ज्वलती (for ज्वलितां) — f) T2 G1 सशब्दो, M3 सक्षुब्धो (for संरब्धो) Ñ1 संरब्धो गरुडोरसि — After 32, G1 2 ins 523*

33 a) Ś1 T4 G3 तस्य (for तेन) — Ś1 om 33b. — b) G5 हरिर् (for विष्णुर्). K2, 3 Ñ2, 3 V B1, 3 D3, 6 T1, 3, 4

सुपर्णं व्यथितं दृष्ट्वा क्षतं च वपुरात्मनः ।
क्रोधात्संरक्तनयनो वैकुण्ठश्चक्रमाददे ॥ ३४
व्यवर्धत च वेगेन सुपर्णेन समं विभुः ।
भुजाश्चास्य व्यवर्धन्त व्याप्नुवन्तो दिशो दश ॥ ३५
स दिशः प्रदिशश्चैव खं च गां चैव पूरयन् ।
ववृधे स पुनर्लोकान्क्रान्तुकाम इवौजसा ॥ ३६
तं जयाय सुरेन्द्राणां वर्धमानं नभस्तले ।
ऋषयः सह गन्धर्वैस्तुष्टुवुर्मधुसूदनम् ॥ ३७
स द्यां किरीटेन लिखन्साभ्रमम्बरमम्बरैः ।
पद्भ्यामाक्रम्य वसुधां दिशः प्रच्छाद्य बाहुभिः ॥ ३८
स सूर्यकरतुल्याभं सहस्रारमरिक्षयम् ।
दीप्ताग्निसदृशं घोरं दर्शनीयं सुदर्शनम् ॥ ३९
सुवर्णरेणुपर्यन्तं वज्रनाभं भयावहम् ।
मेदोस्थिमज्जारुधिरैः सिक्तं दानवसंभवैः ॥ ४०
अद्वितीयं प्रहारेषु क्षुरपर्यन्तमण्डलम् ।
स्रग्दाममालाविततं कामगं कामरूपिणम् ॥ ४१ C 2747 B I 48 42 P I. 48 42

आगत , $D_5$ आविशत् ( for आगमत् ) — $T_{1,2}$ $G_{3-5}$ M ins after $33^{ab}$ $G_{1\ 2}$ after 32

523* स तेन ताडित पक्षी चचाल च पुन पुन ।
हरिणा वर्धितबलो न मोहमुपगच्छति ॥

[ $G_1$ reads line 1 for the first time after $30^{ab}$ —( L 1 ) $G_3$ मुहुर्मुहु ( for पुन पुन ) — $M_3$ om line 2 —( L 2 ) $M_4$ अवि- ( for उप ) ]

— $^{c}$ ) $Ś_1$ येन नाम , K Ñ V $B_2$ D य( $K_1$ त )दा तस्य , T G $M_4$ यदा तेन , $M_{1-3}$ यदा चास्य ( for येन तस्य ) — $^{d}$ ) $K_{1\ 2}$ $V_2$ $B_3$ Ds $T_2$ $M_{1\ 2}$ पातिता ( for प° ) — After 33, $K_{1-3}$ $Ñ_{2,3}$ V B D ( except $D_1$ ) $T_{3\ 4}$ ins

524* तदागमत्पदा भूमिं पक्षी व्यथितविग्रह ।

[ $D_5$ अगमच्च तदा भूमौ ( for $^{a}$ ). $B_2$ ( marg as above ) -विक्रम ( for -विग्रह ) ]

$Ñ_2$ $V_3$ Dn $D_{5\ 6}$ cont ·

525* काष्ठै सर्ष्टिशिलाभिश्च वज्रप्रहरणैस्तत ।
जघ्नुस्ते समरे विष्णु गोपाल च महारणे ।
भ्रमन्तं घूर्णमानं च स्तुतिं देवा प्रचक्रिरे ॥
जय देव महाबाहो मधुकैटभनाशन ।
हिरण्यकशिपोर्वक्षो नखलाङ्गलदारण ॥ [5]
उत्तस्थौ च रणाद्विष्णुरमरै मस्तुन पुरा ।
हतं विष्णु समाज्ञाय शङ्ख दध्मौ स दानव ॥
मृदङ्गाश्च त्रिधा तत्र वादयन्तो महासुरा ।
तालाश्रयाश्च ननृतुर्महोत्सव इवाबभौ ॥

[ ( L 1 ) $D_6$ इष्टा- ( for सर्ष्टि- ) —( L 3 ) $Ñ_2$ त , $V_3$ तु ( for च ) $D_5$ भ्रमन्स घूर्णमानस्तु ( for $^{a}$ ) —( L 6 ) $D_5$ स ( for च ) —( L 7 ) $Ñ_2$ च दानव , $V_3$ महासुर ( for स दानव ). ]

34 $^{a}$ ) $B_2$ पतितं ( for व्यथितं ) — $^{b}$ ) $K_2$ क्षतं तेन दुरात्मना — $^{c}$ ) $T_{1\ 2,4}$ G $M_4$ क्रोध- ( for क्रोधात् ). — $^{d}$ ) $K_4$ चेदम् ( for चक्रम् ).

35 $^{a}$ ) $Ñ_2$ $D_1$ $T_2$ $G_1$ स ( for च ) $D_{2\ 6}$ योगेन ( for वे° ) — $^{b}$ ) $D_3$ सह ( for समं ). $K_{2\ 4}$ Ñ V B D ( except $D_5$ ) प्रभु ( for विभु ). — $^{c}$ ) $M_4$ प्रवर्धन्त ( for व्यव° ) — $^{d}$ ) $G_{1-3\ 5}$ प्राप्नुवन्तो ( for व्याप्नु° )

36 $^{a}$ ) $Ñ_2$ $V_{2\ 3}$ दिशश्च वि , $D_1$ $M_4$ दिशश्च प्र- ( for स दिश प्र- ). — $^{b}$ ) $M_4$ भुव ( for च गा ). $K_3$ [अ]भि- , B Ds $D_6$ $M_{1-3}$ प्र- , $T_1$ [अ]नु- ( for [ए]व ) $K_2$ ख गां चैव प्रपूरयत्; $D_1$ ख च गा चावभासयन् , $T_2$ $G_{1\ 4\ 5}$ भूर्भुव चा( $G_4$ °वश्चा )नुपूर° , T द्य गा च प्रतिपूर° , $G_{2\ 3}$ खं भुव चानुपूर° — $^{c}$ ) $Ś_1$ $K_{2\ 3}$ $M_2$ च , $B_{1\ 2}$ Ds $D_6$ ऽथ ( for स ) $D_4$ प्रभुर् ( for पुनर् ) — $^{d}$ ) $Ñ_2$ त्रातुकाम , $D_2$ ( marg as in text ) हन्तु° ( for क्रान्तु° )

37 $^{c}$ ) $K_2$ सगम्य , $D_1$ -गन्धर्वास् ( for गन्धर्वैस् ) — $^{d}$ ) $Ñ_3$ $V_1$ तमूचुर् ( for तुष्टुवुर् ) —After 37, T $G_{1-3,\ 5}$ $M_4$ ins..

526* नमोऽस्तु देवदेवेश शङ्खचक्रगदाधर ।
विष्णो कृष्ण हृषीकेश जहि दैत्य महाबलम् ॥
नमस्तुभ्यं विरूपाक्ष शकराय जगत्पते ।
पाहि न. सकलादस्माञ्जहि दैत्यं महाबलम् ॥

[ ( L 1 ) $G_3$ ते ( for ऽस्तु ) —( L 2 ) $T_4$ विष्णो जिष्णो ; $G_2$ कृष्ण विष्णो ( by transp ) $T_1$ महासुरम् ( for °बलम् ). ]

38 $T_4$ om $38^{ab}$ — $^{a}$ ) $D_2$ स गा , $T_1$ सद्य ( for स द्यां ) $M_{1-3}$ [प्रा]च्छाद्य ( for लिखन् ) — $^{b}$ ) $Ś_1$ साकम् ( for साभ्रम् ) $K_2$ अम्बरम् ( for °रैः ) $M_{1-3}$ खं च कोष्ठेन पूरयन्.

39 $^{a}$ ) $T_3$ -तुल्यास्यं ( for °भं ) N ( except $Ś_1$ ) सूर्यस्य रश्मितुल्याभ — $^{b}$ ) $T_1$ सहस्राशुम् ( for °स्रारम् ) $Ś_1$ अरिंदमम् ( for अरिक्षयम् )

40 $^{a}$ ) $K_2$ $Ñ_2$ $V_2$ B Dn Ds $D_6$ -नेमि- ( for -रेणु- ). — $^{c}$ ) $K_{1\ 3}$ $D_5$ $G_3$ मेदोमज्जास्थिरुधिरै· — $^{d}$ ) $Ñ_3$ ( marg. ) $V_1$ B $D_{1\ 6}$ $T_1$ दिग्धं ( for सिक्त )

41 $^{a}$ ) $K_1$ प्रहारेण ( for °षु ) — $^{b}$ ) $Ś_1$ -दर्शनम् ( for -मण्डलम् ). $T_4$ उद्यादित्यसंनिभम् — $^{d}$ ) $Dn_2$ चक्रं तं;

स्वयं स्वयंभुवा सृष्टं भयदं सर्वविद्विषाम् ।
महर्षिरोषैराविष्टं नित्यमाहवदर्पितम् ॥ ४२
क्षेपणाद्यस्य मुह्यन्ति लोकाः सस्थाणुजंगमाः ।
क्रव्यादानि च भूतानि तृप्तिं यान्ति महामृधे ॥ ४३
तमप्रतिमकर्माणं समानं सूर्यवर्चसा ।
चक्रमुद्यम्य समरे क्रोधदीप्तो गदाधरः ॥ ४४
संमुष्णन्दानवं तेजः समरे स्वेन तेजसा ।
चिच्छेद बाहूंश्चक्रेण श्रीधरः कालनेमिनः ॥ ४५
तच्च वक्त्रशतं घोरं साग्निचूर्णाट्टहासि यत् ।
तस्य दैत्यस्य चक्रेण प्रममाथ बलाद्धरिः ॥ ४६
स च्छिन्नबाहुर्विशिरा न प्राकम्पत दानवः ।
कबन्धावस्थितः संख्ये विशाखं इव पादपः ॥ ४७
तं वितत्य महापक्षौ वायोः कृत्वा समं जवम् ।
उरसा पातयामास गरुडः कालनेमिनम् ॥ ४८
स तस्य देहो विमुखो विशाखः खात्परिभ्रमन् ।
निपपात दिवं त्यक्त्वा क्षोभयन्धरणीतलम् ॥ ४९
तस्मिन्निपतिते दैत्ये देवाः सर्षिगणास्तदा ।
साधु साध्विति वैकुण्ठं समेताः प्रत्यपूजयन् ॥ ५०
अपरे ये तु दैत्या वै युद्धे दृष्टपराक्रमाः ।
ते सर्वे बाहुभिर्व्याप्ता न शेकुश्चलितुं रणे ॥ ५१
कांश्चित्केशेषु जग्राह कांश्चित्कण्ठे न्यपीडयत् ।
पाटयन्कस्यचिद्वक्त्रं मध्ये कांश्चिदगृह्णत ॥ ५२

T3 4 G5 कामदं ( for °गं )

42 a) M1-3 धौतं ( for स्वयं ) Ñ2 दृष्टं , D4 स्पृष्ट , T3 दत्तं ( for सृष्टं ) T4 स्वयंभुवा स्वय दत्तं — c) V3 आमृष्ट , T4 संविष्टं ( for आ° )

43 a) V3 D2 T1 अस्य , T2 G1 येन ( for यस्य ) — b) T2 G1 लोकस्था ( for लोका स- ) D4 सर्वे दानवपुंगवा — c) Ś1 सत्त्वानि ( for भूतानि ) — d) K Ñ V B2 Dn Ds D1. 2 5 T2 महाहवे ( for °मृधे )

44 b) G2 -तेजसा ( for -वर्चसा ) — D3 om ( hapl ) 44c–45b — d) Ñ2 T2 4 G1 क्रोधाद् ; M1 3 कोप- ( for क्रोध- ).

45 D3 om 45ab ( cf v. l. 44 ) — a) Ś1 K2 4 V1 3 B1 Dn Ds D1 T3 4 M4 स मुष्णन् , K1 3 समस्तं , D2 स तूर्णं ; D4 5 समन्ताद् , G1 सहिष्णुर् ( for समुष्णन् ) — b) D4 शमयन् ( for समरे ) — d) B1 -रूपिण. ( for -नेमिन )

46 T4 om ( hapl ) 46-48 — a) D2 M4 तस्य , D3 तथा ( for तच्च ) K1 वक्त्रं तस्य , K2 वक्त्रं सितं ( for वक्त्रशतं ) K4 राजन् ( for घोरं ) T3 तस्य वक्त्र महाघोरं . — b) T2 G1 5 -पूर्णाट्ट ( for -चू° ) K1 -हासिनम् , K2 V2 B Dn Ds D6 हासि वै , K3 4 Ñ V1 3 D1-3 M3 Cn -हासिनम् , D4 -हासिनः ( for हासि यत् ) T3 साग्निज्वालाट्टहासिनम् ❀ Cn साग्निचूर्णानि आग्नेयौषधबलेन गोलकोत्क्षेपणयन्त्राणि, तेषामिव अट्टहासो महाशब्द , तद्युक्तम् । पुंस्त्वमार्षम् । ❀

47 T4 om 47 ( cf v l 46 ) — a) G3 5 M3 सं ( for स ) G1 भिन्न- ( for छिन्न- ) K4 M3 त्रिशिखो ( for °रा ). — b) D2 प्राकम्पत्स ( for °म्पत ). D3 दारुग. ( for दानव ). — c) K2 Ñ V2 3 B Dn Ds D3-6 T1-3 G M4 कबन्धोऽवस्थित संख्ये

48 T4 om 48 ( cf v l 46 ) — a) Ñ1 3 V1 B1 2 D6 स ( for तं ) K, D3 4 महापक्षैर् ( for °क्षौ ) K1 तं प्रपत्य महापक्षैर् — b) K2 समभ्रमम् ( for सम जवम् ) M1-3 छिन्न बाहुशिरोधरम् — c) K2 Ñ2 B तरसा ( for उ° ) D2 ( marg as in text ) उरसा पोथयामास , T3 पुरतो वार° , G4 त्वरन्व्यापार° — d) Ś1 गरुडं कालनेमिन. ( sic )

49 a) Ñ3 D3 ऽभि ( for वि- ) K1 3 Ñ1 V1 3 D2 4 स तस्य देहाभिमुखो — b) B2 T2 G M4 विबाहु , T3 विभुजश् ( for विशाख ) K2 खे , T3 च ( for खात् ) M1-3 विबाहुश्चोद्गिरन्नसृक् — c) M2 निष्पपात ( for निप° ) — d) Ñ1 B1 D2 3 5 6 शोभयन् Ds2 मोक्ष° ( for क्षोभ° ) T2 G1-3 वसुधा- ( for धरणी- ) G4 क्षोभयामास भूतलम् , G5 शोभयन्वसुधा°

50 a) T4 तस्मिन्पतति दैत्येन्द्रे — b) K1 2 V2 B1 Ds तथा ( for तदा ) — d) D2 M1 समेत्य ( for °ता. )

51 a) D3 ऽपि ( for ये ) Ś1 T3 दैत्येन्द्रा ( for दैत्या वै ) — b) K2 Ñ2 दृप्त- , Ñ1 3 V3 B1 3 D5 T1 G3 दुष्ट- ( for दृष्ट- ) — c) M3 दृप्ता ( for व्याप्ता ) — d) T2 4 चरितुं , M2 चेष्टितुं ( for चलितुं ) G3 भयात् ( for रणे ) M1 3 न शेकुश्चेष्टितुं बलात्

52 Ś1 om 52a–39 2b — b) K4 Ñ3 T1. 3. 4 G3-5 ऽभ्यपीडयत् , G1 M1 2 ह्यपी° ; M3 ऽप्यपी° ( for न्यपी° ). — c) Ñ2 पातयन् , M1 वर्तयन् , M1 ( *inf lin* ) 2 चकर्त ; M3 वर्धयन् ( for पाटयन् ) T3 वक्त्राणि कांश्चिच्चिच्छेद ( sic ). — d) K1-3 Ñ2 V2 3 B Ds D2-5 T1 4 G5 अथाग्रहीत् ; K4 Ñ3 V1 Dn D1 अवाग्रहीत् , T3 G3 तदाग्रहीत् , G4

ते गदाचक्रनिर्दग्धा गतसत्त्वा गतासवः ।
गगनाद्भ्रष्टसर्वाङ्गा निपेतुर्धरणीतले ॥ ५३
तेषु सर्वेषु दैत्येषु हतेषु पुरुषोत्तमः ।
तस्थौ शक्रप्रियं कृत्वा कृतकर्मा गदाधरः ॥ ५४
तस्मिन्विमर्दे निर्वृत्ते संग्रामे तारकामये ।
तं देशमाजगामाशु ब्रह्मा लोकपितामहः ॥ ५५
सर्वैर्ब्रह्मर्षिभिः सार्धं गन्धर्वैः साप्सरोगणैः ।
देवदेवो हरिं देवं पूजयन्वाक्यमब्रवीत् ॥ ५६
कृतं देव महत्कर्म सुराणां शल्यमुद्धृतम् ।
वधेनानेन दैत्यानां वयं च परितोषिताः ॥ ५७
योऽयं त्वया हतो विष्णो कालनेमिर्महासुरः ।
त्वमेकोऽस्य मृधे हन्ता नान्यः कश्चन विद्यते ॥ ५८
एष देवान्परिभवँल्लोकांश्च सचराचरान् ।
ऋषीणां कदनं कृत्वा मामपि प्रतिगर्जति ॥ ५९
तदनेन तवोग्रेण परितुष्टोऽस्मि कर्मणा ।
यदयं कालतुल्याभः कालनेमिर्निपातितः ॥ ६०
तदागच्छस्व भद्रं ते गच्छाम दिवमुत्तमम् ।
ब्रह्मर्षयस्त्वां तत्रस्थाः प्रतीक्षन्ते सदोगताः ॥ ६१
किं चाहं तव दास्यामि वरं वरभृतां वर ।
सुरेष्वपि सदैत्येषु वराणां वरदो भवान् ॥ ६२ C 2769 B I 48 64 P I 48 64

अजिग्रहीत्, $M_4$ अहन्यत (for अगृह्यत) $T_2$ $G_1$ तन्मध्ये कांश्चिदग्रहीत

53 $Ś_1$ om 53 (cf v l 52) — [a]) $D_3$ -निहता (for -निर्दग्धा). — [b]) $Ñ_2$ गतायुषः (for °सत्त्व) — [d]) $T_2$ $G_{2-4}$ वसुधा (for धरणी) $D_4$ निपेतुर्दानवा भुवि, $G_1$ संपेतुर्वसुधातले

54 $Ś_1$ om 54 (cf v l 52) — [a]) $B_1$ $T_1$ $M_{1-3}$ तेषु दैत्येषु सर्वेषु — [b]) $T_2$ $G_1$ हतेषु मधुसूदन — [c]) $K_{1, 3}$ $D_2$ -श्रियं दृष्ट्वा, $D_3$ प्रिय दृष्ट्वा (for -प्रिय कृत्वा)

55 $Ś_1$ om 55 (cf v l 52) — [a]) $K_{1, 3}$ $V_3$ T $G_{2-5}$ $M_{2, 4}$ संवृत्ते (for निर्वृत्ते) — [c]) $T_2$ G $M_4$ [अ]थ (for [आ]शु) — [d]) $T_2$ $G_{1, 3-5}$ सर्वे (for ब्रह्मा).

56 $Ś_1$ om 56 (cf v l 52) — [a]) $D_4$ $T_4$ महर्षिभि. (for ब्रह्म°) — [b]) $K_3$ $G_5$ $M_{1-3}$ गन्धर्वैरप्सरोगणैः — [c]) $T_1$ भक्त्या (for देवं) $T_{3, 4}$ ब्रह्मा हरिं देवदेवं

57 $Ś_1$ om 57 (cf v l. 52) Before 57, some Mss ins ब्रह्मोवाच — [c]) $D_4$ वध्यानां (for दैत्यानां) — [d]) $K_{1, 3}$ Ñ $V_{1, 3}$ $B_2$ $D_{1, 5, 6}$ $T_{3, 4}$ $G_3$ $M_2$ हि, $K_2$ ते (for च) $K_3$ -रक्षिता (for -तोषिता)

58 $Ś_1$ om 58 (cf v l 52) — [a]) $B_{1, 3}$ Ds $D_6$ $M_{1, 2}$ हतस्त्वया (by transp), $M_3$ हतस्त्वया T G $M_4$ तात (for विष्णो) — [c]) $D_4$ ऽसि (for ऽस्य) $K_3$ वधे हन्ता, $K_4$ निहन्ता च (for मृधे हन्ता) — [d]) $K_4$ $D_3$ कश्चिच्च (for कश्चन)

59 $Ś_1$ om 59 (cf v l 52). — [a]) $D_4$ देव (for एष). $G_3$ लोकान् (for देवान्) — [b]) K त्रीन् (for च). — [d]) $K_3$ $Ñ_1$ $D_1$ $T_{2, 3}$ $G_{1, 2, 4, 5}$ मम (for माम्)

60 $Ś_1$ om. 60 (cf. v. l. 52). — [a]) $G_2$ किम् (for तद्) $Dn_1$ तपोग्र्येण, $T_4$ $M_{3, 4}$ तपोग्रेण (for तवो°). — [b]) $K_2$ -पुष्टो (for तुष्टो) $K_2$ तुष्टोऽस्मि हरिकर्मणा — [c]) $M_3$ यो ह्यऽ (for यदयं) Dn -कल्पश्च, $D_4$ T $G_{1, 3, 5}$ $M_4$ कल्पस्ते, $G_2$ कल्पान्ते (for तुल्याभ.). — [d]) $K_2$ $B_{1, 3}$ Ds $D_6$ $M_{1-3}$ त्वया हत, $K_3$ $D_3$ महासुर (for निपातित).

61 $Ś_1$ om 61 (cf v l 52) — [a]) $T_1$ $G_{2-5}$ $M_4$ तस्माद् (for तद्) $K_3$ हतो गच्छस्व भद्रं ते, $T_2$ $G_1$ तस्माद्गच्छाशु भद्र ते — [b]) $V_2$ गच्छावो, $B_2$ $D_4$ $T_2$ $G_{1, 2, 5}$ $M_2$ °मि; $D_{1, 2, 5}$ °मो, $M_3$ °व (for °म) $D_3$ $T_{3, 4}$ गच्छाम($T_3$ °व)-स्त्रिदिवोत्तमम् ($D_3$ °वं पुन). — [c]) $M_3$ महर्षयस् (for ब्रह्म°). $B_2$ (marg as in text) $D_6$ $T_4$ $M_{1, 3}$ तु (for त्वां). — [d]) $T_3$ दिव गता, $G_2$ नभोगता (for सदो°) — After 61, N (except $Ñ_1$, $Ś_1$ om) S (except $M_{1-3}$) ins

527* अहं महर्षयश्चैव तत्र त्वा वदतां वर ।
विधिवच्चार्चयिष्यन्ति गीर्भिर्दिव्याभिरच्युत ॥

[(L 1) $K_4$ $B_{1, 2}$ (marg) $D_5$ ब्रह्मर्षयश् (for मह°). $T_2$ $G_{1, 3-5}$ ऋषयश्चैव सततम्, $G_2$ जहर्षुर्ऋषयश्चैव (for [a]). $K_3$ तत्र ते, $K_4$ Dn $D_1$ त्वा तत्र (by transp); $Ñ_2$ $V_3$ $G_2$ $M_4$ सतत, $T_2$ $G_{1, 3-5}$ अह च $D_1$ वरम् (for वर) — $K_2$ om line 2 — (L 2) $V_2$ Dn $D_4$ G $M_4$ [अ]र्चयिष्यामो (for °ष्यन्ति) B $D_3$ $D_6$ अर्चयिष्यामि ($B_3$ $Ds_1$ °म) विधिवद्; $T_2$ विधिभिश्चार्चयिष्यामो (for [a])]

62 $Ś_1$ om 62 (cf v l 52). $K_2$ om (hapl.) 62[ab]. — [a]) $M_2$ कं (for किं) $K_3$ वा (for च) — [b]) $M_3$ वराणां वरदो वरम् — [c]) $V_2$ $G_3$ च (for स-) — [d]) $V_1$ $T_2$ $G_{1, 2, 5}$ सुराणां (for व°) $D_2$ भव (for भवान्).

63 $Ś_1$ om 63 (cf v l 52) — [a]) $D_3$ नियम्य च (for निर्यातय) $G_{1, 4}$ निर्यातवान्वै त्रैलोक्यं. — [b]) $T_1$ $G_2$ $M_4$ स्थितं, $T_{3, 4}$ हितं (for स्फीतं) $G_1$ विगत- (for निहत-).

निर्यातयैतत्त्रैलोक्यं स्फीतं निहतकण्टकम् ।
अस्मिन्नेव मृधे विष्णो शक्राय सुमहात्मने ॥ ६३
एवमुक्तो भगवता ब्रह्मणा हरिरीश्वरः ।
देवाञ्शक्रमुखान्सर्वानुवाच शुभया गिरा ॥ ६४
श्रूयतां त्रिदशाः सर्वे यावन्तः स्थ समागताः ।
श्रवणावहितैर्देहैः पुरस्कृत्य पुरंदरम् ॥ ६५
अस्मिन्नः समरे सर्वे कालनेमिमुखा हताः ।
दानवा विक्रमोपेताः शक्रादपि महत्तराः ॥ ६६
अस्मिन्महति संक्रन्दे द्वावेव तु विनिःसृतौ ।
वैरोचनिश्च दैत्येन्द्रः स्वर्भानुश्च महाग्रहः ॥ ६७
तदिष्टां भजतां शक्रो दिशं वरुण एव च ।
याम्यां यमः पालयतामुत्तरां च धनाधिपः ॥ ६८
ऋक्षैः सह यथायोगं कालं चरतु चन्द्रमाः ।
अब्दं ऋतुमुखं सूर्यो भजतामयनैः सह ॥ ६९
आज्यभागाः प्रवर्तन्तां सदस्यैरभिपूजिताः ।
हूयन्तामग्नयो विप्रैर्वेददृष्टेन कर्मणा ॥ ७०
देवाश्च बलिहोमेन स्वाध्यायेन महर्षयः ।
श्राद्धेन पितरश्चैव तृप्तिं यान्तु यथासुखम् ॥ ७१
वायुश्चरतु मार्गस्थस्त्रिधा दीप्यतु पावकः ।
त्रयो वर्णाश्च लोकांस्त्रींस्तर्पयन्त्वात्मजैर्गुणैः ॥ ७२
ऋतवः संप्रवर्तन्तां दीक्षणीयैर्द्विजातिभिः ।
दक्षिणाश्चापि वर्तन्तां यथोक्तं सर्वसत्रिणाम् ॥ ७३

—c) Ñ1 B1 Dn1 D6 T3 M3 तस्मिन् (for अ°) —d) T3 4 शक्रायारिनिषूदन, M1 2 °य सुकृतात्मने, M3 °य सुरसूदन.

64 S1 om 64 (cf v l 52) Before 64, Dn ins वैशंपायन उवाच —b) K1 3 B Ds D6 S अव्यय (for ईश्वर). —d) T3 4 परया (for शुभया)

65 S1 om 65 (cf v l 52) Before 65, some Mss ins विष्णुरुवाच and some भगवानुवाच —b) K2 स्म; Ñ1. 2 V B2 3 Ds D1 5 6 वै, Ñ3 तु, B1 Dn M1 ऽत्र, D2 च; T3 G2 ते (for स्थ) —c) K3 4 Ñ3 V B2 D2 देवै, D1 गात्रैः; T1 3 4 G2–5 M1 2 श्रोत्रैः; T2 G1 M4 स्तोत्रै, M3 दिव्यैः (for देहै).

66 S1 om 66 (cf v l 52) T2 om 66 —a) D3 M4 तु (for न) M1–3 दिव्ये (for सर्वे) K4 (marg) T3 4 अस्मिन्नवसरे सर्वे —b) K1 G3–5 गता (for हता). —d) M4 महत्तमाः (for °त्तराः).

67 Ś1 om 67 (cf v l 52) —a) K4 Ñ1 B3 Dn D1. 6 तस्मिन् (for अ°) Ñ3 T3 4 G2 M1 (inf lin) 2 4 संग्रामे (for सक्रन्दे). T2 G1 4 तस्मिन्महति सग्रामे —c) K2. 4 विरोचनश्, B2 3 D1 T1 G2–5 वैरोचनश् (for °निश्) —d) T2 G1 स हि ग्रह; T3 4 महासुर (for °ग्रह).

68 Ś1 om 68 (cf v l 52) —b) T3 स्वपुरीं वरुणस्तथा, T4 पुरीं वरुणमेव च —d) T3 अलका स, M2 उत्तरा तु (for °रां च). K3 जनाधिपः, D1 (sup lin as in text) T1 G5 नराधिप (for धना°)

69 Ś1 om 69 (cf v. l. 52). —a) K2 Ñ3 (marg) V1. 2 B1 D8 गतो योगं, T4 (also as in text) यथालोकं (for °योगं) —b) K2 4 V2 B Dn Ds D6 T1 3 G2 3 काले (for काल) T4 कालचक्रं तु चन्द्रमा —c) K1 ऋतुमुख, K3 D3 ऋतुमुखं, K4 Dn2 क्रतु°, Ñ1 3 G3 चतुर्मुखं (Ñ3 °खे), V1 ह्यृतुमुखे, D5 6 ह्यनुमुख, T3 यस्तु सुखं (for ह्यृतुमुखं) T2 G1 2 5 M4 अब्दानृतुमुखैः सूर्यो, T4 अब्दयोस्तु सुख सूर्यो —d) D3 च जनै (for अयनै).

70 S1 om 70 (cf v l 52). —a) D2 आत्म- (for आज्य-) V1 D4 प्रवर्धन्तां (for °र्तन्तां) — After $70^{a}$, Ñ2 reads $73^{bc}$, repeating it in its proper place G2 om (hapl) $70^{b}$–$73^{c}$ —b) G3 4 अपि (for अभि-) B2 प्रोक्षणीयैर्द्विजातिभि —c) T2 G1 3 5 वह्नयो (for अग्नयो)

71 Ś1 om 71 (cf v l 52) G2 om 71 (cf v l 70). —c) Ñ2 सर्वे, Ñ3 V1 तुष्टिं (for चैव) —d) Ñ3 यान्तु चैव, G1 तृप्ता यान्तु (for तृप्तिं यान्तु) Dn यथापुरा (for यथासुखम्)

72 Ś1 om 72 (cf v l 52) G2 om 72 (cf v l. 70) —a) D1 T1 2 G1 4 5 M मार्गं स्वं (for मार्गस्थस्) —b) K1 3 दीप्यतां पावकस्त्रिधा —c) D5 लोकाना, T1 G3–5 M1–3 त्रींल्लोकान् (by transp) Ñ3 V1 T2 G1 त्रयो वर्णास्तु (D4 T3 °र्णाश्च) त्रींल्लोकास् —d) K1 हर्षयन्तु, K1 (inf lin) वर्धयित्वा, Ñ1 B1 तर्पयित्वा, B2 3 T1 G3 M4 वर्धयन्तु (for तर्प°) K2 Ñ2 3 V D2–5 [आ]त्मनो (for °जैर्) D6 तर्पयित्वात्मकैर्गुणै

73 Ś1 om 73 (cf v. l 52) G2 om $73^{abc}$ (cf v. l. 70) —a) Ñ1 Dn -वर्त्यन्तां (for -वर्तन्तां). — Ñ2 reads $73^{bc}$ for the first time after $70^{a}$ —b) T3 4 दाक्षिणीयैर् (for दीक्ष°). D2. 3 महर्षिभि (for द्विजातिभि.). —c) K1.

गाश्च सूर्यो रसान्सोमो वायुः प्राणांश्च प्राणिषु ।
तर्पयन्तः प्रवर्तन्तां शिवैः सौम्यैश्च कर्मभिः ॥ ७४
यथावदनुपूर्वेण महेन्द्र सलिलोद्वहाः ।
त्रैलोक्यमातरः सर्वाः सागरं यान्तु निम्नगाः ॥ ७५
दैत्येभ्यस्त्यज्यतां भीतिः शान्तिं व्रजत देवताः ।
स्वस्ति वोऽस्तु गमिष्यामि ब्रह्मलोकं सनातनम् ॥ ७६
स्वगृहे स्वर्गलोके वा संग्रामे वा विशेषतः ।
विस्रम्भो वो न गन्तव्यो नित्यं क्षुद्रा हि दानवाः ॥ ७७
छिद्रेषु प्रहरन्त्येते न चैषां संस्थितिर्ध्रुवा ।
सौम्यानामृजुभावानां भवतां चार्जवा मतिः ॥ ७८
एवमुक्त्वा सुरगणान्विष्णुः सत्यपराक्रमः ।
जगाम ब्रह्मणा सार्धं ब्रह्मलोकं महायशाः ॥ ७९
एतदाश्चर्यमभवत्संग्रामे तारकामये ।
दानवानां च विष्णोश्च यन्मां त्वं परिपृच्छसि ॥ ८०

इति श्रीहरिवंशे अष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

C 2789
B I 48. 84
P I. 48 84

---

2 4 Ñ1 2 ( both times ) 3 V1 3 B Dn Ds D1 4–6 [उ]प-; V2 प्र-, T3 M2 [अ]भि ( for [अ]पि ) G1 वर्धन्तां ( for वर्तन्ता ) T2 4 G4 5 M4 दक्षिणाश्चाभिवर्धन्ता, G3 आज्यभागा प्रवर्तन्ता — d ) K1 3 G3 यथार्हं, K4 Dn D1 यथोक्ता, T2 G1 4 5 M4 फलार्थं, G2 बलार्थं ( for यथोक्तं ) K2 B2 D2 3 5 यथोक्तं सत्र( K2 क्रतु )याजिनाम्, Ñ2 3 यथार्हं ( Ñ3 °थोक्ता ) सर्वसत्रिण, Ñ3 ( marg ) V2 B1 3 Ds यथार्थं ( Ñ3 B3 Ds2 °र्हं )सत्रयाजिनाम्, V1 यथार्हं मन्त्रयाजिनाम्, D4 यथोक्ताश्चात्र याजिनाम्, D6 यथार्थं तत्र याजिनाम्, M1–3 यथार्हं सदसि प्रिया

74 S1 om 74 ( cf v 1 52 ) — a ) K2 3 Ñ3 T1 2 G1–3 M गात्र ( for गाश्च ) K1 3 रसं ( for रसान् ) — c ) T1 शिवै सौम्यै ( for प्रवर्तन्ता ) — d ) T4 सौम्यै· ( for शिवैः ) T1 प्रवर्तन्ता च कर्मभि

75 Ś1 om 75 ( cf. v 1 52 ) — a ) Some Mss आनुपूर्व्येण — b ) K4 Dn1 महाद्रि- ( for महेन्द्र ) K3 Ñ1 3 V B2 ( marg ) 3 Ds D2–6 T1 4 महेन्द्रसलिलोद्भवा — d ) B1, 3 D6 T1 M1–3 सिन्धव ( for निम्नगा ).

76 Ś1 om 76 ( cf v 1 52 ) — a ) K2–4 Ñ V B1 3 T1 G3 M1, 3 भीश्च ( for भीति ) Dn D1 दैत्येभ्यस्त्यजतां भीश्च — c ) K4 भविष्यामि, G3 गमिष्यामो ( for °मि ).

77 Ś1 om 77 ( cf v 1 52 ) — a ) K4 Ñ1 2 V3 Dn Ds D1 4 M1 स्वे ( for स्व- ) Ñ2 V2 B1 3 D5 T1 सर्वे ( for स्वर्ग- ). K2 -वासे ( for -लोके ) — c ) Some Mss विश्रम्भो ( for विस्रम्भो ) K2 V2 D2 D4 6 हि, K4 D1 T1 M3 वा ( for वो ) V2 B1 3 Ds D2–4 6 T4 कर्तव्यो, G4 हन्तव्यो ( for ग° ) B2 विश्रम्भो न हि कर्तव्यो, T3 विस्रम्भो नैव कर्तव्यो, G3 °म्भो नावगन्तव्यो

78 Ś1 om. 78 ( cf. v. 1 52 ). — b ) K1 [ए]षामस्ति; K2 Ñ3 V1 D3 6 तेष सं-, K3 B2 D5 D2 4 5 M1–3 [ए]तेषां सं- ( for चैषां स- ). T2 G1, 3–5 नैषां स्वर्गस्थि( G3 °ग )तिर्ध्रुवा· — c ) Ds -पूर्वाणां ( for -भावानां ) — d ) K3 4 V3 Dn D5 चार्जवे, B2 M2 4 आर्जवा, D1 T2 G M1 2 सा° ( for चा° ). T3 4 भवता चार्जवी गतिः — After 78, N ( except Ñ1, Ś1 om ) S ( except M1–3 ) ins :

528* अहं तु दुष्टभावानां युष्मासु सुदुरात्मनाम् ।
असम्यग्वर्तमानानां मोहं दास्यामि देवताः ॥
यदा च सुदुराधर्षं दानवेभ्यो भयं भवेत् ।
तदा समुपगम्याशु विधास्ये वस्ततोऽभयम् ॥

[ ( L. 1 ) Ñ3 D4 युष्माकं ( for °सु ) — ( L 2 ) D4 असत्ये ( for °म्यग् ) D3 मृत्यु ( for मोह ) — D3 om lines 3–4. — ( L 3 ) D2 T1 तु सु-, D4 व सु-, D5 तेभ्यो ( for च सु- ) D2 भवेद्भयम् ( by transp ), T2 भयं महत् — ( L 4 ) T4 M4 तदा सम्यगुपागम्य, T3 वदता ममुपागम्य ( for a ). T3 निरस्ये ( for विधास्ये ) K4 Ñ3 D6 G3 5 च ततो, Ñ2 V3 भवतो, Dn ऽह ततो ( for वस्ततो ) M4 व्यपनेष्यामि वै भयम् ( for b ) ]

79 Ś1 om 79 ( cf v 1 52 ) Before 79, some Mss ins वैशंपायन उवाच D3 om 79ab — b ) M4 -पराक्रमान् ( for °म ). — c ) G3 जगाम ब्रह्मसदनं.

80 Ś1 om 80 ( cf v 1 52 )

Colophon om in Ś1 D6 T2, T3 ins it after 528* — *Mention of the Epic* K1 3 4 V3 Ds2 D1. — *Mention of Khila* K1 3 4 Ñ2 3 V B Ds D1 2. — *Subparvan* K3 D1 T4 आश्चर्यपर्व, Ñ1 देवासुरम्, Ñ2 B1 3 Ds तारकामयम्; D5 पारिजात — *Adhy name*. K Ñ V B Dn Ds D1–5 T1 4 G1–3 कालनेमिवध — *Adhy no.* ( figures, words or both ) · K3 T4 46; Ñ3 V1 3 Dn Ds2 48; V2 49, D1 T1 G3 5 44, D3 4 47; G1 M4 43, G2, 4 41, M1–3 40. — *Śloka no.*. K1 Dn1 D4 84; Ds2 G1 85, D3 82.

# ३९

जनमेजय उवाच ।
ब्रह्मणा देवदेवेन सार्धं सलिलयोनिना ।
ब्रह्मलोकं गतो ब्रह्मन्वैकुण्ठः किं चकार ह ॥ १
किमर्थं चादिदेवेन नीतः सलिलयोनिना ।
विष्णुर्दैत्यवधे वृत्ते देवैरकृतसत्क्रियः ॥ २
ब्रह्मलोके च किं स्थानं कं वा योगमुपास्त सः ।
कं वा दधार नियमं स विभुर्भूतभावनः ॥ ३
कथं तत्रासतस्तस्य विश्वं जगदिदं महत् ।
श्रियमाप्नोति विपुलां सुरासुरनरार्चिताम् ॥ ४
कथं स्वपिति घर्मान्ते बुध्यते चाम्बुदक्षये ।
कथं च ब्रह्मलोकस्थो धुरं वहति लौकिकीम् ॥ ५
चरितं तस्य विप्रेन्द्र दिव्यं भगवतो दिवि ।
विस्तरेण यथातत्त्वं सर्वमिच्छामि वेदितुम् ॥ ६
वैशंपायन उवाच ।
शृणु नारायणस्यादौ विस्तरेण प्रवृत्तयः ।
ब्रह्मलोकं यथारूढो ब्रह्मणा सह मोदते ॥ ७
कामं तस्य गतिः सूक्ष्मा देवैरपि दुरानुगा ।
यत्तु शक्ष्याम्यहं वक्तुं तन्मे निगदतः शृणु ॥ ८
एष लोकमयो देवो लोकाश्चैतन्मयास्त्रयः ।
एष देवमयश्चैव देवाश्चैतन्मया दिवि ॥ ९

## 39

1 $Ś_1$ om. $1^a$–$2^b$ (cf v l 38. 52) $D_6$ om 39 $1^a$–47 $8^a$ —$^b$) $K_{1\ 3}$ $D_1$ कमल-, $V_1$ नलिन- (for सलिल-). — $G_{2\ 4}$ om (hapl) $1^c$–$2^b$, $M_4$ reads the same after 4 —$^c$) $K_{2\ 4}$ $B_{2.\ 3}$ $Dn_2$ $D_{3\ 5}$ $T_3$ $G_5$ $M_4$ -लोक (for लोकं) —$^d$) $T_3$ स. (for ह)

2 For the sequence in $M_4$, cf v l 1 $Ś_1$ $G_{2\ 4}$ om $2^{ab}$ (cf v. l 1) —$^a$) $T_1$ $G_3$ $M_4$ किमर्थं (for °र्थं) $K_3$ यदि, $B_3$ $T_1$ चापि, $T_4$ वापि (for चादि-) Dn ब्रह्मणा देवदेवेन —$^b$) Dn सार्धं (for नीत) $K_{1\ 3}$ $V_3$ $B_3$ $G_3$ कमल- (for सलिल-) —$^c$) $T_4$ युक्ते (for वृत्ते). —$^d$) All Mss (except $Ś_1$ $M_{1-3}$, $D_6$ om) च कृत- (for अकृत-)

3 Before 3, $Ś_1$ ins जनमेजय· —$^a$) $K_4$ ऽथ, Dn $D_1$ ऽस्य, $D_3$ तु (for च) $K_2$ $T_{1\ 4}$ सं- (for किं) —$^b$) $K_4$ $V_2$ $Dn_2$ $T_4$ किं (for कं) $M_3$ च (for वा) $Ś_1$ उपासते; $G_4$ इहागत, $M_{1.\ 2}$ उपास्त च, $M_4$ उपागत (for °स्त स.) $K_{1\ 3}$ $D_{1\ 2}$ $T_2$ $G_{1\ 5}$ किं वा योगमुपागत ($K_3$ $D_2$ °सते), $G_3$ कं वा लोकमुपागतः — $K_3$ om $3^c$–$4^a$ —$^c$) $V_2$ $T_{3\ 4}$ $G_5$ किं (for कं) —$^d$) $G_2$ विश्व (for भूत)

4 $K_3$ om $4^a$ (cf v. l. 3) —$^a$) $K_{2\ 4}$ Ñ V B D ($D_6$ om) $T_{1\ 2\ 4}$ G $M_{3\ 4}$ तस्य (for तत्र) $K_{2\ 4}$ Ñ V B D ($D_6$ om) T G $M_3$ तत्र (for तस्य) —$^b$) $Ś_1$ त्रिजगोर् (for विश्वं). —$^d$) $Ś_1$ चरार्चिताम्, $K_{1-3}$ Ñ V Dn Ds $D_{2,\ 3,\ 5}$ $T_{3,\ 4}$ -गणा° (for -नरा°). — After 4, $M_4$ reads $1^c$–$2^b$

5 $^b$) $Ñ_2$ $V_3$ वाम्बुद-, $B_{1\ 3}$ $D_5$ जलद- (for चाम्बुद-). $K_4$ $Ñ_{1\ 3}$ $V_1$ $B_2$ Dn $G_3$ -प्लवे (for क्षये) $Ś_1$ $K_{1\ 3}$ $D_1$ बुध्यते चा($K_3$ वा)म्बुदात्यये —$^c$) $D_3$ कथंस्विद् (for कथं च) —$^d$) $T_4$ कालिकीम् (for लौकि°)

6 $^a$) $V_2$ विप्रेश (for °न्द्र) —$^b$) Ds विधिम् (for दिवि) —$^c$) $T_3$ यथावच्च (for °तत्त्वं). —$^d$) $T_3$ श्रोतुम् (for सर्वम्)

7 $^b$) $K_2$ $Ñ_{2\ 3}$ $V_{2\ 3}$ $B_{1\ 3}$ Ds प्रवृत्तिं वि($V_3$ °त्तिर्वि)-स्तरेण तु, $T_{1-3}$ G $M_{1,\ 2\ 4}$ प्रवृत्तिं ($T_3$ चरितं) विस्तरेण वै. —$^c$) $Ñ_{1\ 2\ 3}$ (marg) $V_{1\ 3}$ B Ds यथा गत्वा; $D_{4\ 5}$ यदारूढो (for यथा°)

8 $^a$) $D_1$ काम त्वस्य; $G_1$ कामं सत्य, $M_{1\ 2}$ अव्यक्ता सा, $M_1$ (*sup lin*) तदन्तस्व- (for कामं तस्य) $K_2$ कामं गतिस्तस्य सूक्ष्मा —$^b$) $K_{1-3}$ $Ñ_{2\ 3}$ (marg) V B Dn Ds $D_5$ $T_{1\ 3\ 4}$ $G_2$ दुरासदा, $K_4$ $D_{2\ 3}$ दुरत्यया, $D_1$ $M_4$ दुरन्वया (for दुरानुगा) —$^c$) $T_{1\ 2}$ च (for तु) $Ś_1$ $K_1$ (*sup lin* as in text) ₃ वक्ष्यामि (for श°) $K_1$ राजंस्, $K_3$ $Ñ_1$ ब्रह्मस्, $Ds_1$ (*inf lin*) भूप (for वक्तुं) $K_{2\ 4}$ $Ñ_{2\ 3}$ V B D ($D_6$ om) $T_{3\ 4}$ यच्च ($T_{3\ 4}$ सर्वं) वक्ष्याम्यहं राजं($D_1$ ब्रह्मं)स्

9 $^b$) $K_2$ हि (for च) $V_3$ दिवि (for त्रय). —$^d$) $K_2$ हि (for च).

10 $K_{2,\ 4}$ Ñ V B D (except $D_1$, $D_6$ om) S read 10–15 after 24 —$^a$) $D_{2,\ 3,\ 5}$ देवेषु (for देवेन). $T_1$

देवेन वर्धते यद्धि सर्वं तद्धि जनार्दनात् ।
यत्प्रवृत्तं च देवेभ्यस्तद्विद्धि मधुसूदनात् ॥ १०
अग्नीषोममयं लोकं यं विदुर्विदुषो जनाः ।
तं सोममग्निं लोकं च वेद विष्णुं पितामहः ॥ ११
क्षीराद्यथा दधि भवेद्दध्नः सर्पिर्यथा भवेत् ।
मथ्यमानेषु भूतेषु तथा लोको जनार्दनात् ॥ १२
यथेन्द्रियैश्च भूतैश्च परमात्मा विधीयते ।
तथा वेदैश्च देवैश्च लोकैश्च विदितो हरिः ॥ १३
यथा भूतेन्द्रियावाप्तिर्विहिता भुवि देहिनाम् ।
तथा प्राणेश्वरावाप्तिर्देवानां दिवि वैष्णवी ॥ १४
सत्रिणां सत्रफलदः पवित्रं परमात्मवान् ।
लोकतन्त्रधरो ह्येष मन्त्रैर्मन्त्र इवार्च्यते ॥ १५
अस्य पारं न पश्यन्ति बहवः पारतन्त्रिणः ।
एष पारं परं चैव लोकानां वेद माधवः ॥ १६
अस्य देवान्धकारस्य मार्गितव्यस्य दैवतैः ।
शृणु वै यत्तदा वृत्तं ब्रह्मलोके पुरातनम् ॥ १७
स गत्वा ब्रह्मणो लोकं दृष्ट्वा पैतामहं पदम् ।
ववन्दे तानृषीन्सर्वान्विष्णुरार्षेण कर्मणा ॥ १८

C 2801
B 1 49 12
P 1 49 12

---

G1 3 वर्तंते ( for वर्धते ) K2 4 Ñ2 3 V B Dn Ds D1 4 T3 4 G2 4 देवेषु वर्तंते यद्धि ( B Dn Ds °द्धै, T3 °च्च ) — b ) K2 4 Ñ2 V2 3 Dn D1–5 तद्धि सर्वं ( by transp ), T3 4 तच्च सर्वं, G3 सर्वं तस्माज् Ñ3 V1 तद्धि सर्वं जनार्दने — Ñ1 3 V1 D1 T1 3 om ( hapl ) 10cd — c ) K3 तत्प्रवृद्धं ( for यत्प्रवृत्तं ) Ñ2 वेदेषु, T4 देवेषु ( for °भ्यस् ) K2 यद्य-त्प्रवृत्तं देवेभ्यस् — d ) T4 तद्धि सर्वं जनार्दनात्

11 For the sequence in K2 4 Ñ V B D ( except D1, D6 om ) S, cf v l 10 — a ) K3 विश्वं ( for लोकं ) — b ) T3 4 विद्वांसो यं विदुर्जना — c ) G3 अग्नी-षोमं ( for अग्निं लोक ) T2 G1 5 तं लोकमग्निं सोम च — d ) T3 सर्वं ( for विष्णु ) K2 3 G पितामहम्, Ñ1 B2 ( marg ) Dn D1 2 5 सनातनम् ( B2 °न ) ( for पितामह ) Ś1 देवं विष्णु पितामहम्, Ñ2 V2 3 D3 वेदं वि( V2 देवं वि-, D3 विदुर्वि )ष्णुं सनातनम्, D4 देवो विष्णु. सनातनः

12 For the sequence in K2 4 Ñ V B D ( except D1, D6 om ) S, cf v l 10 — b ) K1 T1–3 G M1 2 भवेद्यथा ( by transp ) K3 M4 दध्नि सर्पिर्भवेद्यथा, M3 सर्पिश्चैव यथा भवेत् — c ) Ñ2 ( marg. ) V1 लोकेषु ( for भूतेषु ) — d ) Ñ1 B1 यथा ( for तथा ). Ś1 Ñ2 V B2 3 Dn1 Ds1 D1 2 लोका ( for लोको )

13 For the sequence in K2 4 Ñ V B D ( except D1, D6 om ) S, cf v l 10 — a ) Ñ1 भूतानां, G2 भूतेभ्य· ( for भूतैश्च ). — b ) K1 2 4 Ñ2 B1 2 ( marg ) 3 Dn Ds D3 T1 3 4 G4 5 [अ]भि· ( for वि ) — c ) Ś1 B1 Dn1 तथा देवैश्च लोकैश्च, K4 Ñ2 3 V1 2 B2 3 Dn2 Ds D1 3–5 T1 3 4 G1 4 5 M1 3 तथा देवैश्च वेदै( V2 दैत्यै )श्च — d ) S1 वेदैश्च, B1 वेदेषु, Dn1 देवैश्च ( for लोकैश्च ) B2 T1 3 4 विहितो ( for विदितो ) V1 अहम् ( for हरि ).

14 For the sequence in K2 4 Ñ V B D ( except D1, D6 om ) S, cf v l 10. — a ) M4 यथा देहेन्द्रियावा-सिर् — b ) K2 सर्वं ( for भुवि ) — c ) D4 तथा प्राणेश्वर-प्राप्तिर् — d ) K3 D2 ( sup lin as in text ) भुवि; G2 M4 विद्धि ( for दिवि ) Ś1 विहिता भुवि वैष्णवी

15 For the sequence in K2 4 Ñ V B D ( except D1, D6 om ) S, cf v l 10 — b ) D2 T2 G1 पवित्र ( for °त्रं ) T3 पवित्र परम स्मृत — c ) Ñ2 D1 -मन्त्रपरो; Ñ3 ( marg as in text ) D3 T2 G1 2 5 M1 2 4 -तन्त्रपरो, V त्रयपरो, B3 तन्त्रकरो ( for °धरो ) T3 4 लोकतन्त्र विलोन्येष; M3 °तन्त्रपरो ह्येवं — d ) K3 D1 इवेज्यते K4 इहोच्यते, Ñ1 Dn Ds T4 इवोच्यते; Ñ2 3 ( marg as in text ) V3 इवेज्यते ( for इवार्च्यते ) K1 D2–5 मन्त्रैर्मन्त्र-वदि( D2 °वदुच्य-, D5 °विदिज्य )ते, T1 2 G M मन्त्र-विद्भिरिहोच्य( T1 °हेज्य )ते, T3 मन्त्रैः सर्वैरिहोच्यते.

16 a ) K4 Ñ V1 3 B1 Dn D1 2 5 T1–3 G3 तस्य ( for अस्य ) T4 तस्य पार न गच्छन्ति — b ) Ś1 दर्शिन, K2 4 Ñ2 3 V B2 ( marg ) Dn D1–5 T3 4 -काङ्क्षिण, B Ds -चिन्तका ( for तन्त्रिण ) — c ) T3 पारावरश्च, T4 पारगमं ( for पार परं ) — d ) K3 चैव, K4 V2 देव ( for वेद ) Ś1 लोकाना पदमेव च

17 a ) Ś1 Ñ1 तस्य, T1 यस्य ( for अस्य ) K1 3 D2–4 अ( K1 3 त )स्य देवार्थकारस्य, K2 B2 D5 अस्य वेदार्थं°; T2 G M4 अस्य देवादिदेवस्य — b ) G2 वै स्मृते ( for दैवतै· ) — c ) Ñ1 मे यत्तदा, K2 वै यत्र तद्, K4 वै वदतो; D2 चैवं तदा, T1 चैनद्यथा ( for वै यत्तदा ) — d ) Ñ1 सनातनम् ( for पुरा° )

18 a ) B3 स दृष्ट्वा, G2 सकलं ( for स गत्वा ) K1 3 4 M3 4 स गत्वा ब्रह्मलोकं तु ( K4 च; M3 तद् ) — b ) K3 Ds गत्वा ( for दृष्ट्वा ). T2 G M4 गृहम् ( for पदम् ). — d ) K2 पारमेष्ठ्येन कर्मणा.

19 a ) T1 यो ( for सो ) T2 G1 योऽग्निं प्राक्सदने दृष्ट्वा; G2 M3 विष्णु. ( M3 अग्निं ) प्राक्सवनं दृष्ट्वा. — b ) K3 हूयमाने

सोऽग्निं प्राक्सवने दृष्ट्वा हूयमानं महर्षिभिः ।
अवन्दत महातेजाः कृत्वा पौर्वाह्णिकं विधिम् ॥ १९
स ददर्श मखेष्वाज्यैरिज्यमानं महर्षिभिः ।
भागं यज्ञियमश्नानं स्वदेहमपरं स्थितम् ॥ २०
अभिवाद्याभिवाद्यानामृषीणां ब्रह्मवर्चसाम् ।
परिचक्राम सोऽचिन्त्यो ब्रह्मलोकं सनातनम् ॥ २१
स ददर्शोच्छ्रितान्यूपांश्चषालाग्रविभूषितान् ।
मखेषु च ब्रह्मर्षिभिः शतशः कृतलक्षणान् ॥ २२
आज्यधूमं समाघ्राय शृण्वन्वेदान्द्विजेरितान् ।
यज्ञैरिज्यन्तमात्मानं पश्यंस्तत्र चचार ह ॥ २३
तमूचुरृषयो देवाः सदस्याः सदसि स्थिताः ।
अर्घ्योद्यतभुजाः सर्वे पवित्रान्तरिताननाः ॥ २४
स्वागतं ते सुरश्रेष्ठ पद्मनाभ महाद्युते ।
इदं यज्ञियमातिथ्यं मन्त्रतः प्रतिगृह्यताम् ॥ २५
त्वमस्य यज्ञपूतस्य पात्रं पाद्यस्य पावनः ।
अतिथिस्त्वं हि मन्त्रोक्तः स दृष्टः सततं मतः ॥ २६
त्वयि योद्धुं गते विष्णो न प्रावर्तन्त नः क्रियाः ।
अवैष्णवस्य यज्ञस्य न हि कर्म विधीयते ॥ २७

---

(for °नं) $D_3$ मनीषिभि (for महर्षिभि॰) — After $19^{ab}$, $T_4$ reads $20^{ab}$, repeating it in its proper place —$^{c}$) $S_1$ $V_3$ अविन्दत (for अव°) —$^{d}$) $G_2$ पूर्वाह्णिक. K $\tilde{N}_2$ $D_{1, 2, 4, 5}$ कृत्वा पूर्वाह्णि $D_{1, 2}$ °ह्णि )कीं क्रियाम्, $\tilde{N}_{1, 3}$ V B $Dn_2$ Ds $D_3$ $T_2$ कृत्वा पौर्वाह्णिकीं क्रियाम्, $Dn_1$ $G_1$ कृत्वा पौर्वाह्णिकां ($G_1$ °क)क्रियाम, $T_3$ अवस्थानमथाकरोत्

20 $T_4$ reads $20^{ab}$ for the first time after $19^{ab}$ —$^{a}$) Ś$_1$ [आ]ज्यम्, $K_{1, 3, 4}$ $B_3$ $D_{3, 5}$ $M_3$ [आ]ज्यैर्, $T_4$ (both times) [अ]द्य (for [आ]ज्यैर्) —$^{b}$) Ś$_1$ इज्यमानो (for °मान) —$^{c}$) $K_2$ $T_2$ $G_{1-3}$ M याज्ञि' $M_{1-3}$ °ज्ञी )यम्, $G_5$ याज्ञिकम् (for यज्ञियम्) $D_3$ भाग यज्ञार्थमश्नन्त, $T_4$ भागक्रियं समश्नान. —$^{d}$) $\tilde{N}_3$ $V_1$ $D_1$ परम, $T_2$ पुरत (for अपरं) Ś$_1$ $K_4$ $\tilde{N}_{1, 2}$ Dn $D_4$ स्वदेहप( $D_4$ °हे प )रमं स्थितम्; $V_3$ °हं परिसस्थितम्, $B_3$ (marg) °हेन'परं स्थितम्.

21 $^{a}$) $D_1$ सोऽभिवाद्य (for अभि°) $G_4$ अभिवाद्याभिवाद्यैव —$^{c}$) $T_{1, 2}$ $G_{1, 3-5}$ यो (for सो) $D_{4, 5}$ ऽचिन्त्यं (for °न्त्यो) —$^{d}$) $K_2$ सनातन, $K_3$ पुरातनम् (for सना°).

22 $^{b}$) $G_3$ चषालाश्रयविष्ठितान् —$^{c}$) $D_3$ यज्ञेषु (for मखेषु) $K_3$ $M_3$ मखेषु तव ब्र( $M_3$ देव ब्र )ह्मर्षि', Dn $T_2$ $G_{1, 5}$ °षु ब्रह्मऋषिभि, $T_{3, 4}$ वंशेषु ब्रह्मऋषिभि., $M_{1, 2}$ मखषु देवो मुनिभि.

23 $^{b}$) $M_{1-3}$ मन्त्रान् (for वेदान्) —$^{c}$) $K_2$ यज्ञेषु (for यज्ञैर्) $T_{1, 4}$ यज्ञैः समिज्यमान च —$^{d}$) $D_3$ ससार (for चचार) $S_1$ स (for ह).

24 $^{a}$) $\tilde{N}_1$ B Ds $T_{3, 4}$ ऊचुस्तम् (by transp) —$^{c}$) Ś$_1$ $K_{1, 3}$ $T_{1, 2}$ G $M_4$ अर्घोद्य( $S_1$ °र्घ्योदि )तकरा सर्वे —$^{d}$) N (except Ś$_1$ $\tilde{N}_1$) T G $M_4$ पवित्रान्तरपाणय — After 24, $K_{2, 4}$ Ñ V B D (except $D_1$, $D_6$ om) S read 10–15

25 Before 25, some Mss ins ऋषय, some देवा॰. —$^{b}$) $T_2$ महामते, $G_3$ सुरेश्वर (for महाद्युते) — After $25^{ab}$, Ś$_1$ ins :

529* नमोऽस्तु ते हृषीकेश मधुकैटभसूदन ।
दामोदर नमस्तेऽस्तु पद्मपत्रायतेक्षण ॥
प्रभुस्त्व सर्वदेवाना लोकाना प्रभुरव्यय ।
त्व यज्ञस्त्वं वषट्कारस्त्वयि सर्वं प्रतिष्ठितम् ॥

— $M_4$ reads $25^{c}$–$27^{d}$ after 40 4 —$^{c}$) $V_2$ $Dn_1$ $T_{1, 2, 4}$ $G_{1-3, 5}$ M याज्ञि( $G_{2, 3}$ M °ज्ञी )यम् (for यज्ञि°) —$^{d}$) $T_3$ भवता (for मन्त्रत) $\tilde{N}_1$ $V_{1, 2}$ $B_2$ (marg) $D_{3, 4}$ $T_{2, 4}$ $G_{1, 2, 4, 5}$ परि- (for प्रति-).

26 For the sequence in $M_4$, cf v l 25 —$^{a}$) $Ds_1$ (*sup lin*) $T_{1, 2}$ $G_{1, 3-5}$ M मन्त्र (for यज्ञ-) $K_1$ $\tilde{N}_2$ भूतस्य (for पू°) $G_2$ त्वमत्र मन्त्रभूतस्य —$^{b}$) $T_3$ सर्वस्य (for पाद्यस्य) $K_4$ (marg) वारिण, $D_3$ $G_{1, 3}$ $M_{1, 2}$ पावनम्, $G_{2, 4, 5}$ भावनम्, $M_{3, 4}$ भाजनम् (for पावन॰). —$^{c}$) $G_1$ आधितस् (for अतिथिस्) $K_4$ त्वं च, $T_3$ सर्वं- (for त्वं हि) $D_{2, 3}$ न प्रोक्तः, $M_4$ मन्त्राणां (for मन्त्रोक्तः) —$^{d}$) $K_{1-3}$ $V_1$ $D_{2, 3}$ सुदृष्ट, $V_3$ सहृष्ट, Bom and Poona eds. सदृष्टः (for स दृष्ट) $B_1$ $T_{3, 4}$ परमो, $D_5$ सततं (for सततम्) $\tilde{N}_1$ मया; $\tilde{N}_2$ महत् (for मत) $\tilde{N}_3$ सुदृष्ट संततं मत., Ds $D_4$ सुदृष्टः परमो मत, $T_{1, 2}$ G $M_{1, 2, 4}$ सदस्यः सद आगत॰, $M_3$ वेददृष्टेन कर्मणा.

27 For the sequence in $M_4$, cf v l. 25 —$^{a}$) $G_{1, 3}$ अथ (for त्वयि) $K_{2, 4}$ $V_2$ Dn युद्ध-, Ñ $V_{1, 3}$ $D_{1, 3}$ युद्धं (for योद्धुं) $S_1$ विप्रा, $\tilde{N}_1$ $V_2$ $B_1$ $Ds_2$ $T_{1, 3}$ $G_3$ $M_2$ विष्णौ (for विष्णो) —$^{b}$) Ś$_1$ $K_4$ $D_2$ सत्क्रिया (for न क्रियाः) —$^{c}$) $M_4$ वैष्णवस्य च यज्ञस्य. — $D_2$ transp $27^{d}$ and $28^{a}$. —$^{d}$) $B_4$ प्रवर्तते (for विधीयते).

28 $D_2$ transp $27^{d}$ and $28^{a}$ —$^{a}$) $\tilde{N}_2$ सवैष्णवस्य यज्ञस्य. —$^{b}$) $K_2$ $V_3$ $D_{2, 5}$ $M_3$ त्वत्प्रसूति-, $K_3$ $\tilde{N}_1$ $B_{2, 3}$ °सूति, $D_1$ $T_{1, 4}$ °सूत- (for °सूतं) $T_2$ $G_3$ लभेत् (for भवेत्) Ś$_1$ त्वत्प्रसूतिफलं महत्, $\tilde{N}_{2, 3}$ $V_1$ $B_1$ Ds $D_4$ त्वत्प्रसूति.

सदक्षिणस्य यज्ञस्य त्वत्प्रसूतं फलं भवेत् ।
यद्यात्मानमिहास्माभिरिज्यमानं निरीक्षसे ॥ २८

एवमस्त्विति तान्विप्रान्भगवान्प्रत्यपूजयत् ।
मुमुदे ब्रह्मलोकस्थो ब्रह्मैव हि पितामहः ॥ २९

इति श्रीहरिवंशे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

# ४०

वैशंपायन उवाच ।
ऋषिभिः पूजितस्तैस्तु विवेश हरिरीश्वरः ।
पौराणं ब्रह्मसदनं दिव्यं नारायणाश्रमम् ॥ १
स तत्र विविशे हृष्टस्तानासज्य सदोगतान् ।
प्रणम्य चादिदेवाय ब्रह्मणे पद्मयोनये ॥ २
स्वेन नाम्ना परिज्ञातं स तं नारायणाश्रमम् ।
प्रविशन्नेव भगवानायुधानि व्यसर्जयत् ॥ ३

स तत्राम्बुपतिप्रख्यं ददर्शालयमात्मनः ।
स्वाधिष्ठितं भूतगणैः शाश्वतैश्च महर्षिभिः ॥ ४
संवर्तकाम्बुदोपेतं नक्षत्रस्थानसंकुलम् ।
तिमिरौघपरिक्षिप्तमप्रधृष्यं सुरासुरैः ॥ ५
न तत्र विषयो वायोर्नेन्दोर्नापि विवस्वतः ।
वपुषा पद्मनाभस्य स देशस्तेजसा वृतः ॥ ६
स तत्र प्रविशन्नेव जटाभारं समुद्वहन् ।　C 2825 B I 50. 7 P I. 50. 7

फ( Ds °निफ )ल लभेत् — For $28^{ab}$, T3 subst

530* सदक्षिगमहायज्ञास्त्वत्प्रसूतिर्जनार्दन ।

— $^{c}$) K2 ( by corr ) D6 यथा, Ñ1. 2 V2 B Dn Ds D2–4 T1–3 G3 4 M1 4 अद्य (for यदि ) G1 2 5 अद्यात्मानमिवास्माभिर् — $^{d}$) K3 विलोक्यसे; G( ed ) इहेक्ष्यसे ( for निरीक्षसे ).

29 $^{a}$) Ś1 K1 3 D2 3 5 T1 4 सर्वान् ( for विप्रान् ) — $^{d}$) Ś1 ब्रह्मेव प्र-, K1 Ñ1 3 V1 3 D4 T1 2 4 G3 5 ब्रह्मा लोक-, K3 V2 B D2 5 M1–3 ब्रह्मेव हि, K4 Dn D1 T3 ब्रह्मलोक-, G2 ब्रह्मेव च; G4 ब्रह्मा देव-, M4 ब्रह्मा इव ( for ब्रह्मैव हि ).

Colophon om in D6 — *Mention of the Epic* K1 3 Ds2. — *Mention of Khila* Ś1 K3 4 Ñ2 3 V B Dn2 Ds D1 2 5 T4. — *Sub-parvan* T4 आश्चर्यपर्व — *Adhy name* K2 Dn ब्रह्मलोकगमनम्, K4 Ñ V B Ds D1–5 ब्रह्मलोकवर्णनम् — *Adhy no* ( figures, words or both ) K3 T4 47; Ñ3 V1 Dn2 Ds2 49, V2 50, V3 D3 4 48; D1 T1 G3 5 45, T2 G1 M4 44, T3 51; G2 4 42, M1–3 41. — *Śloka no* K1 Dn Ds2 D3 4 29

## 40

☞ D6 om this adhy ( cf v l. 39. 1 )

1 T3 om the ref — $^{a}$) D3 विष्णुर्, M1 2 तत्र ( for तैस्तु ) — $^{b}$) T3 संविवेश हरिस्तदा — $^{c}$) D3 पुराण ( for पौ° ) Ñ1 3 ( marg as in text ) B1 Dn Ds D1. 2 ( *sup. lin.* ) 4 5 T1 G2–5 M4 गुह्य-, B3 दिव्य- ( for ब्रह्म- ). T2 G1 पुराणगुह्यसदन — $^{d}$) G2 गुह्यं ( for दिव्यं ) Ś1 K1 3. 4 Ñ2 3 V1 3 B3 Ds D1–5 T1–3 G3 दिव्यं ( D2 नित्यं ) नारायणाश्रयम्.

2 B3 om ( hapl ) $2^{a}$–$3^{b}$ — $^{a}$) Dn च तद् ( for तत्र ) Ś1 सहसा दिवि संहृष्टस्, Ñ1 3 V1 2 B1 2 Ds D2–5 स तद्विवेश हृष्टात्मा ( B2 संहृष्टस् ); T1 3 4 तत्र ( T4 °त. ) प्रविश्य हृष्टात्मा; M1–3 तत्राविवेश संहृष्टस् — $^{d}$) K2 D4 ब्रह्म- ( for पद्म- ) Ñ1 योनिने ( for -योनये )

3 B3 om $3^{ab}$ ( cf v l 2 ). — $^{a}$) K4 श्वेतं ( for स्वेन ). — $^{b}$) T1 2 G1 तस्मात्; M दिव्यं ( for स तं )

4 $^{a}$) B2 तदा ( for तत्र ) K2 -पद-; K3 Ñ1 T2 -परि-; T3 -धर- ( for -पति- ). — $^{b}$) T2 [आ]श्रयम् ( for [आ]ल° ). M1–3 उत्तमम् ( for आत्मन. ) — $^{c}$) B2 ( marg ) अधिष्ठितं ( for स्व° ). K Ñ1 3 V B D T3 4 G4 देवगणैः ( for भूत° ). Ñ2 अधिष्ठितं देवगणै — $^{d}$) T1 2 G M शाश्वतै. परमर्षिभि. — After 4, M4 reads 39 $25^{c}$–$27^{d}$.

5 $^{b}$) G1 -मण्डलम् ( for -संकुलम् ) — $^{d}$) K2 अप्रघृष्टं, D1 °धर्षं; D2 अधृष्यं च ( for अप्रधृष्यं )

6 $^{a}$) Ñ1 2 V1 D4 5 विषयं ( for °यो ) D1 नेन्दोर् ( for वायोर् ) — $^{b}$) K Ñ3 V B3 Dn D2–5 S ( except M2 ) [इ]न्दोर्न च, Ñ2 °नैव, B1 °रपि, D1 °श्चैव ( for °र्नापि ) — $^{c}$) K4 Ñ3 ( marg as in text ) Dn D1 2 T1. 2 G3 M1. 2 वपुष. ( for °षा ). Ñ1 वपुषो महतस्तस्य.

स सहस्रशिरा भूत्वा शयनायोपचक्रमे ॥ ७
लोकानामन्तकालज्ञा काली नयनशालिनी ।
उपतस्थे महात्मानं निद्रा तं कालरूपिणी ॥ ८
स शिश्ये शयने दिव्ये समुद्राम्भोदशीतले ।
हरिरेकार्णवोक्तेन व्रतेन व्रतिनां वरः ॥ ९
तं शयानं महात्मानं भवाय जगतः प्रभुम् ।
उपासांचक्रिरे विष्णुं देवाः सर्षिगणास्तदा ॥ १०
तस्य सुप्तस्य शुशुभे नाभिमध्यात्समुत्थितम् ।
आद्यस्य सदनं पद्मं ब्रह्मणः सूर्यसंनिभम् ॥ ११
ब्रह्मसूत्रोद्यतकरः स्वपन्नेव महामुनिः ।
आवर्तयति लोकानां सर्वेषां कालपर्ययम् ॥ १२
विवृतात्तस्य वदनान्निःश्वासपवनेरिताः ।
प्रजानां पङ्क्तयो ह्योघैर्निष्पतन्ति विशन्ति च ॥ १३
ते सृष्टाः प्राणिनामोघा विभक्ता ब्रह्मणा स्वयम् ।
चतुर्धा स्वां गतिं जग्मुः कृतान्तोक्तेन कर्मणा ॥ १४
न तं वेद स्वयं ब्रह्मा नापि ब्रह्मर्षयोऽव्ययाः ।
विष्णुं निद्रामयं योगं प्रविष्टं तमसावृतम् ॥ १५
ते तु ब्रह्मर्षयः सर्वे पितामहपुरोगमाः ।
न विदुस्तं क्वचित्सुप्तं क्वचिदासीनमासने ॥ १६
जागर्ति कोऽत्र कः शेते कः श्वसन्कश्च नेङ्गते ।

7 $^b$) K$_3$ पुरा वहन्, M$_{1-3}$ अथोद्व° (for समुद्व°) Ś$_1$ G$_2$ जटाभारपुरोद्वह ; T$_{1\ 3\ 4}$ °मण्डलमुद्वहन्, T$_2$ G$_{1\ 3-5}$ °भारधरो हरि, M$_4$ °भारपरोऽभवत् — $^c$) K$_2$ D$_5$ G सहस्रशिरसा (G$_{2,3}$ °सो) भूत्वा, Ñ$_1$ V$_2$ B Dn T$_{1\ 4}$ M$_{1-3}$ सहस्रशीर्षो (Dn °र्षा) भूत्वा तु (Ñ$_1$ स, V$_2$ B$_1$ M$_{1-3}$ च).

8 $^b$) K$_3$ निद्रा (for काली). T$_3$ -वारिजे (for -शालिनी). — After 8$^c$, K$_1$ ins.

531* विश्वस्य जगत प्रभुम् ।
नारायण विश्वबीजं

— $^d$) K$_{1\ 3\ 4}$ D$_5$ M$_{1-3}$ तत् (for तं) D$_2$ (*sup lin* as in text) काम- (for काल-) K$_2$ निद्रालुं कामरूपिणी

9 $^a$) D$_2$ स शेष, T$_{3,4}$ शिश्ये वै, G(ed) स शेते (for स शिश्ये) K$_{1\ 3}$ शुभ्रे (for दिव्ये) — $^b$) T$_2$ G$_1$ समुद्राम्भसि शीतळे — $^c$) T$_2$ G$_1$ हरिरेकार्णवे तेन

10 $^a$) Ś$_1$ K$_{1\ 3}$ महायोगं (for °त्मानं) — $^b$) K$_4$ Ñ$_2$ V$_{2\ 3}$ D$_{1-3,5}$ विश्वस्य, T$_3$ विश्रुतं, T$_4$ विस्मयं (for भवाय) T$_{1\ 2}$ G जलाशयगतं प्रभुम्, M$_{1-3}$ जयाय जगतां प्रभुम् — $^{cd}$) V$_2$ D$_3$ देवा विष्णुं (by transp) K$_3$ ऋषिगणास् (for सर्षि°).

11 $^a$) Ś$_1$ शयने; V$_3$ ददृशे (for शुशुभे) — $^b$) B$_3$ समन्वितम्, D$_{1\ 2}$ समुच्छ्रि°, T$_2$ G$_1$ सुमण्डि° (for समुत्थि°). — $^c$) Ś$_1$ आसाद्य (for आद्यस्य) K$_{2\ 4}$ Ñ V B D (D$_6$ om) T$_4$ G$_4$ आद्यं तस्यासन पद्मं, T$_3$ स्थानं तच्चामलं पद्मं — $^d$) K$_{2,4}$ Ñ V Dn D$_{1-3,5}$ -वर्चसम् (for -संनिभम्) — After 11, K$_{1-3}$ Ñ$_{2,3}$ V B Dn Ds D$_{2-5}$ T$_{1,3\ 4}$ G$_{3\ 5}$ ins..

532* सहस्रपत्रं वर्णाढ्यं सुकुमारं विभूषितम् ।

[T$_{1,3,4}$ G$_5$ -वर्णं (for -पत्रं). K$_2$ V$_3$ पर्णाढ्य (for व°). Ñ$_3$ Ds सुविस्तृतम्; V$_2$ सुपुष्पि°, T$_3$ प्रभाकरम्, T$_4$ च भूषितम् (for विभू°). K$_{1,3}$ D$_{2-5}$ सुकुमारवपुर्धरम् (for $^b$).]

12 K$_1$ reads 12$^{ab}$ twice — $^a$) Ś$_1$ K$_4$ सोऽक्ष-, K$_1$ (second time) $_3$ D$_1$ साक्ष- (for ब्रह्म) K$_2$ -तनु (for -कर) — $^b$) T$_4$ स्वप्नेन च (for स्वपन्नेव) K$_3$ पितामहः; M$_{1-3}$ महाद्युतिः (for °मुनि) — $^c$) K$_2$ आवर्जयति, Ñ$_1$ संवर्त° (for आवर्त°). K$_3$ भूतानां (for लोकानां) — $^d$) K$_2$ वर्जनम्, K -वर्चसम्, Ñ$_2$ V$_1$ D$_4$ पर्यये (for °यम्).

13 $^a$) K$_2$ (before corr) Ñ V$_{1,2}$ Dn Ds D$_{2-4}$ निश्चेरुस्. M$_1$ विविक्तात् (for विवृतात्) — T$_{1\ 2}$ G read 13$^{cd}$ twice — $^c$) B$_{1\ 2}$ पतयो (for पङ्क्तयो) K$_1$ ह्येत; Ñ$_3$ (marg) T$_4$ ह्युच्चैर्, V$_3$ Dn$_2$ D$_3$ ह्येवं (for ह्योघैर्) K$_{2-4}$ Ñ$_{2\ 3}$ V$_2$ Dn$_1$ D$_{1\ 2\ 5}$ T$_3$ प्रजानां पतयो ह्येवं (T$_3$ ह्याद्या), T$_{1\ 2}$ G (all both times) मेघानां पङ्क्तयो व्योम्नि. — $^d$) K$_{2\ 3}$ Ñ B D (D$_6$ om) T$_3$ [उ]त्पतन्ति च; T$_1$ G (all both times) M सहस्रश, M$_2$ (*inf. lin*) पतन्ति च (for विशन्ति च)

14 $^a$) K$_{1\ 4}$ Ñ$_2$ V$_3$ D$_1$ ते सृष्टा ब्रह्मणा मेघा; K$_2$ Ñ$_3$ V$_2$ Dn D$_5$ T$_1$ G$_4$ ते सृष्टा· प्राणिनो मेध्या — $^b$) K$_1$ विभक्ता पालयन्ति तत् — K$_3$ om 14$^c$–15$^b$ — $^c$) B$_3$ चतुर्वर्गा (for °र्धा स्वां). — $^d$) Ñ$_2$ वेदोक्तेन च कर्मणा

15 K$_3$ om 15$^{ab}$ (cf v l 14) — $^a$) Ñ$_2$ V$_3$ न वेद तं, T$_{1\ 2}$ G$_{1-3\ 5}$ M तं न वेद, T$_4$ स यद्ब्रह्म (for न त वेद) — $^b$) Ś$_1$ V$_2$ T$_{1\ 2}$ G$_{1-4}$ M$_4$ ऽमला·, B$_2$ (marg) विदु·, D$_1$ ऽव्ययम् (for °या) — $^c$) Ś$_1$ B$_{1\ 2}$ T G$_3$ विष्णोर् (for विष्णुं). G$_2$ लोकं (for योगं)

16 $^a$) T$_{3\ 4}$ ते च, G$_1$ तेषु (for ते तु) — T$_3$ om 16$^{cd}$ — $^c$) B$_2$ पुरा (for क्वचित्) T$_1$ शान्तं, T$_4$ द्रष्टुं (for सुप्तं).

17 $^a$) K$_{2\ 4}$ Ñ$_{2\ 3}$ V D (D$_6$ om) च (for ऽत्र) V$_1$ ऽत्रैव (for शेते) — $^b$) K$_1$ क स्वित्सुप्तश्, K$_3$ Dn T$_1$ कश्च शक्तश्; K$_4$ कस्य शक्तिश्, Ñ V B Ds D$_{2,3,5}$ T$_{3,4}$ कश्च सुप्तश्, D$_4$

को भोगवान्को द्युतिमान्कृष्णात्कृष्णतरश्च कः ॥ १७
विमृशन्ति स्म तं देवं दिव्याभिरुपपत्तिभिः ।
न चैनं शेकुरन्वेष्टुं कर्मतो जन्मतोऽपि वा ॥ १८
कथाभिस्तत्प्रदिष्टाभिर्ये तस्य चरितं विदुः ।
पुराणं तं पुराणेषु ऋषयः संप्रचक्षते ॥ १९
श्रूयते चास्य चरितं देवेष्वपि पुरातनम् ।
महापुराणात्प्रभृति परं तस्य न विद्यते ॥ २०
यच्चास्य वेद वेदोऽपि चरितं स्वप्रभावजम् ।
तेनेमाः श्रुतयो व्याप्ता वैदिका लौकिकाश्च याः ॥ २१
भवकाले भवत्येष लोकानां भूतभावनः ।
दानवानामभावाय जागर्ति मधुसूदनः ॥ २२
यदैनं वीक्षितुं देवा न शेकुः सुप्तमच्युतम् ।
ततः स्वपिति घर्मान्ते जागर्ति जलदक्षये ॥ २३
तस्मिन्सुप्ते न वर्तन्ते मन्त्रपूताः क्रतुक्रियाः ।
शरत्प्रवृत्तयज्ञो हि जागर्ति मधुसूदनः ॥ २४
तदिदं वार्षिकं चक्रं कारयत्यम्बुदेश्वरः । C 2844 B 1.50 26 P 1.50 26

कः सुस कश् ( for कश्चसन्कश् ) T2 G1 कश्च सन्य क नेहते, G2 4 5 कश्च सन्कश्च नेहते, M4 कश्च शक्तश्च नेहते —$^{c}$) V3 को भवान्कश्च द्युतिमान्, T3 को ह्यय द्युतिमान्को वा —$^{d}$) Ds1 D5 कृष्ण-, G2 M4 कृष्ण, ( for कृष्णात् ) M1–3 कृष्णतमश् ( for °तरश् ).

18 $^{a}$) Ñ2 V2 B1 2 ( marg as in text ) 3 Ds D5 G3 देवा ( for देव ). S1 K2 T4 विमृशन्तश्च तं देव ( S1 °वा ) — After $18^{ab}$, S ( except T3 4 ) ins :

533* वाक्यैर्ब्रह्मपदैश्चापि प्रमाणे सर्वलक्षणै. ।
[ M3 ब्रह्मविदश् ( for °पदैश् ) ]

—$^{c}$) Ñ2 V3 [ए]व ( for [ए]नं ) M1 2 ( inf lin as in text ) 3 न शेकुस्त समन्वेष्टुं —$^{d}$) D1 कर्मणा ( for °तो ) Ś1 D2 जन्मत कर्मतोऽपि वा

19 $^{a}$) Ñ2 V2 B1 2 Dn गाथाभिस् ( for क° ) K1 M1 2 तत्प्रवृत्ताभिर्, Ñ3 D1 3 T3 °विष्टाभिर्, T1 2 G1 2. 4 5 M3 4 °युक्ताभिर् ( for °दिष्टाभिर् ) K2 B3 Ds गाथाभि सव्यातिष्ठाभिर्, Ñ1 V3 गाथाभिस्तत्र दृष्टाभिर् —$^{c}$) K Ñ V B1 2 Dn Ds D1 2 4 5 T1 3 4 G3 पुराणास् ( for °णं ) D3 T2 G1 4 5 तत् ( for तं ) —$^{d}$) M1–3 मुनय ( for ऋषयः ) V2 D3 तं ( for सं- )

20 $^{a}$) T3 4 श्रूयनां तस्य चरित —$^{b}$) D5 [इ]व ( for [अ]पि ). —$^{d}$) K4 Dn1 M4 त्वस्य, D3 तस्मान् ( for तस्य ) — For $20^{cd}$, M1–3 subst

534* तत्पुराणादृते तस्य चरितं नैव विद्यते ।

21 $^{a}$) Ñ2 वेदेऽपि, T1 2 G1 3–5 चरितं ( for वेदोऽपि ) K2 B3 यथास्य ( B3 °स्माच्च ) देवदेवस्य, Ñ1. 3 V B1 2 Ds D3–5 यच्चास्य ( V3 °पि, D4 5 °दौ ) देवदेवस्य, T3 4 चरित देवदेवस्य ; G2 M4 देवस्य देवचरितं, M1–3 यच्चास्य चरितं वेद. —$^{b}$) Ñ1 3 V1 स्वं ; Ds1 च, Ds2 तु ( for स्व ) K3 -प्रसादजम् ( for -प्रभाव° ) T1 2 G M2 ( inf lin. ) 4 तत्तस्यैव प्र- ( G3 5 स्व )भावजम् ; M1 स तस्यैव प्रसादजः ; M2 स तस्यैव प्रभावजम्, M3 तत्तस्यैव प्रसादजम्. —$^{c}$) K1 3 ते वेद- ; Ñ1 तेन वा ( for तेनेमा ) —$^{d}$) Ś1 Ñ1 लौकिका वैदिकाश्च याः ; Ñ2 B3 Dn D1 T1 3 4 G2 3 5 वैदिक्यो लौकिकीश्च याः ; V3 B1 2 Ds लौकिक्यो वेदजाश्च या, T2 G1 4 लौकिका( G1 °क )श्च तथैव च

22 D3 om 22 —$^{a}$) G3 भजति ( for भवति ) —$^{b}$) V1 B1 2 Ds M2 ( inf lin as in text ) भूतानां ( for लोकानां ) K3 Bom and Poona eds लोक- ( for भूत- ). —$^{c}$) K4 भयायैव ( for अभावाय ).

23 $^{a}$) Ś1 ये च, K4 यच्च, Dn Ds2 D1. 3 यत्र ( for यदा ) —$^{b}$) K2 4 Ñ2 3 V B D ( D6 om ) T2. 4 अव्ययम् ( for अच्युतम् ) S1 K1 3 न शेकुरमितौजसम् —$^{c}$) K2 Ñ3 V1 3 B3 Dn D1 3 तत्र ; D2 तदा ( for ततः ). —$^{d}$) K2 त्वब्दमं- ( for जलद ) Cal ed जागर्ति मधुसूदनः. — After 23, N ( except S1 Ñ1, D6 om ) T1. 3. 4 G3. 5 ins :

535* स हि यज्ञाश्च वेदाश्च यज्ञाङ्गानि च सर्वशः ।
या तु यज्ञगति प्रोक्ता स एष पुरुषोत्तमः ॥

[ ( L 1 ) K1 3 B3 D1 4 5 स हि वेदाश्च यज्ञाश्च ( for $^{a}$ ). K4 वेदाङ्गानि ( for यज्ञा° ) —( L 2 ) K3 Ñ2. 3 V B Ds D4 या हि ; D3 याभिर्, T1 G3. 5 या च ( for या तु ). K1. 2 Ñ3 V1. 3 B2 G5 एव ; T1 एकः ( for एष ). ]

24 B3 om $24^{ab}$ —$^{a}$) K2 4 V2 3 Dn D1–4 निवर्तन्ते, Ds न वर्धन्ते ; T3 4 निवृत्ते तु ( for न वर्तन्ते ). V1 अस्मिन्सुप्ते विवर्तन्ते. — K3 om $24^{b}$–$25^{a}$. —$^{b}$) K1 4 Ñ3 V2 ( sup. lin as in text ) 3 D1. 3 T3 मन्त्रपूर्वा ; Ñ3 ( marg ) °वृत्ता. ( for °पूताः ). —$^{c}$) K2 -पर्जन्ये, B3 T4 -यज्ञोऽयं, T3 -यज्ञा हि ( for -यज्ञो हि ) D3 शरत्प्रवृत्तौ यज्ञानां. — For $24^{cd}$, T1 2 G M subst

536* शरत्प्रभृति यज्ञा हि जाग्रति श्रीधरे हरौ ।

[ M1–3 तस्मिञ्जाग्रति केशवे, M4 जागर्ति श्रीहरौ यदि ( for $^{b}$ ). ]

25 K3 om. $25^{a}$ ( cf v l. 24 ) —$^{a}$) Ñ1 तदा हि ; T1 M1–3 यदिदं ( for त° ). M1 ( inf. lin ) कर्म ( for चक्रं )

वैष्णवं कर्म कुर्वाणः सुप्ते विष्णौ पुरंदरः ॥ २५
या ह्येषा गह्वरी माया निद्रेति जगति स्थिता ।
अकस्माद्द्वेषिणी घोरा कालरात्रिर्महीक्षिताम् ॥ २६
अस्यास्तनुस्तमोद्वारा निशादिवसनाशिनी ।
जीवितार्धहरी घोरा सर्वप्राणभृतां भुवि ॥ २७
नैतया कश्चिदाविष्टो जृम्भमाणो मुहुर्मुहुः ।
शक्तः प्रसहितुं वेगं मज्जन्निव महार्णवे ॥ २८
अन्नजा भुवि मर्त्यानां श्रमजा वा कथंचन ।
नैशा भवति लोकस्य निद्रा सर्वस्य लौकिकी ॥ २९
स्वप्नान्ते क्षीयते ह्येषा प्रायशो भुवि देहिनाम् ।
मृत्युकाले च भूतानां प्राणान्नाशयते भृशम् ॥ ३०
देवेष्वपि दधारैनां नान्यो नारायणादृते ।
सखी सर्वहरस्यैषा माया विष्णुशरीरजा ॥ ३१
सैषा नारायणमुखे दृष्टा कमललोचना ।
लोकानल्पेन कालेन भजते भूतमोहिनी ॥ ३२
एवमेषा हितार्थाय लोकानां कृष्णवर्त्मना ।
ध्रियते सेवनीयेन पतिनेव पतिव्रता ॥ ३३
स तया निद्रया छन्नस्तस्मिन्नारायणाश्रमे ।
शेते स्म हि तदा विष्णुर्मोहयञ्जगदव्ययः ॥ ३४
तस्य वर्षसहस्राणि शयानस्य महात्मनः ।

— [b]) $K_2$ प्रकरोति, $K_4$ $V_1$ $B_3$ $D_{1.2}$ $T_4$ धारयति ($T_4$ °यन्) (for का°) $\tilde{N}_1$ $V_3$ कारयत्यम्बुजेक्षण, $D_2$ (marg as in text) धारयत्यम्बुदक्षये, $T_3$ धारयन्विबुधेश्वर· — [d]) $T_1$ $M_4$ तस्मिन् (for विष्णौ).

26 [a]) $K_{2\ 4}$ Dn $D_5$ $T_4$ $G_2$ गह्वरा, V शांकरी, $T_2$ $G_{3\ 4}$ भास्वरी ($G_4$ °ती) (for गह्वरी) $D_3$ ग्राह्येषा गहना माया — [c]) $K_3$ $\tilde{N}$ V B D ($D_6$ om) साकस्माद् (for अ°) $T_{1\ 2}$ G $M_4$ सा ध($G_2$ क)र्मान्वेषिणी घोरा; $M_{1-3}$ सा तस्य वैष्णवी घोरा· — [d]) $T_1$ G M महीपते, $T_2$ °तले (for °क्षिताम्)

27 [a]) $K_{2\ 4}$ $\tilde{N}_1$ $V_2$ B Dn Ds $D_{1\ 5}$ $T_{1.2}$ $M_4$ तस्यास् (for अ°). $D_4$ तत्र (for तनुस्) $\acute{S}_1$ $K_{1\ 3}$ तमोद्वारि (for °द्वारा) $\tilde{N}_{2\ 3}$ $V_{1\ 3}$ $T_4$ तस्यास्तनुस्तमोद्वार, $D_2$ तस्यास्तत्र तमोद्वारि, $D_3$ तस्यास्तनुसमा वीर — [b]) $M_3$ -सादिनी (for -नाशिनी) — [c]) $K_{1.3.4}$ $V_2$ Dn $D_{1\ 3\ 5}$ $T_{2\ 4}$ हरा (for -हरी). $\tilde{N}_1$ सा तु (for घोरा) $\acute{S}_1$ जीविताहरणी घोरा; B Ds °र्धंहरा सा तु·

28 [a]) $\tilde{N}_1$ lacuna; $D_5$ तया (for [ए]तया). — [b]) $T_2$ $G_{1.3}$ म्रियमाणो (for जृम्भ°). — [c]) $M_4$ वेगान् (for वेगं) — [d]) $G_2$ भमुं नावमिवार्णवे

29 [b]) $V_2$ श्रमजा च, $T_3$ श्रमजाता (for °जा वा). $M_{2.3}$ कदाचन (for कथं°) $M_1$ श्रमदा वा कदाचन — [c]) $\acute{S}_1$ $\tilde{N}_{1\ 3}$ $V_{1\ 3}$ $Dn_2$ $D_5$ नैषा, $K_{2-4}$ $D_{1-3}$ निशा, $\tilde{N}_2$ $T_{1\ 3}$ सैषा; $V_2$ नैशी, $T_4$ शेषा, $G_1$ नैका (for नैशा). $G_3$ कालस्य (for लोकस्य) B Ds $D_4$ नैशी भवति मर्त्य($D_4$ सर्व)स्य — [d]) $\tilde{N}_2$ $V_3$ सत्त्वस्य; $D_4$ लोकस्य, $T_2$ $G_1$ $M_2$ भवति (for सर्वस्य).

30 [a]) $V_{1.2}$ $G_2$ सुप्तान्ते (for स्वप्नान्ते) $K_2$ जायते (for क्षी°). — [b]) $\tilde{N}_3$ $V_1$ $D_2$ $M_{1\ 3}$ प्रायग (for प्रायशो) $D_3$ प्रायेण भुवि देहिनी — [c]) $\acute{S}_1$ कालं तु, $K_1$ -कालेन; $T_2$ G $M_{1.2}$ -काले हि ($M_{1.2}$ तु) (for काले च). $K_4$ लोकानां (for भूतानां) — [d]) $\acute{S}_1$ स्वानाददे, $K_1$ $G_{2.4}$ $M_{1-3}$ स्वापयते, $\tilde{N}_1$ $B_2$ (marg as in text) $_3$ Ds क्षपयते, $G_{1\ 5}$ स्वप° (for नाश°)

31 [c]) $\tilde{N}_1$ $T_2$ सा तु, $G_1$ सा ते, $G_{3\ 5}$ सापि (for सखी) $K_1$ -यमस्य (for -हरस्य) — [d]) $K_2$ पद्मा विष्णो·, $K_{3.4}$ $\tilde{N}_2$ $V_{2\ 3}$ Dn $D_{1-5}$ $T_{2\ 3}$ $G_{1\ 5}$ माया विष्णो, $\tilde{N}_3$ विष्णोर्माया, $\tilde{N}_3$ (marg) $V_1$ विष्णोर्जाया, $B_{2.3}$ Ds पाप्मा विष्णोः, $M_{1-3}$ पाप्मा विष्णु- (for माया विष्णु-) $G_2$ माया विष्णोः शरीरिणी

32 [a]) $T_{3\ 4}$ या सा (for सैषा) — [b]) $\acute{S}_1$ सुप्ता, $K_1$ (*sup lin* as in text) $D_{3\ 5}$ $M_{1.2}$ तृप्ता; $K_4$ कृष्णा, $G_2$ दृप्ता, $M_3$ सैषा (for दृष्टा) $B_3$ (marg) योनिना, $M_{1-3}$ -लोचने (for °ना) — [d]) $K_{2\ 3}$ $\tilde{N}_{2\ 3}$ $V_3$ $B_2$ (marg) Dn $D_{1\ 3-5}$ $T_3$ ग्रसते (for भजते) $\tilde{N}_3$ (marg) -भाविनी (for मोहिनी) $K_{1\ 4}$ $D_2$ ग्रसते लोकमो($D_2$ सा तु मो)हिनी, $V_{1\ 2}$ ग्रसते भूतभाविनी, $T_4$ श्वसते लोकमोहिनी, $G_2$ भजते भृशमोहिता·

33 [c]) $K_2$ B Ds ध्रि($K_2$ ची)यते सेवनीया हि; $K_{3\ 4}$ $\tilde{N}_{2\ 3}$ V Dn $D_{1\ 3-5}$ $T_{2-4}$ $G_{1\ 3.4}$ M ध्रिय($T_{3\ 4}$ $M_4$ क्षीय-, $G_{3\ 4}$ $M_3$ प्रीय-, $M_2$ सेव्य)ते सेवनीया च — [d]) $K_2$ $\tilde{N}_3$ $V_1$ B Ds $D_{2\ 4}$ $G_4$ पत्येव च ($\tilde{N}_3$ $B_{1\ 3}$ हि), $K_{3\ 4}$ $\tilde{N}_1$ $V_{2\ 3}$ Dn $D_{1\ 5}$ $T_2$ $G_{1-3\ 5}$ $M_{1-3}$ पत्या इव, $D_3$ पत्या देवी, $T_1$ $M_4$ यत्पादं च; $T_{3\ 4}$ यथा नाथं (for पतिनेव)

34 [c]) $K_{2\ 4}$ $\tilde{N}$ V Dn $D_{1-5}$ $T_{1\ 3\ 4}$ स्वपिति स्म, $M_4$ शयानः स्म (for शेते स्म हि) $K_{1\ 3}$ शेते विभु सदा विष्णुर्; B Ds शेते स्म भगवान्विष्णुर् — [d]) $K_{2\ 4}$ $N_{2\ 3}$ $V_{1\ 3}$ $Dn_2$ $Ds_1$ $D_{1-4}$ $T_{1\ 4}$ $G_2$ $M_4$ अव्ययम् (for °य.)

35 [a]) $T_{3\ 4}$ यस्य, $G_3$ अस्य (for तस्य) — [c]) $T_2$ गतं; $G_1$ श्रुतं (for जग्मुः). $K_2$ $T_4$ चैतत्; $D_3$ सर्वं (for चैव).

जग्मुः कृतयुगं चैव त्रेता चैव युगोत्तमम् ॥ ३५
स तु द्वापरपर्यन्ते दृष्ट्वा लोकान्सुदुःखितान् ।
प्राबुध्यत महातेजाः स्तूयमानो महर्षिभिः ॥ ३६

ऋषय ऊचुः ।

जहीहि निद्रां सहजां भुक्तपूर्वामिव स्रजम् ।
इमे ते ब्रह्मणा सार्धं देवा दर्शनकाङ्क्षिणः ॥ ३७
इमे त्वां ब्रह्मविदुषो ब्रह्मसंस्तववादिनः ।
वर्धयन्ति हृषीकेश ऋषयः संशितव्रताः ॥ ३८
एतेषामात्मभूतानां भूतानां भूतभावन ।
शृणु विष्णो शुभां वाचं भूव्योमाग्न्यनिलाम्भसाम् ॥ ३९
इमे त्वा सप्त मुनयः सहिता मुनिमण्डलैः ।
स्तुवन्ति देव दिव्याभिर्गेयाभिर्गीर्भिरञ्जसा ॥ ४०
उत्तिष्ठ शतपत्राक्ष पद्मनाभ महाद्युते ।
कारणं किंचिदुत्पन्नं देवानां कार्यगौरवात् ॥ ४१

वैशंपायन उवाच ।

स संक्षिप्य जगत्सर्वं तिमिरौघं विदारयन् ।
उदतिष्ठद्धृषीकेशः श्रिया परमया ज्वलन् ॥ ४२
स ददर्श सुरान्सर्वान्समेतान्सपितामहान् ।
विवक्षतः प्रक्षुभिताञ्जगदर्थे समागतान् ॥ ४३
तानुवाच हरिर्देवान्निद्राविश्रान्तलोचनः ।
तत्त्वदृष्टार्थया वाचा धर्महेत्वर्थयुक्तया ॥ ४४
कुतो वो विग्रहो देवाः कुतो वो भयमागतम् ।
कस्य वा केन वा कार्यं किं वा मयि न वर्तते ॥ ४५
न खल्वकुशलं लोके वर्तते दानवोत्थितम् । C 2866 B I 50.47 P I 50.47

---

— d) T2 G यथाक्रमम् ( for युगोत्तमम् )

36 a) K3 सुप्तो, Dn1 स च ( for स तु ) — b) Ś1 लोकाञ्जातान्, K1. 3 T1 G1 ज्ञात्वा लोकान् ( for दृष्ट्वा लो° )

37 G5 M4 om the ref — a) Ś1 K1 3 त्यजस्व, Ñ1 जहीऽव ( for °हि ) T1 M1–3 जहि निद्रा तु ( T1 हि ) सहजां, T3 4 जहीहि सहजां निद्रा — b) T4 श्रियम् ( for स्रजम् ). — c) T1 G2 3 5 M च, T2 G1 4 वै ( for ते )

38 a) T1 G2 M4 ये च ( for इमे ) Ś1 Ñ2 M1 2 त्वा, Ñ1 B1 3 D6 ते; M3 च ( for त्वां ) K1 3 Ñ1 B Ds -विद्वांसो, T3 4 -ऋषयो ( for -विदुषो ) — b) V1 सभव- ( for -संस्तव- ) — c) S1 V2 B2 Ds D3 T2 G M1. 3 वर्धयन्ते ( for °न्त ) Ñ2 V3 M2 हृषीकेशम् ( for °श ) D2 M4 वर्धयन्ते हृषीकेशम् — d) M1–3 मुनयः ( for ऋषय ).

39 a) D2 एव ( for आत्म- ) — b) K2 4 Ñ2 3 V2 3 B1 2 ( marg ) 3 Dn D1 T1 भूतानामात्मभावन, D2 3 5 °नामात्मसंभव, T3 G M4 भूतभावनभावन — c) Ś1 च तां वाणीं; K1 3 शुभां वाणीं; K4 Ñ2 3 B D ( D6 om ) T G M4 शुभा वाचो ( for शुभा वाचं ) K2 विष्णो शृणु शुभा वाचो — d) N1. 3 V1 D1–3 भूम्यग्न्यनिलसभवा

40 a) Ñ1 सर्वे ( for सप्त ) G3 ऋषयः ( for मुनय ) K2 4 Ñ2 3 V D ( D6 om ) T3 4 इमे त्वां मुनयः सप्त — b) K3 Ñ1 V2 D1 -मण्डले, D3 -पुंगवै ( for -मण्डलैः ) — c) S1 B2 ( marg ) T2 G1 3–5 M4 देवं, K2 4 D5 T1 देवा ( for देव ) — d) V2 B2 ( marg ) T2 G4 गाथाभिर् ( for गेयाभिर् ) D3 4 गोभिर् ( for गीर्भिर् ) K4 ओजसा ( for अञ्जसा )

41 After 41, T1. 2 G M ins

537* जहि निद्रा जगद्धेतो केशवेश जनार्दन ।
त्वयि सुप्ते जगत्सुप्तं त्वयि जाग्रति जागृतम् ॥
मीलनं कुरु देवानां देवदेव जगत्पते ।
किं त्वं स्वपिषि गोविन्द नष्टे जगति सांप्रतम् ।
नष्टप्राय जगत्पश्य सदेवासुरमानुषम् ॥ [5]

[ ( L. 1 ) G3 शत्रून् ( for निद्रा ). G4 केशव त्व ( for °वेश ). — ( L 3 ) G4 पालन ( for मी° ) T1 M2–4 लोकाना ( for देवाना ) — ( L 4 ) G4 नत् ( for त्व ) G2–5 M1 4 सप्रति ( for साप्रतम् ). ]

42 T2 G1 3 4 om the ref — a) Ñ1 D1 संक्षिप्यैवं ( for स संक्षिप्य ). Ś1 K1 3 4 Dn D5 जलं; M1–3 तमः ( for जगत् ) T2 G स्वपन्क्षिपन्परिक्षिप्त — b) Ś1 निरामयम्; K1 विनाशयत, T1 2 G M4 विदार्य च ( for °रयन् ).

43 a) M1–3 ददर्श च ( for स ददर्श ). — c) Ś1 विवक्षव, Ñ1 दिदृक्षवः, Ñ2 D1 विवक्षून्; T3 4 विवक्ष्याश्च ( for °क्षत- ) V2 3 B Ds D2–5 विवक्षून्क्षुभिताश्चैव. — d) M4 समाहितान् ( for °गतान् )

44 a) Ñ1 3 ( marg ) V1 B1 2 Dn D1 5 T4 G1 2. 5 M2. 4 देवो ( for देवान् ) — b) K2 D2 -विभ्रान्त- ( for -विश्रान्त ) — c) K1 T2 तत्र, T3 4 स तु ( for तत्त्व- ) T1 M4 -युक्तार्थया ( for -दृष्टा° ) — d) T1 संयुतः; M4 -संहति. ( for -युक्तया ) K3 धर्महेत्वर्थया गिरा

45 Before 45, some Mss ins विष्णुरुवाच and भगवानु° — a) N2 निग्रहो, G2 ऽभिभवो ( for विग्रहो ) — c) V2 कार्यार्थं ( for वा कार्यं ) — d) Ñ2 न मयि ( by transp ), T1. 2 G M1 ( *inf. lin.* ) मनसि.

नृणामायासजननं शीघ्रमिच्छामि वेदितुम् ॥ ४६
एष ब्रह्मविदां मध्ये विहाय शयनोत्तमम् ।
शिवाय भवतामर्थे स्थितः किं करवाणि वः ॥ ४७

इति श्रीहरिवंशे चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

# ४१

वैशंपायन उवाच ।
तच्छ्रुत्वा विष्णुगदितं ब्रह्मा लोकपितामहः ।
उवाच परमं वाक्यं हितं सर्वदिवौकसाम् ॥ १
नास्ति किंचिद्भयं विष्णो सुराणामसुरान्तक ।
येषां भवानभयदः कर्णधारो रणे रणे ॥ २
शक्रे जयति देवेशे त्वयि चासुरसूदने ।
धर्मे प्रयतमानानां मानवानां कुतो भयम् ॥ ३
सत्ये धर्मे च निरता मानवा विगतज्वराः ।
नाकालधर्मणा मृत्युः शक्नोति प्रसमीक्षितुम् ॥ ४
मानवानां च पतयः पार्थिवाश्च परस्परम् ।
षड्भागमुपयुञ्जाना न भेदं कुर्वते मिथः ॥ ५
ते प्रजानां शुभकराः करदैरविगर्हिताः ।

46 a) K1.3 D3 G4 किं (for न) — d) Ś1 K3 तत्त्वम् (for शीघ्रम्). T1 2 G M शीघ्रमावेद्यता सुरा (T1 M4 वरम्)

47 a) T1 2 G1 2 5 M4 एवं (for एष) — b) D8 विहाय शयनोज्ज्वलम् — c) T1 M4 उत्थाय, M1–3 स्थितोऽस्मि (for शिवाय) K2 मध्ये, D1 अद्य (for अर्थे) — d) T3 4 प्रियं, M1 ब्रूत, M2 3 ब्रूहि (for स्थित.).

COLOPHON om in D6 T3 4 — *Mention of the Epic* K3 Ñ2 Ds2 — *Mention of Khila* K1 3 4 Ñ2.3 V B Dn Ds D1 — *Sub-parvan* K1 3 आश्चर्यपर्व —*Adhy name* K2 Dn विष्णोर्योगशयनोत्थानम्, K4 Ñ1 B3 D1.2 5 विष्णोर्योगशयनम्, Ñ2 V3 विष्णुशयनोत्थानम्, Ñ3 V1 योगशयनम्, V2 विष्णोः प्रबोधनम्, B1 2 Ds T2 G1 शयनोत्थानम्, D8 विष्णोः शयनशमनम्; D4 विष्णोर्योगमायोत्थानम्; T1 देवदर्शनम्, G2 भगवद्योगनिद्रोत्थानम्; G3 भगवद्योगशयनोत्थानम्. — *Adhy. no* (figures, words or both). K1 Ñ3 V1 Dn1 Ds2 50, K3 48, V2 51, V3 D4 49, D1 T1 G3.5 46, T2 G1 M4 45; G2 4 43, M1–3 42 — *Śloka no.* Dn Ds2 48, D3 53, D4 47

## 41

☞ D6 om this adhy (cf v l 39 1) G4 om this adhy

1 a) M1–3 श्रुत्वा तु (for तच्छ्रुत्वा) Ñ3 (marg) देव- (for विष्णु-) M4 -कथितं (for -गदितं) — b) K3 Ñ1 V1 G1 ब्रह्म- (for ब्रह्मा). — K2 om 1c–13b. — c) D3 च परं (for परमं).

2 K2 om 2 (cf v l 1) Before 2, Ś1 K1 3 ins ब्रह्मोवाच. — d) D1 रणे स्थित, D5 रणाजिरे, G3 यथा रणे (for रणे रणे)

3 K2 om 3 (cf v l 1) — a) Ñ2 B3 D1–3 T4 G5 M1 3.4 देवेश (for °शे) G1 3 शक्रे जीवति देवेश — b) Ñ1.3 V1 -नन्दन, Ñ2 B2 T3 G1 2.5 M4 -सूदन (for -सूदने). V3 त्वयि वा मधुसूदन, B1 3 Ds त्वयि चारिनिषूदने — c) Ś1 धर्मं (for धर्मे). — d) Ś1 मानुषाणा (for मानवानां).

4 K2 om 4 (cf. v l 1) — a) V1 G(ed) सत्य- (for सत्ये) G1 (*sup lin*) धर्मेण (for धर्मे च) K1 3 V2 B Ds D1 3 4 T3.4 निरतान्, G2 नियतान् (for निरता). — b) K1.3 V2 B Ds D1 4 T3 4 मानवान्विगतज्वरान्. — c) M2 -कर्मणा (for -ध°) K1 3 4 Ñ1 B1 2 Dn D1 T1 2 4 G1 3 5 M4 नाकाले धर्मिणो मृत्यु; Ñ2 3 V1 3 B2 (marg) 3 D2 4.5 T3 °ले धर्मिणां (B2 3 T3 °र्मेणा) मृत्युः; Ds °ले ध(Ds2 °लध)र्मणो मृत्यु — d) K4 Ñ2 3 V B2 (marg) D1–5 T3 4 शक्नोति प्रतिवीक्षि(D3 °बाधि)तुम्

5 K2 om 5 (cf v l. 1) — a) T1 2 G1–3 5 M हि; T3 4 नृ- (for च) K1 (marg as in text) D3–5 भावाय; K3 तपसा (for पतयः) — b) B1 2 Ds वै (for च) Ś1 K1 (marg) 3 पार्थिवा पार्थिवै सह. — c) K4 Ñ V2 3 B2 Dn Ds1 D1.4.5 T G3 5 M3 -भुञ्जाना (for -युञ्जाना). — d) K4 Dn D1 3 T1 भयं (for भेद) Ś1 K1.3 युञ्जते (for कुर्वते).

6 K2 om 6 (cf v l 1) — b) K3 इव, Ñ1 अनु-; B2 T1.2.4 G5 M3 अव-, G2.3 अपि (for अवि-). K4

अकरैर्विप्रयुक्तार्थाः कोशमापूरयन्सदा ॥ ६
स्फीताञ्जनपदान्स्वान्स्वान्पालयन्तः क्षमापराः ।
अतीक्ष्णदण्डाश्चतुरो वर्णाञ्जुगुपुरञ्जसा ॥ ७
नोद्वेजनीया भूतानां सचिवैः साधु पूजिताः ।
चतुरङ्गबलैर्युक्ताः षड्गुणानुपयुञ्जते ॥ ८
धनुर्वेदपराः सर्वे सर्वे वेदेषु निष्ठिताः ।
यजन्ति च यथाकालं यज्ञैर्विपुलदक्षिणैः ॥ ९
वेदानधीत्य दीक्षाभिर्महर्षीन्ब्रह्मचर्यया ।
श्राद्धैश्च मेध्यैः शतशस्तर्पयन्ति पितामहान् ॥ १०
नैषामविदितं किंचित्त्रिविधं भुवि विद्यते ।
वैदिकं लौकिकं चैव धर्मशास्त्रोक्तमेव च ॥ ११
ते परावरदृष्टार्था महर्षिसमतेजसः ।
भूयः कृतयुगं कर्तुमुत्सहन्ते नराधिपाः ॥ १२
तेषामेव प्रभावेन शिवं वर्षति वासवः ।
यथार्थं च ववुर्वाता विरजस्का दिशो दश ॥ १३
निरुत्पाता च वसुधा सुप्रचाराश्च वै ग्रहाः ।
चन्द्रमाश्च सनक्षत्रः सौम्यं चरति योगतः ॥ १४
अनुलोमकरः सूर्यो अयने द्वे चचार ह ।
हव्यैश्च विविधैस्तृप्तः शुभगन्धो हुताशनः ॥ १५
एवं सम्यक्प्रवृत्तेषु निवृत्तेष्वपराधतः ।
तर्पयत्सु महीं कृत्स्नां नृणां कालभयं कुतः ॥ १६
तेषां ज्वलितकीर्तीनामन्योन्यमनुवर्तिनाम् ।

C 2884
B 1.51.17
P 1.51.17

-गर्विता , M4 -गर्हितै ( for °ता ) — c) Dn सुकरैर् ; Ds2 स्वाक° , T3 G2 अप° ( for अक° ) Ś1 युक्कार , T4 °र्थान् ( for °र्था ) G3 आकरेऽपि प्रमुक्तार्था , M4 अपरे विप्रमु° — d) Ñ1 T4 तदा ( for सदा ) K1 3 Ñ2 3 V B Dn Ds D2–5 कोशमापूरयन्त्युत.

7 K2 om 7 ( cf v l 1 ) — a) Ś1 K1 3 B3 सर्वान् ; D. स्वाढ्यान् , T3 4 ग्रामान् ; G2 स्वार्थान् ( for स्वान्स्वान् ). — b) Ñ2 G1 3 5 पालयन्ति ( for °न्त ) — c) Ś1 अभीक्ष्ण- ( for अतीक्ष्ण- ) — d) K4 ओजसा ( for अञ्जसा )

8 K2 om 8 ( cf v l 1 ) — c) S1 Ñ2 V D2 3 G1–3 5 M1 3 4 चतुरङ्गैर् ( for °ङ्ग- ) K1 3 चतुरङ्गैर्बलैर्गुंसा — d) D2 षाड्गुण्यम् ( for षड्गुणान् ). K1 G2 -जीवते , K3 -जीविन ; Ñ1 -युञ्जिरे , Ñ2 3 V B2 3 Dn Ds D4 T G3 -भुञ्जते ( for -युञ्जते ).

9 K2 om 9 ( cf v l 1 ) — b) D1 निश्चिता ( for निष्ठिता ). — c) B1 2 Ds T1 यजन्ते ( for °न्ति ) — d) T1 M4 सर्वे ( for यज्ञैर् ) T2 G1–3 5 सर्वे विततदक्षिणै·.

10 K2 om 10 ( cf v l 1 ) — b) Ś1 ऋषींश्च , K3 D3 T1 2 G1–3. 5 M1–3 ब्रह्मर्षीन् ( for मह° ) M4 ब्रह्मर्षीन्परिचर्यया. — c) Ñ2 V2 B Ds1 T2 G1–3 5 M मेध्यैश्च ( by transp )

11 K2 om 11 ( cf v l 1 ) — b) D3 नैव ; T1 बहु ( for भुवि ) Ś1 K1 3 दृश्यते ( for विद्यते ). Ñ1 3 V1 B Ds D4 त्रिषु लोकेषु विद्यते , D5 ( marg as in text ) विदित चैव विद्यते , M1–3 त्रिविधं विद्यते भुवि — c) Ś1 लौकिक वैदिक चैव — d) D3 धर्मशास्त्रोदितं च यत्.

12 K2 om 12 ( cf. v. l. 1 ). — a) V1 2 B2 ( marg ) D1 3–5 परापर- , B2 परात्पर- ( for °वर- ). — b) M2 ब्रह्मर्षि- ( for महर्षि- ) K3 G2 -तेजसा ( for °सः ).

13 K2 om 13[ab] ( cf v l 1 ) — a) M1 2 प्रसादेन ( for प्रभावेन ) — c) K1 3 D2–5 सुखार्थं , D1 सुस्पर्शाश् ( for यथार्थं ). Ś1 यथायथार्थं च ववुर् — After 13[c], S1 ins. .

538*　　वाता शिवसुगन्धिन ।
　　निर्मलं चाभवद्व्योम·

14 b) Ñ3 ( marg ) V1 प्रभावाश् ( for -प्रचाराश् ). K1 2 Ñ2 V3 B1 Dn D1 2 4 5 T3. 4 खे ग्रहा , Ñ3 ये ग्रहा , V2 खेचरा ( for वै ग्रहा ) — c) K2 Ñ3 V1 सनक्षत्रै ( for °त्र ). — d) M2 ( inf lin as in text ) काल ( for सौम्यं ). T1 M4 नित्यश ( for योगत ). T2 G1–3 5 सौम्यश्चरति नित्यश..

15 a) T4 G2 M4 -गतः ; G5 -गति ( for -कर ). Ś1 अनुलोमे चरन्सूर्यो ; T2 G1 °कूलगतिः सूर्यो — b) K2 Ds T2 G1 3 5 M4 ह्ययने , K3 स्व° , B1 3 T1. 4 त्व° , M1–3 ऽप्य° ( for अ° ) — c) G4 [अ]वितथैस् ( for विविधैस् ) — d) K3 4 Ñ2 Dn D1 3 शुभगन्धिर् , Ñ1 3 ( marg as in text ) V3 B1 D4 5 M1–3 °न्धी , G2 हविर्गन्धो ( for शुभगन्धो ).

16 a) T3 4 सुयुक्तेषु (for प्रवृत्तेषु ). — b) K1. 3 4 D1–3, 5 विवृद्धे( K3 D5 °त्ते )ष्वमरादिषु ; K2 कर्मेषु च मखादिषु , Ñ1 निवृत्तेषु सुरारिषु , Ñ2 3 V1 2 B3 Dn D4 T2 G1–3. 5 M4 विवृद्धे( D4 °विधे )षु मखादिषु , V3 प्रवृद्धेषु सुरादिषु , B1 2 Ds निमित्तेषु मखादिषु ; T1 M1–3 निवृत्तेष्वपराधिषु , T3. 4 °ष्वमरादिषु — d) Ś1 तेषां ( for नृणा ).

17 M3 om. ( hapl ) 17[b]. — b) Ś1 B3 अनि- ( for अनु- ) K1 अन्योन्यवशवर्तिनाम् — d) T2 बध्यते , M1 खण्ड्यते ( for पीड्यते ) T3 यथा ( for -त्वलम् ).

राज्ञां बलैर्बलवतां पीड्यते वसुधातलम् ॥ १७
सेयं भारपरिश्रान्ता पीड्यमाना नराधिपैः ।
पृथिवी समनुप्राप्ता नौरिवासन्नविप्लवा ॥ १८
युगान्तसदृशं रूपं शैलोच्चलितबन्धनम् ।
जलोत्पीडाकुला खेदं दर्शयन्ती मुहुर्मुहुः ॥ १९
क्षत्रियाणां वपुर्भिश्च तेजसा च बलेन च ।
नृणां च राष्ट्रैर्विस्तीर्णैः श्राम्यतीव वसुंधरा ॥ २०
पुरे पुरे नरपतिः कोटिसंख्यैर्बलैर्वृतः ।
राष्ट्रे राष्ट्रे च बहवो ग्रामाः शतसहस्रशः ॥ २१
भूमिपानां सहस्रैश्च तेषां च बलिनां बलैः ।
ग्रामायुताढ्यै राष्ट्रैश्च भूमिर्निर्विवरीकृता ॥ २२
सेयं निरामिषं कृत्वा निश्चेष्टं कालमग्रतः ।
प्राप्ता ममालयं विष्णो भवांश्चास्याः परा गतिः ॥ २३
कर्मभूमिरिहस्थानां भूमिरेषा व्यथां गता ।
यथा न सीदेत्तत्कार्यं जगत्येषा हि शाश्वती ॥ २४
अस्या हि पीडने दोषो महान्स्यान्मधुसूदन ।
क्रियालोपश्च लोकानां दूषितं च जगद्भवेत् ॥ २५
श्राम्यते व्यक्तमेवेयं पार्थिवौघप्रपीडिता ।
सहजां या क्षमां त्यक्त्वा चलत्वमचला गता ॥ २६
तदस्याः श्रुतवन्तः स्म तच्चापि भवता श्रुतम् ।

---

18 $^a$) Ś1 इय ( for सेयं ) —$^c$) T3 विषमं ( for समनु- ) —$^d$) T3 [आ]पन्न- ( for [आ]सन्न ) Ñ1 G2 विह्वला, B2 ( marg ) Ds D1 3 T1–3 G1 3 5 M विक्लवा ( for -विप्लवा )

19 $^a$) K4 Ñ2 3 ( marg as in text ) V3 Dn D1–5 T1 3 4 युगान्तसदृशौ रूपै. —$^b$) K1 ( marg as in text ) -विभ्रमम्, K4 Ñ V1 3 Dn D1 4 5 T3 4 -बन्धना; D2 °नै ( for °नम् ) D3 शैलैश्चालितबन्धना, M2 शैलाश्चलितबन्धना. —$^c$) Ñ3 D3 4 खेदाद्, T3 सैषा ( for खेद ) —$^d$) Ś1 K1 3 4 Dn धारयन्ती Ñ2 3 V3 भ्रमन्ती च, V2 भ्रमयन्ती, T3 4 भ्रमन्तीयं ( for दर्शयन्ती ) D5 T1 2 G2 3 5 M2 4 पुन पुन, G1 परस्परम् ( for मुहुर्मुहु ) D1–4 भ्रमतीय ( D1 °यन्ती ) पुन पुन.

20 $^c$) D1 नृपैश् ( for नृणां ) G1 नृणां च राष्ट्रे विस्तीर्णे —$^d$) K4 T3 [इ]य ( for [इ]व ) — After 20, T3 ins :

539* यच्चोक्तं ब्रह्मसदने ब्रह्मणा परमेष्ठिना ।
तच्छृणुष्व महाबाहो रहस्यमिदमुत्तमम् ॥

21 T2 om. 21–22 —$^a$) T1 कुले कुले, M4 लोके कुले ( for पुरे पुरे ) Ñ2 V3 च नृ-, M1 2 हि नृ ( for नर ). —$^b$) D3 नरैर् ( for बलैर् ) G1–3. 5 M1 2 युत- ( for वृत ). M3 असंख्येयबलैर्युतः — Ś1 om $21^c$–$22^b$.

22 Ś1 om $22^{ab}$, T2 om 22 ( for both, cf v. l 21 ) —$^a$) M1 3 भूमिपाल, M4 भूपानां च ( for भूमिपानां ). —$^b$) K2 Ñ2 B2 ( marg as in text ) D5 ( marg as in text ) वरै, K4 कुलै ( for बलै ) —$^c$) Ś1 B1 ग्रामायुताढ्य-राष्ट्रैश्च; D3 5 T1 M4 °युतैश्च ( D3 °तौघै ) राष्ट्रैश्च, T3 4 ग्रामैस्तथाढ्यै रा°. —$^d$) Ś1 K4 Dn D1 4 T4 निर्विवरा ( for °री ). K2 Ñ V1 2 B Ds D3 4 भूमिर्निर्वेदमागता, T1 G1–3. 5 M4 दीर्यतीव ( T1 M4 °ते च ) वसुंधरा, T3 भूमिपैश्च निपीडिता

23 $^a$) K2–4 Ñ V1 3 B Dn Ds D1 4 5 T G3 M4 निरामयं ( for °मिषं ) K1 भूत्वा ( for कृत्वा ) V2 D3 सेयं निरामयं ज्ञात्वा ( D3 दृष्ट्वा ) —$^b$) K2 B1 Dn D1 2 5 G3 M1 निश्चेष्टा, D3 निश्चल ( for निश्चेष्टं ) K1 निश्चेष्टा किल मेऽग्रत, Ñ2 V3 D4 T M4 °ष्टा कालमागता —$^c$) K2 Ñ2. 3 V1 2 B1 Ds तवालयं, B2 3 तमा° ( for ममा° ) T1 M4 कृष्ण ( for विष्णो ) —$^d$) D5 T1 M4 परमा ( for [अ]स्या· परा )

24 $^a$) K Ñ2 3 ( marg as in text ) V2 3 Dn D1–3 4 ( marg ) 5 T1 3 4 G2. 5 M4 मनुष्याणां, Ds2 इहस्थाने ( for °ना ) —$^b$) Ñ3 ( marg as in text ) व्यवस्थिता ( for व्यथां गता ) — G1 om $24^c$–$25^c$ —$^c$) K2 Ñ3 V1 2 B1 2 Ds कुर्याज्; Ñ1 2 V3 T2 G2 3 M कर्म ( for कार्यं ) T3 4 यथा न नश्यते देवा —$^d$) D1 जयति, G2 भजाति ( for जगति ) T3 तथा कुरु ( for हि शाश्वती )

25 G1 om $25^{abc}$ ( cf v l 24 ) Ñ1 reads 41 25–42. 10 after 42 28 —$^a$) Ś1 अस्यां वा, Ñ1 3 V D4. 5 तस्या हि, D1 यस्या हि, G2 अस्माभि ; M1–3 अस्याश्च, M4 यथा हि ( for अस्या हि ) —$^c$) D3 -लोपाश्च, G3 -लोपैश्च ( for लोपश्च ) Ñ1 B1 2 ( marg as in text ) 3 Ds भूताना ( for लोकाना ) —$^d$) Ś1 K1 3 G1 3 पीडितं ( for दूषितं ). G2 जगत्पते ( for °द्भवेत् ) T1 3 4 लोकाना दूषितं ( T3 °ष्यते ) जगत्.

26 For the sequence in Ñ1, cf v l 25 —$^a$) Ś1 शुष्यते; K1 4 Dn G1–3 M श्राम्यति ( for °ते ). K2 B1 2 ( marg as in text ) [ए]षा ( for [इ]यं ) —$^b$) V2 पार्थिवौघै, D1 पार्थिवैश्च ( for °वौघ- ) —$^c$) K3 D3 T1. 3 च, Ñ3 V1 G3 5 स्वां, T2 G1 M4 हि, G2 सा; M1–3 तां ( for या ) —$^d$) D2 ( *sup lin* as in text ) अबला ( for अचला ) Ñ2 भूमिर्निर्वेदमागता

भारावतरणार्थं हि मन्त्रयामस्त्वया सह ॥ २७
सत्पथे हि स्थिताः सर्वे राजानो राष्ट्रवर्धनाः ।
नराणां च त्रयो वर्णा ब्राह्मणाननुयायिनः ॥ २८
सर्वे सत्यमयं वाक्यं वर्णा धर्मपरास्तथा ।
सर्वे वेदपरा विप्राः सर्वे विप्रपरा नराः ॥ २९
एवं जगति वर्तन्ते मनुष्या धर्मकारणात् ।
यथा धर्मवधो न स्यात्तथा मन्त्रः प्रवर्तताम् ॥ ३०
सतां गतिरियं नान्या धर्मश्चास्याः सुमाधनम् ।
राज्ञां चैव वधः कार्यो धरण्या भारनिर्णये ॥ ३१
तदागच्छ महाभाग सह वै मन्त्रकारणात् ।
व्रजाम मेरुशिखरं पुरस्कृत्य वसुंधराम् ॥ ३२

इति श्रीहरिवंशे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

# ४२

वैशंपायन उवाच ।
बाढमित्येव सह तैर्दुर्दिनाम्भोदनिस्वनः ।
प्रतस्थे दुर्दिनाकारः सदुर्दिन इवाचलः ॥ १
समुक्तामणिविद्योतं सचन्द्राम्भोदवर्चसम् । C 2901 B I 52 2 P I 52 2

27 For the sequence in Ñ1, cf v l 25 —[a]) K2 Ñ3 V1 2 B1 2 Ds D4 यद् (for तद्) Ś1 K4 च, D4 स्म. (for स्म). T1 2 G1–3 5 M2 4 न (T2 G1 3 य) दस्या श्रुतमस्माभिस् —[b]) K3 D2 (sup lin as in text) तचापि, D3 तथैव (for तच्चापि) —[c]) Ś1 अंशावतरणार्थं हि —[d]) Ś1 K1 3 सह त्वया (by transp)

28 For the sequence in Ñ1, cf v l 25 —[a]) Ś1 च (for हि) K2 4 Ñ1 3 V Dn D1–5 T3 4 ह्येते (for सर्वे) —[c]) T3 4 नारायण (for नराणां च) Ñ2 V2 [ए]व ये (for त्रयो). —[d]) D3 ब्राह्मणस्य (for °णान्)

29 For the sequence in Ñ1, cf v l 25 —[a]) Ś1 K1. 3 B2 T1 3 सत्यपरं (for °मयं) —[b]) V1 -नयास् (for -परास्). K4 स्थिता (for तथा) —[d]) T1 M4 -परा नृपा, T2 4 G1 परायणा (for -परा नरा)

30 For the sequence in Ñ1, cf v l 25. T2 reads 30[c]–32[b] twice —[c]) K3 यत्र (for यथा) Ñ1 T1 G1–3 धर्मपरो; M2 4 °पथो (for °वधो) —[d]) K1 मन्त्रं, K2 4 Ñ3 (marg as in text) V3 B2 (marg) D1–3. 5 T3 4 नीति; G2 धर्मः (for मन्त्र) B Ds D4 G2 M1 2 4 प्रवर्त्यताम् Ś1 तथा नीतिर्विधीयताम्; Ñ2 V2 Dn तथा नीतिः प्रवर्त्यताम्

31 For the sequence in Ñ1, cf v l 25. For the repetition in T2, cf v l 30 —[a]) K2 सत्यं (for सतां). D2 सौम्या (for नान्या) —[b]) Ñ1 B3 Ds2 T1 2 (both times) G1–3 M4 तस्या, B1 2 Ds1 त्वस्याः, D4 T3. 4 तस्मात् (for चास्याः). K3 प्रवर्तनम्, T2 (both times) G1–3. 5 तु साधनम् (for सुमा°) Ś1 धर्मश्चास्यानुवर्धनम्; M1–3 °स्येय हि साधनम् —[d]) Ś1 D3 T2 (both times) G1 धरण्यां (for °ण्या) V1 वृत्तये (for निर्णये)

32 For the sequence in Ñ1, cf v l 25. For the repetition in T2, cf v l 30 —[b]) K4 स्वयं; T4 M4 सभां (for सह) V2 धर्म- (for मन्त्र). —[c]) K Ñ V B Ds D5 T3 4 G3 व्रजामो, T1 2 G1. 2 5 गच्छाम (for व्रजाम) D1–4 व्रजाम शिखरं मेरो —After 32, D2. 5 ins.

540* एतावदुक्त्वा राजेन्द्र ब्रह्मा लोकपितामह ।
पृथिव्या सह विश्वात्मा विरराम महाद्युतिः ॥
[(L 2) D2 प्रजापति (for महाद्युति°).]

COLOPHON om in D6 —*Mention of the Epic*: K3 Ñ2 Ds2 —*Mention of Khila*: Ś1 K3 4 Ñ2 3 V B Dn Ds D1–4 —*Sub-parvan*: K3 T4 आश्चर्यपर्व; D5 पारिजात —*Adhy name*: K1 2. 4 Ñ1. 3 V1 Dn D1–5 भारावतरणम्; Ñ2 V3 B Ds पितामहवाक्यम्, V2 भारावतरणे पितामहवाक्यम्. —*Adhy no* (figures, words or both): K3 V3 49, Ñ3 V1 Dn Ds2 51; V2 T3 52, D1 T1 G3 5 47; D3. 4 50; T2 G1 M4 46, T4 48; G2 44; M1–3 43 —*Śloka no*: K1 Dn Ds2 D3 4 T2 G1 32

## 42

☞ D6 om. this adhy. (cf v. l 39 1).

1 For the sequence in Ñ1, cf v. l 41 25. —[a]) Ś1 K1. 2 Ñ1 B1 2 M4 सहितैर्, V2 D1–3 5 स हरिर्; T2 G1 सहसा (for सह तैर्). —[b]) Ś1 K2 Ñ2 V1 B1 G2 M6

स जटामण्डलं कृष्णं बिभ्रत्कृष्णवपुर्हरिः ॥ २
स चास्योरसि विस्तीर्णे रोमाञ्चोद्गतराजिमान् ।
श्रीवत्सो राजते श्रीमान्स्तनद्वयमुखाश्रितः ॥ ३
पीते वसानो वसने लोकानां गुरुरव्ययः ।
हरिः सोऽभवदालक्ष्यः ससंध्याभ्र इवाचलः ॥ ४
तं व्रजन्तं सुपर्णेन पद्मयोनिगतानुगम् ।
अनुजग्मुः सुराः सर्वे तद्गतासक्तचक्षुषः ॥ ५
नातिदीर्घेण कालेन ते गता रत्नपर्वतम् ।
ददृशुर्देवतास्तत्र स्वां सभां कामरूपिणीम् ॥ ६
मेरोः शिखरविन्यस्तां संसक्तां सूर्यवर्चसा ।
काञ्चनस्तम्भचरणां वज्रसंघाततोरणाम् ॥ ७
मनोनिर्माणचित्राढ्यां विमानाकुलमालिनीम् ।
रत्नजालान्तरवतीं कामगां रत्नभूषिताम् ॥ ८
क्लृप्तरत्नसमाकीर्णां सर्वर्तुकुसुमोत्कटाम् ।
देवमायाधरां दिव्यां निर्मितां विश्वकर्मणा ॥ ९
तां हृष्टमनसः सर्वे यथास्थानं यथावयः ।
यथानिदेशं त्रिदशा विविशुस्ते सभां शुभाम् ॥ १०
ते निषेदुर्यथोक्तेषु विमानेष्वासनेषु च ।

-निस्वनै , Ñ1 °नम् ( for °न· ) —$^{d}$ ) Ñ3 G2. 3 M4 सु- ( for स- ) Ñ1 [अ]भवत् ( for [अ]चलः )

2 For the sequence in Ñ1, cf v 1 1 —$^{a}$ ) Ñ1 -विद्योतः ( for °तं ) —$^{b}$ ) Ś1 -चन्द्राम्बुद- ( for °म्भोद- ) B1 -निस्वनम् ( for -वर्चसम् ). —$^{c}$ ) T2 G1 5 M1 2 प्रभा- ( for जटा- ) K2 Ñ V B Dn Ds T1 3 4 M4 कृत्स्नं , D1–5 चित्रं ; T2 G कृष्णो ( for कृष्णं ) —$^{d}$ ) S1 कृष्ण ( for कृष्ण- ). K2 Ñ1 2, 3 ( marg as in text ) V2 3 Dn Ds T3 4 स बिभ्रच्छ्रीधरो हरिः.

3 For the sequence in Ñ1, cf v 1 1 —$^{a}$ ) V3 चास्योपरि ; G2 वै चोरसि ( for चास्यो° ) T3 स चोरसि सुविस्तीर्णे —$^{b}$ ) K2 3 D2 3 G1 2 4 5 M4 रोमाञ्चोद्गम- ( K2, 3 D3 °ति )राजिमान् —$^{c}$ ) Ś1 ऽराजत , K1 3 4 Dn D1. 3 राजति , D2 भ्राजति ( for राजते ) —$^{d}$ ) Ś1 -मुखोदित , K1 3 D2 -मुखोचितः , K2 T1 2 G1 3 5 M4 -मुखान्वित- , Ñ3 V1 °चित. ( for °श्रित· ) K4 तस्यैव हृदयोचित .

4 For the sequence in Ñ1, cf v 1 1 Ś1 om 4. —$^{c}$ ) T3. 4 लक्ष्म्या युक्तस्तदाभाति —$^{d}$ ) T4 सचन्द्राभ ( for ससंध्याभ्र ). G3 [अं]शुमान् ( for [अ]चलः ).

5 For the sequence in Ñ1, cf v 1 1 —$^{a}$ ) T1 2 G M1 3. 4 ते ( for तं ) —$^{b}$ ) V2 -योनिं , G2 M -योनेर् ( for -योनि- ) Ś1 -सहानुगम् ; D3 -मुखास्तदा ( for -गतानुगम् ) —$^{c}$ ) K2. 4 Ñ2 3 V B2 ( marg ) Dn D1–5 T4 सुरगणास् ( for सुरा. सर्वे ) —$^{d}$ ) Ś1 -मानसाः , K1 3 -चेतस· ( for -चक्षुषः ). K4 तद्रूपासक्तचक्षुष ; T2 G1. 3–5 M4 तत्पदा° ; T3 M1–3 तस्मिन्ना° ; G2 तत्समा°.

6 For the sequence in Ñ1, cf v. 1 1. —$^{b}$ ) K1 3 T1 संप्राप्ता ; K2 Ñ V B Ds D1–5 T2. 3 G M4 ते गत्वा , K4 Dn गत्वा ते ( for ते गता ) —$^{d}$ ) Ñ1 D3. 5 T1 तां ( for स्वां )

7 For the sequence in Ñ1, cf. v. 1. 1. —$^{a}$ ) D3 शिरसि ( for शिखर- ) G2 -विस्तार- , M4 -सन्यस्तां ( for -वि° ) —$^{b}$ ) K2 Ñ2 V3 B2 G3 संयुक्तां , T2 G1 सुवर्णां ; G4 मेरुणा ( for संसक्तां ) G2 -वर्चसम् ( for °सा ) — After $7^{ab}$, Ds1 reads $9^{c}$–$11^{b}$ —$^{c}$ ) K1 -चरितां , K2–4 Ñ V B D ( D6 om ) T1 3 4 M4 -रचिता ( for -चरणा ) —$^{d}$ ) Ñ1 3 ( marg ) Dn T2 G M1–3 -सधान- , V1 3 संस्थान- , V2 -संतान ; some Mss वैडूर्य- ( for -संघात ) T1 M4 रत्नसंधानतोरणम्

8 For the sequence in Ñ1, cf v 1 1 —$^{a}$ ) D1 -निर्वाण- , M3 -संधान ( for -निर्माण- ) —$^{b}$ ) K Ñ V B Dn Ds D2–5 T1 2 4 G4 M1 2 4 विमानशतमा( Ñ2 V °शतशा- , T1 M1 2 4 °कुलमा )लिनीम् , D1 °नशतसकुलाम् —$^{d}$ ) M1 3 भूषणाम् ( for -भूषिताम् )

9 For the sequence in Ñ1, cf v 1 1 —$^{a}$ ) K2 गुप्त- , Ñ3 V1 2 B1 2 Ds कुप्य , D1 2 T3 दीप्त- , D3 दृष्ट्वा , G4 क्षिप्त- ; M1–3 नाना- ( for क्लृप्त- ). —$^{b}$ ) K2 सर्वर्तुकुसुमाकराम् , K3 °मोत्कराम् — D2 ins after $9^{ab}$ D5 after 9

541* मणिप्रवालसोपानां वैडूर्यमणिशोभिताम् ।
मुक्ताजालसमाकीर्णां किंकिणीशतशोभिताम् ॥
[ D5 om line 2 ]

— Ds1 reads $9^{c}$–$11^{b}$ after $7^{ab}$ —$^{c}$ ) K1 दिव्य- ( for देव- ) Ñ2 V2 -मायाधरीं ; T1 M4 मालाधरां ; G4 -मायां सभां ( for -मायाधरां ) —$^{d}$ ) K1 3 Ds2 D4 T1 2 G M विहितां ( for निर्मितां ).

10 For the sequence in Ñ1, cf v 1 1, and for that in Ds1, cf v 1 9 —$^{a}$ ) Ś1 K3 4 ते , T2 G सं- ( for तां ) —$^{b}$ ) K Ñ V B Dn D1–5 यथाविधि , Ds यथा दिवि ( for यथावय· ) —$^{c}$ ) K2 Ñ V B1 3 D ( D6 om ) M4 -निवेशं ( for -निदेश ) T3 विविशुस ( for त्रिदशा ) T2 G1–3 5 यथार्हदेश त्रिदशा ; G4 यथार्हवेशं त्रि°. —$^{d}$ ) Ś1 B1 तां ( for ते ). B3 D2–4 T2 G1 3–5 शुभां सभाम् ( by transp ), T4 सभां शुभाः. K1. 3 विविशुस्तां शुभां सभाम् ; T3 त्रिदशास्ते

भद्रासनेषु पीठेषु कुथास्वास्तरणेषु च ॥ ११
ततः प्रभञ्जनो वायुर्ब्रह्मणा साधु चोदितः ।
मा शब्द इति सर्वत्र प्रचक्राम सभां शुभाम् ॥ १२
निःशब्दे स्तिमिते तस्मिन्समाजे त्रिदिवौकसाम् ।
बभाषे धरणी वाक्यं खेदात्करुणभाषिणी ॥ १३
अहमादौ पुरानेन संक्षिप्ता पद्मयोनिना ।
मां च बध्वा कृतौ पूर्वं मृण्मयौ द्वौ महासुरौ ॥ १४
कर्णस्रोतोद्भवौ तौ हि विष्णोरस्य महात्मनः ।
महार्णवे प्रस्वपतः काष्ठकुड्यसमौ स्थितौ ॥ १५
तौ विवेश स्वयं वायुर्ब्रह्मणा साधु चोदितः ।
तौ दिवं छादयन्तौ तु वव्रधाते महासुरौ ॥ १६
वायुप्राणौ तु तौ गृह्य ब्रह्मा परिमृशञ्शनैः । C 2923 B I 52 24 P I. 52. 24

शुभा सुखम्.

11 For the sequence in Ds1 (cf v 1 9) — [ab]) B3 विमानेषु यथोक्तेषु (by transp) — [c]) D1 रम्येषु (for पीठेषु) K4 सभासनेषु पीठेषु, M2 सिंहासनेषु शुभ्रेषु — [d]) Ñ2 V3 कुथेषु, D3 5 T3 4 M4 कुशेषु (for कुथासु) T2 G1 3-5 कुशाद्यास्तरणेषु च (T2 G1 °णादिषु)

12 [a]) Ś1 तथा (for ततः) — [b]) S1 T2 G परि- (for साधु) K1 3 D1 3 4 नोदित, Ñ3 (marg as in text) देशितः (for चोदित) — [c]) Ś1 K1 4 Ñ1 2 V3 B Dn Ds2 D4 5 T3 4 G5 मा शब्दम्, K3 अशब्दम् (for मा शब्द) — [d]) M1 3 चचाराथ (for प्रचक्राम) K Ñ V B1 2 (marg as in text) 3 Dn Ds D1-4 5 (*sup lin*) T1 3 4 [अ]थ तां सभाम् (for सभा शुभाम्) T2 G M2 4 परिचक्राम तां सभाम्

13 [a]) N (except Ś1 Dn1 D2 3, D6 om) T G1 2 4 5 M4 निःशब्द- (for °ब्दे) S1 राजन् (for तस्मिन्) — [b]) Ś1 (*sup lin*) सभाया (for समाजे) — [c]) T1 G3 5 M4 पृथिवी, T2 G1 2 करुणं (for धरणी) — [d]) Ñ1 मधुर (for करुण-). — K1 3 Ñ2 3 V B2 Dn D2 3 5 (marg.) T3 ins after 13 B1 after 34[ab]

542* धरण्युवाच ।
त्वया धार्या त्विह देव त्वया वै धार्यते जगत् ।
त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ॥
यत्त्वया धार्यते किंचित्तेजसा च बलेन च ।
ततस्तव प्रसादेन मया पश्चात्तु धार्यते ॥
त्वया धृतं धारयामि नाधृतं धारयाम्यहम् । [5]
न हि तद्विद्यते भूतं यत्त्वया नानुधार्यते ॥
त्वमेव कुरुषे देव नारायण युगे युगे ।
महाभारावतरणं जगतो हितकाम्यया ॥
तवैव तेजसा क्रान्ता रसातलतलं गताम् ।
त्रायस्व मां सुरश्रेष्ठ तवैव शरणं गताम् । [10]
दानवैः पीड्यमानाहं राक्षसैश्च दुरात्मभिः ।
त्वामेव शरणं नित्यमुपयास्ये सनातनम् ॥
तावन्मेऽस्ति भयं भूयो यावन्न त्वां ककुद्मिनम् ।
शरणं यामि मनसा शतशो ह्युपलक्षये ॥

[(L 1) Ñ2 V2 B2 D2. 5 हि (for तु). — (L 2) V2 D2. 5 भुवनानि (for °नं त्वं). K1 3 यत् (for च). — (L 4) Bom and Poona eds. यत्नाच्च (for पश्चात्तु). — (L 6) V2 तु न, B1 न तु, Dn नात्र (for नानु-). — (L 7) V2 B1 वीर, D3 धीर (for देव). K1. 3 त्वमेव पुरुषो धीर (for [a]). — (L 8) B1 Dn मम (for महा-) K3 जातोऽसि (for जगतो) — (L 9) K1 3 Ñ3 V क्रान्ता (for क्रान्ता) K1 3 Ñ2 3 V B1 गता (for गताम्) — (L 10) B1 Dn D5 (*inf lin* as above) त्वाम् (for तव) K1 3 Ñ2 B1 Dn1 गता (for गताम्) — (L 12) D3 अद्य (for त्वाम्). D5 उपास्येऽहं (for उपयास्ये). — V1 3 om lines 13–14. — (L 13) K1 3 D2 तावतो, Ñ2 °च्च (for °न्मे). —(L 14) Ñ2 शतशोऽप्युपलक्षणै, V2 °शोऽथ सहस्रशः, B1 °शो दृष्ट-विक्रमम् (for°[b]). ]

14 Before 14, Ś1 ins. पृथिव्युवाच, K2 4 Ñ1 B3 Ds2 D1 T1 3 M4 धरण्यु°, T2 G1 भूम्युरु°. — [a]) Ś1 K2. 4 Ñ V B Dn D1 2 T3 पुराणस्य, K1 3 T1 2 4 G M3. 4 °णेन; D5 °णेऽस्य (for °नेन) D3 अहमेव पुरा ह्यस्य. — [b]) T2 G1. 2 5 M निर्मिता (for संक्षिप्ता) T4 धर्म- (for पद्म-). — [c]) K1 Ñ2 मा च हृत्वा, K2 V2 3 B Ds T2 3 G1 4. 5 मां च कृत्वा, D4 G3 मावरुन्धा (sic) (for मां च बध्वा). T4 मा च कृत्वा पूर्वमद्य. — [d]) T1 M4 अव्ययौ; some Mss. मृन्मयौ (for मृण्मयौ) M3 तौ (for द्वौ).

15 [a]) K1 3 -श्रोत्रे भवौ; K4 V1. 2 D1. 4 -श्रोत्रोद्भवौ; D5 (marg as in text) -तेजोभवौ; T2 G1 M3 -स्रोतोभवौ (for °द्भवौ) B1 द्वौ हि; T1 G4 M4 दैत्यौ; G2 भूतौ (for तौ हि) — [c]) M3 एकार्णवे (for महा°). K3 Ñ2 D3 प्रसुप्तस्य (for प्रस्वपत) — [d]) Ś1 G3 -कुड्योपमौ; K1 (*sup. lin* as in text). 3 -कुड्यासनौ, K2 -कुड्यमयौ (for °समौ).

16 [a]) Ñ2 (marg. as in text) V1 T2 तं; D3 प्र-; (for तौ) — [b]) Ś1 B2 (marg.) T1 2 G M4 परि- (for साधु) K3 D3. 4 नोदितः; Ñ3 (marg as in text) देशितः (for चोदित.). — [c]) Ś1 K1 3 4 दिवं प्र-, T2 ताविह (for तौ दिवं). K3 तौ, B3 T2 G1 2. 4. 5 हि; M1. 3 च (for तु).

17 [a]) V2 स- (for तौ). — [b]) D5 (marg. as in text) जघ्नतु (for ब्रह्मा). K4 पर्यस्पृशच्च; V2 Dn D5

एकं मृदुतरं मेने कठिनं वेद चापरम् ॥ १७
नामनी तु तयोश्चक्रे स विभुः सलिलोद्भवः ।
मृदुस्त्वयं मधुर्नाम कठिनः कैटभोऽभवत् ॥ १८
तौ दैत्यौ कृतनामानौ चेरतुर्बलदर्पितौ ।
सर्वमेकार्णवं लोकं योद्धुकामौ सुनिर्भयौ ॥ १९
तावागतौ समालोक्य ब्रह्मा लोकपितामहः ।
एकार्णवाम्बुनिचये तत्रैवान्तरधीयत ॥ २०
स पद्मे पद्मनाभस्य नाभिमध्यात्समुत्थिते ।
रोचयामास वसतिं गुह्यां ब्रह्मा चतुर्मुखः ॥ २१
तावुभौ जलगर्भस्थौ नारायणपितामहौ ।
बहून्वर्षगणानप्सु शयानौ न चकम्पतुः ॥ २२
अथ दीर्घस्य कालस्य तावुभौ मधुकैटभौ ।
आजग्मतुस्तमुद्देशं यत्र ब्रह्मा व्यवस्थितः ॥ २३
दृष्ट्वा तावसुरौ घोरौ महान्तौ युद्धदुर्मदौ ।
उत्पपाताशु शयनात्पद्मनाभो महाद्युतिः ॥ २४
तद्युद्धमभवद्घोरं तयोस्तस्य च वै तदा ।
एकार्णवे तदा लोके त्रैलोक्ये जलतां गते ॥ २५
तदभूत्तुमुलं युद्धं वर्षसंख्याः सहस्रशः ।
न च तावसुरौ युद्धे तदा श्रममवापतुः ॥ २६
अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्मदौ ।
ऊचतुः प्रीतमनसौ देवं नारायणं हरिम् ॥ २७
प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युराहवे ।
आवां जहि न यत्रोर्वी जलेन समभिप्लुता ॥ २८
हतौ च तव पुत्रत्वं प्राप्नुयावः सुरोत्तम ।

---

पर्यमृशच् ( for परिमृशन् ) Ś1 शिशु , K1 T4 करे ( for शनैः ) T3 ब्रह्मा पर्यमृशत्करै — c ) Ds मृदुमयं, D2 °तमं ( for °तरं ) Ñ1 3 मन्ये ( for मेने ) — d ) S1 चैव ( for वेद ). G2 -पारगम् ( for चापरम् )

18 a ) G1 नामानि ( for नामनी ) Ś1 च ( for तु ) T4 तदा ( for तयोश् ) — c ) G1 स्वयं ( for त्वयं ). — d ) M1. 2 त्वयम् ( for ऽभवत् ).

19 b ) K2 4 Ñ2 3 ( marg as in text ) V2 Dn D1 2 T1 2 G1 2 4 5 M -गर्वितौ ( for -दर्पितौ ) Ñ1 चेरतुस्तौ महाबलौ. — c ) Ś1 K2 Ñ3 V1 2 D1–3 5 T4 घोरं ( for लोकं ) — d ) K2 युद्धकामौ ( for योद्धु° ) Ś1 K1 3 D4 T3. 4 सुदुर्जयौ, T1. 2 G M व्यवस्थितौ ( for सुनिर्भयौ )

20 c ) M4 एकाम्बुदार्णनिचये.

21 b ) B2 ( marg ) T1. 2 G1–3 5 M2 -देशात् ( for -मध्यात् ) Ñ2 समुत्थित· ( for °ते ) — d ) M4 गुह्ये ( for गुह्यां ) G2. 3. 5 पितामह ( for चतुर्मुखः ). G4 ब्रह्मा लोकपितामह

22 a ) Ñ V1 -गर्भगौ ( for -गर्भस्थौ ). — c ) Ś1 बहून्यब्दशतान्यप्सु , Ñ1 T1 2 G1 2. 4 M2 4 बहुवर्षायुतान्यप्सु , G3. 5 M1. 3 बहुवर्षयु( G3 °श )तान्यप्सु — d ) G3 शयानौ तौ न कम्पतु. ( sic )

23 K3 T2 G1. 4 om ( hapl ) 23–26. — a ) G2 अति ( for अथ ) K4 कालेन ( for कालस्य ) — c ) K1 D1 T1 G3. 5 समु( G3 स त )द्देशं ; K2 तदु° ( for तमु° ) — d ) D1 समुत्थितः , M3 चतुर्मुखः ( for व्यवस्थितः )

24 K3 T2 G1 4 om 24 ( cf v l 23 ) — b ) M3 बृहन्तौ ( for महान्तौ ) N ( except Ś1 , K3 D6 om ) T3 4 महाकायौ ( B3 °सत्त्वौ ) दुरासदौ — After 24ab, K2 Ñ2 3 V B Dn Ds D2 5 ins.:

543* ब्रह्मणा ताडितो विष्णु पद्मनालेन वै पुरा ।

[ Ñ2 V3 चोदितो ( for ताडितो ). K2 V2 B3 Dn D2 तदा ( for पुरा ) V3 Ds2 पद्मनाभेन वै पुरा , D2 °नाले तु वै पुरा ( for b ) ]

— c ) K1 B2 3 D3 T3. 4 [अ]थ , D4 [आ]त्म- , T1 G2 3 5 M1 2 4 [अ]म्बु ( for [आ]शु- ) M3 उत्पपाताम्बुनिचयात्

25 K3 T2 G1 4 om. 25 ( cf v l 23 ) K2 om. 25ab. — a ) G2 तत समभवद्युद्धं — b ) B1 वै पुरा ; T1 G2 3 5 M2 (*inf lin.*) 4 धीमत ( for वै तदा ) — c ) K4 D1–3 5 घोरे ( for लोके ). — d ) Ñ2 V3 त्रैलोक्ये जलसंवृते.

26 K3 T2 G1 4 om 26 ( cf v l 23 ) — a ) K2 Ñ1 2 V2 B G2 M3 तदाभूत् , Ñ3 V1 बभूव ( for तदभूत् ). M1 3 तदद्भुतमभूद्युद्धं

27 a ) Bom and Poona eds [अ]तो दीर्घ- ( for दीर्घस्य ) — c ) V2 Ds प्रीति- ( for प्रीत- ) K3 ऊचतु परमप्रीतौ. — d ) Ñ1 B Ds प्रभुम् ( for हरिम् )

28 a ) G2 देवेन्द्र ( for युद्धेन ) — b ) N ( except Ś1 ; D6 om ) T3 4 G4 M2 4 आवयो ( for आहवे ) . — d ) K Ñ2 3 ( marg ) V B D ( D6 om. ) T3 4 M3 4 सलिलेन परिप्लुता — After 28, Ñ1 reads 41 25–42 10

29 a ) T4 निहतौ ( for हतौ च ). — d ) Ś1 G5 सहितौ ;

यो ह्यात्रां युधि निर्जेता तस्यावां विहितौ सुतौ ॥ २९
स हि गृह्य मृधे दैत्यौ दोर्भ्यां तौ समपीडयत् ।
जग्मतुर्निधनं चापि तावुभौ मधुकैटभौ ॥ ३०
तावुभावाप्लुतौ तोये वपुर्भ्यामेकतां गतौ ।
मेदो मुमुचतुर्दैत्यौ मथ्यमानौ जलोर्मिभिः ॥ ३१
मेदसा तज्जलं व्याप्तं ताभ्यामन्तर्दधे तदा ।
नारायणश्च भगवानसृजत्स पुनः प्रजाः ॥ ३२
दैत्ययोर्मेदसा छन्ना मेदिनीति ततः स्मृता ।
प्रभावात्पद्मनाभस्य शाश्वती च नृणां कृता ॥ ३३
वराहेण पुनर्भूत्वा मार्कण्डेयस्य पश्यतः ।
विषाणेनाहमेकेन तोयमध्यात्समुद्धृता ॥ ३४
हृताहं क्रमता भूयस्तदा युष्माकमग्रतः ।
बलेः सकाशाद्दैत्यस्य विष्णुना प्रभविष्णुना ॥ ३५
सांप्रतं खिद्यमानाहमेनमेव गदाधरम् ।
अनाथा जगतो नाथं शरण्यं शरणं गता ॥ ३६
अग्निः सुवर्णस्य गुरुर्गवां सूर्यो गुरुः स्मृतः ।
नक्षत्राणां गुरुः सोमो मम नारायणो गुरुः ॥ ३७
यदहं धारयाम्येका जगत्स्थावरजंगमम् ।
मया धृतं धारयते सर्वमेतद्गदाधरः ॥ ३८
जामदग्न्येन रामेण भारावतरणेप्सया ।
रोषात्त्रिःसप्तकृत्वोऽहं क्षत्रियैर्विप्रयोजिता ॥ ३९
सास्मि वेद्यां समारोप्य तर्पिता नृपशोणितैः ।
भार्गवेण पितुः श्राद्धे कश्यपाय निवेदिता ॥ ४०
मांसमेदोस्थिदुर्गन्धा दिग्धा क्षत्रियशोणितैः ।
रजस्वलेव युवतिः कश्यपं समुपस्थिता ॥ ४१
स मां ब्रह्मर्षिरप्याह किमुर्वि त्वमवाङ्मुखी ।　　C 2948 B I 52 39 P I 52 39

$G_4$ विद्धि तौ ( for विहितौ ).

30 $T_3$ om 30 —$^{a}$) $K_{1\ 3.4}$ Ñ V B D ( $D_6$ om ) $T_4$ दोर्भ्यां ( for दैत्यौ ). —$^{b}$) $K_4$ $B_{2\ 3}$ Dn दैत्यौ ( for दोर्भ्यां ) $K_{1-3}$ N V $B_1$ Ds $D_{1-5}$ $T_4$ दैत्यौ ( $K_2$ विष्णु ) समभिपीडयत्. —$^{c}$) $K_2$ $T_{2\ 4}$ G $M_{2\ 4}$ [ए]व ( for [अ]पि )

31 $^{a}$) $K_{1\ 3\ 4}$ Ñ V $B_{2.3}$ Ds $D_{1-4}$ $T_{3\ 4}$ $G_4$ $M_1$ हतौ च ( $M_1$ वा ), $K_2$ Dn $T_1$ $G_{2.3\ 5}$ $M_4$ तौ हताव्, $B_1$ निहतौ च; $T_2$ $G_1$ तौ गताव्; $M_3$ हत्वा वा ( for तावुभाव् ) $D_5$ तौ हतौ चासुरौ तोये —$^{d}$) $D_1$ मज्जमानौ ( for मथ्य° )

32 $^{a}$) Ś$_1$ मेदसस् ( for °सा ) —$^{b}$) K Ñ $V_{1\ 2}$ B Ds $D_{1-5}$ $T_3$ तत ; $V_3$ $T_4$ ऽनघ ; Dn ऽनघ ( for तदा ) —$^{c}$) Ś$_1$ $K_4$ Ñ$_3$ $V_1$ $G_1$ स ( for च ) —$^{d}$) $V_1$ च ( for स ) $T_{1.2}$ G M विविधा ( for स पुन. ) S$_1$ प्रजा पुन. ( by transp ) $D_4$ सिसृक्षुश्च पुन. प्रजा .

33 $^{b}$) K Ñ $V_{2.3}$ Dn $D_{1-5}$ $T_{3\ 4}$ परिश्रुता ( for ततः स्मृता ) —$^{d}$) K Ñ$_{2\ 3}$ V B Dn Ds $D_{1-3}$ T $G_{1\ 3-5}$ $M_4$ जगती ( for च नृणां ) Ś$_1$ शाश्वतीति कृता नृणाम्, $D_5$ °ती जगती स्थिता, $G_3$ शाश्वती चक्रिणाङ्किता.

34 $^{a}$) $K_3$ Dn $T_2$ $G_{1\ 3-5}$ $M_2$ वाराहेण ( for व° ) Ñ$_1$ $V_3$ $B_2$ Ds $D_{1-5}$ $M_4$ पुरा ( for पुनर् ). S$_1$ कृता वराहेण पुरा, $K_1$ $V_1$ $B_{1.3}$ $T_{1\ 3}$ $G_2$ वाराहेण पुरा भूत्वा, $K_4$ वराहं च वपु. कृत्वा ; $T_4$ वराहवपुषा भूत्वा —$^{b}$) $T_4$ धीमतः ( for पश्यत ). — After 34$^{ab}$, $B_1$ ins 542*

35 $^{a}$) $K_2$ Ñ$_1$ धृता, $V_2$ Dn $D_3$ कृता, Ds वृता ( for हृता )

36 $^{a}$) $D_4$ संप्राप्ता ( for साप्रतं ) $K_2$ सीदमाना; $G_5$ $M_{1\ 3}$ क्लिश्य° ( for खिद्य° ) $G_1$ साप्रत क्लिश्यमाना सा. —$^{b}$) $K_1$ इममेव, $K_3$ तमेकं च, $K_4$ Ñ V $B_{1\ 2}$ $D_{1\ 2\ 4\ 5}$ $T_{3\ 4}$ एतमेव; $D_3$ इति चैन ( for एनमेव ) —$^{c}$) $T_2$ $G_{3-5}$ मन्नाथं ( for अनाथा ) Ś$_1$ $T_1$ $M_4$ मन्नाथं जगतां नाथं —$^{d}$) $D_2$ $G_{2\ 3\ 5}$ $M_4$ शरण्य ( $D_2$ °णं ) शरणागता.

37 $^{b}$) $V_3$ गुरु स्थित., $T_2$ G $M_4$ प( $T_2$ व )रो गुरु. ( for गुरु स्मृत. )

38 $^{a}$) $D_1$ $G_4$ यदा ( for यद् ) $K_3$ [ए]कं, $D_4$ [ए]षा ( for [ए]का ) $T_{3\ 4}$ अहं जगद्धारयामि. —$^{b}$) $T_{3\ 4}$ सर्वं ( for जगत् ) —$^{c}$) $M_3$ यया ( for मया ). $K_3$ धृते, $D_3$ वृतं, $G_2$ भृतं ( for धृतं ) Ś$_1$ धारयति ( for °ते ) —$^{d}$) Ñ$_2$ $G_3$ एव ; $M_2$ ( *sup lin* as in text ) तद्धि ( for एतद् )

39 $^{b}$) Ñ$_2$ $V_3$ $B_{1\ 2}$ $D_5$ $T_{1-3}$ $G_{2.5}$ भारावतरणेच्छया ; $G_3$ $M_1$ °पहरणेच्छ( $M_1$ °प्स )या —$^{c}$) $M_4$ रुषा ( for रोषात् )

40 $D_3$ om ( ? hapl ) 40 —$^{a}$) $T_2$ वेदीं, $G_{1-3\ 5}$ M वेदिं ( for वेद्यां ) Ñ$_2$ समानाय्य ( for °रोप्य ). — $G_3$ om ( hapl. ) 40$^{c}$–41$^{b}$ —$^{c}$) $T_1$ $M_4$ पितृ ( for पितु. ). —$^{d}$) Some Mss. काश्यपाय ( for क° )

41 $G_3$ om 41$^{ab}$ ( cf v l 40 ) —$^{a}$) Ñ$_1$ -दुर्गन्धैर्, $D_4$ °न्धाद् ( for °न्धा ). —$^{b}$) $B_1$ om , $G_2$ कृता ( for दिग्धा ) —$^{c}$) $D_3$ $T_2$ च, $G_5$ [इ]ति ( for [इ]व ), $K_3$ Ñ$_1$

वीरपत्नीव्रतमिदं वीरपत्नि निषेवसे ॥ ४२
साहं विज्ञापितवती कश्यपं लोकभावनम् ।
पतयो मे हता ब्रह्मन्भार्गवेण महात्मना ॥ ४३
साहं विहीना विक्रान्तैः क्षत्रियैः शस्त्रवृत्तिभिः ।
विधवा शून्यनगरा न धारयितुमुत्सहे ॥ ४४
तन्मह्यं दीयतां भर्ता भगवंस्त्वत्समो नृपः ।
रक्षेत्सग्रामनगरां यो मां सागरमालिनीम् ॥ ४५
स श्रुत्वा भगवान्वाक्यं बाढमित्यब्रवीत्प्रभुः ।
ततो मां मानवेन्द्राय मनवे संप्रयच्छत ॥ ४६
सा मनुप्रभवं पुण्यं प्राप्येक्ष्वाकुकुलं महत् ।
विपुलेनास्मि कालेन पार्थिवात्पार्थिवं गता ॥ ४७
एवं दत्तास्मि मनवे मानवेन्द्राय धीमते ।
भुक्ता राजकुलैश्चापि महर्षिकुलसंमितैः ॥ ४८
बहवः क्षत्रियाः शूरा मां जित्वा दिवमाश्रिताः ।
ते स्म कालवशं प्राप्य मय्येव प्रलयं गताः ॥ ४९
मत्कृते विग्रहा लोके वृत्ता वर्तन्त एव च ।
क्षत्रियाणां बलवतां संग्रामेष्वनिवर्तिनाम् ॥ ५०
एतद्युष्मत्प्रवृत्तेन दैवेन परिणामिता ।
जगद्धितार्थं कुरुत राज्ञां हेतुं रणक्षये ॥ ५१
यद्यस्ति मयि कारुण्यं भारशैथिल्यकारणात् ।

---

V3 युवती ( for °ति ) — K3 om ( hapl ) $41^d$–$43^a$ — d) B2 ( marg ) Ds प्रत्युप- ( for समुप- )

42 K3 om 42 ( cf v l 41 ) — b) T1 G5 समुद्विग्नाम् ( for किमुर्वि त्वम् ). K4 Dn पराङ्मुखी ( for अवा° ) K2 किमु वै त्वमधोमुखी; T2 G1–4 M2–4 समुद्विग्नामवाङ्मु- ( M2 °धोमु )खीम्, M1 किं मे त्वं हि पराङ्मुखी — d) T2 चारयन्ती ( for वीरपत्नि ) K1 4 Ñ1 Dn D1–3 T1 3 4 M4 धा( T4 M4 चा )रयन्ती निषीदसि ( T1 °ति ); K2 Ñ2 3 V B1 2 ( marg as in text ) Ds1 ( marg ) D4 5 चारयन्ती विषीदसि

43 K3 om $43^a$ ( cf v l 41 ) — a) D4 सा हि, T1 अहं ( for साह ) — b) T4 G1 4 -पावनम् ( for -भा° ) — c) T2 G4 महा- ( for हता )

44 a) G1–3 5 विनापि ( for विहीना ) — b) Ś1 M2 सत्त्व-, K2 शिशु-; G2 सत्य- ( for शस्त्र- ) B2 -पालिभि , D4 -वर्तिभि. ( for -वृत्तिभि ) M1 3 पतिभि सत्त्ववृत्तिभि.

45 a) T3 ब्रह्मन् ( for भर्ता ) — d) K3 D1 -शालिनीम्, T1, 2 G M मेखलाम् ( for -मालिनीम् ).

46 b) Ñ2 वच., D4 पुन. ( for प्रभु ) — d) T2 G -यच्छति ( for °त ) K Ñ2 3 V B D ( D6 om ) T3, 4 मनवे संप्र( K4 Dn D2–4 स प्र )दत्तवान्, T1 M4 °वे समयच्छत

47 a) K1 3 4 B2 Dn T1 दिव्यं; Ñ3 ( marg ) V1 वंशं ( for पुण्यं ) — b) S1 -कुले महत्; K1 -कुलोद्भवम्, K4 Dn -कुलं नृपम् ( for -कुलं महत् ). — d) T2 G1, 3–5 पार्थिवान्प्राप्य निर्वृ( G3 °र्हं )ता

48 a) T4 om, G3 रामेण ( for मनवे ) — c) K Ñ V B D ( D6 om. ) T3, 4 G4 सहस्रैश्च ( Ñ2 V3 B3 Ds D5 °स्तु ), T1 2 G1–3 5 M2 कुलैश्चैव, M4 °श्चाहं ( for °श्चापि ). — d) S1 K2 Ñ2 3 V B Ds T3 4 -संभवैः, Dn G1 -संमतै ( for -संमितै. ).

49 K3 D1 not collated — a) T3 4 बभूवु ( for बहवः ) M1 पार्थिवा ( for क्षत्रिया ) — b) K2 मा भुक्त्वा, Ñ2 D5 मा हित्वा, B1 जित्वा मा ( by transp ) Ś1 Ds2 T1, 3 4 आस्थिता ( for आश्रिता ) — c) K1 तस्मात्, T3, 4 तेऽपि ( for ते स्म ) B2 ( marg ) T4 M4 प्राप्ता ( for प्राप्य ). — d) K4 T1 G1–4 M निधनं ( for प्रलयं )

50 a) K1 D3 विग्रहो ( for °हा ) M1 नैके ( for लोके ). — b) K1 D3 T3 वृत्तो ( for वृत्ता ) Ś1 वा ( for च ). Ñ1 निर्वृत्ता वर्तयन्ति च

51 a) K1 3 M1 एवं ( for एतद् ) Ś1 प्रवृद्धेन ( for °त्तेन ) — b) K1 2 4 Ñ2 3 V1, 3 Dn D1–5 T3 4 G2 दैवेन परिणाम्यते ( G2 °ताम् ), Ñ1 B3 Ds T1 °न परिपाल्यताम् ( Ñ1 T1 °ते ), B1 °न परिशाम्यता — c) Ś1 K3 D5 कुरुते, K1 कुर्वन्तु, T2 3 G कुरुता ( for °त ) — d) Ñ2 V1 बल- ( for रण- ) T1 M4 राज्ञां नाशमसङ्गिनाम; T2 G M2 राजक्ष( M2 °ज्ञा क्ष )क्षयमनुत्तमम्, M1 3 राज्ञां नाशाय संगरम्

52 b) G2 -कारणम् ( for °णात् ) — c) K1 3 M1, 2 एष ( for एकश् ) G2 देव ( for श्रीमान् ) — d) T2 प्रयच्छ तत् ( for °च्छतु )

53 a) Ś1 B1 D5 यद्, Ñ2 T4 यदि, B3 मम ( for यम् ) — b) K Ñ V1 2 B D ( D6 om ) T1 3 4 M1 3 4 संप्राप्ता शरणार्थिनी — c) Ñ1 ( marg as in text ) B1 -रोप्यो मे ( for -रोसव्यो ) M4 भारो यद्यपरो वाच्यो — d) T2 G1 M1 एव ( for एष ). V2 मे ( for माम् ). — After 53, V3 T4 ins. :

एकश्चक्रधरः श्रीमानभयं मे प्रयच्छतु ॥ ५२
यमहं भारसंतप्ता संप्राप्ता शरणैषिणी ।
भारो यद्यवरोप्तव्यो विष्णुरेष ब्रवीतु माम् ॥ ५३

इति श्रीहरिवंशे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

# ४३

वैशंपायन उवाच ।
ते श्रुत्वा पृथिवीवाक्यं सर्व एव दिवौकसः ।
तदर्थकृत्यं संचिन्त्य पितामहमथाब्रुवन् ॥ १
भगवन्क्रियतामस्या धरण्या भारसंनतिः ।
शरीरकर्ता लोकानां त्वं हि लोकस्य चेश्वरः ॥ २
यत्कर्तव्यं महेन्द्रेण यमेन वरुणेन च ।
यद्वा कार्यं धनेशेन स्वयं नारायणेन वा ॥ ३
यद्वा चन्द्रमसा कार्यं भास्करेणानिलेन वा ।
आदित्यैर्वसुभिर्वापि रुद्रैर्वा लोकभावनैः ॥ ४
अश्विभ्यां वा सुराग्र्याभ्यां साध्यैर्वा त्रिदिवालयैः ।
बृहस्पत्युशनोभ्यां वा कालेन कलिनापि वा ॥ ५
महेश्वरेण वा ब्रह्मन्विशाखेन गुहेन वा ।
यक्षराक्षसगन्धर्वैश्चारणैर्वा महोरगैः ॥ ६
पर्वतैः शैलमुख्यैर्वा सागरैर्वा महोर्मिभिः । C 2967 B I 53 7 P I 53 7

---

544* विष्णुरुवाच ।
मा भैर्धरणि कल्याणि शान्तिं व्रज समाहिते ।
एष त्वामुचित स्थानं स्थापयामि वसुधरे ॥
While T1 2 G M ins after 53

545* एतस्याहं प्रसादेन श्रम त्यक्ष्यामि देवता ।

COLOPHON om in D6 — *Mention of the Epic* K1 3 Ñ2 V3 Ds2 — *Mention of Khila* K3 4 Ñ2 3 V B Ds D1–3, 5 T4 — *Sub parvan* D5 पारिजातपर्व, T4 आश्चर्यपर्व. — *Adhy name* Ś1 K3 पृथिवीवाक्यम्, K1 2 Ñ V B D ( D6 om ) धरणीवाक्यम्, K4 उर्वीवाक्यम् — *Adhy no* ( figures, words or both ) K3 50, Ñ3 V1 Dn Ds2 52, V2 T3 53, V3 D3 4 51; D1 T1 G3 5 48, D5 G2 4 45, T2 G1 M4 47, T4 49, M1–3 44 — *Śloka no* . K1 59, Dn D3 60, Ds2 D4 53, T2 49; G1 50

## 43

☞ D6 om. this adhy ( cf. v 1 39 1 )

1 T3 om the ref — $^{a}$ ) K2 V2 B1. 3 D ( except Dn, D6 om ) तच् ( for ते ) Ñ3 V1 धरणी- ( for पृथिवी- ).

2 Before 2, Ś1 ins देवा ऊचु — $^{a}$ ) K1 4 Ñ1 B1 Dn T1 G2 M4 ह्रियताम्, T3 4 श्रू° ( for क्रि° ). — $^{b}$ ) Ñ1 B2 3 Ds D3 T1 2, 4 G M पृथिव्या ( for धरण्या ) Ś1 ( marg ) -सवृति, K4 Ñ2 B1 Dn1 Ds2 T1 G2–5 सतति, D1 -सनतिम्, D2 -सक्षति ( for -संनतिः ). T3 पृथिव्याश्चैव भारति — $^{d}$ ) S1 त्व हि न परमा गति, Ñ3 ( marg ) B Ds त्वं हि लोकसमुद्भव

3 Ds2 reads $3^{bc}$ after $4^{abc}$ — $^{b}$ ) Ñ1 3 V1 2 Ds D3 T1 2 G1–3 5 M1–3 वा ( for च ) — K2 Ñ3 B3 om ( hapl ) $3^{cd}$ K3 om ( hapl ) $3^{c}$–$4^{b}$ — $^{c}$ ) T1 4 M4 च ( for वा ) — $^{d}$ ) S1 K1 G4 च ( for वा )

4 K3 om $4^{ab}$ ( cf v 1 3 ) V2 M3 om ( hapl ) $4^{ab}$. — $^{a}$ ) D3 च ( for वा ) — $^{b}$ ) Ś1 D1–3 [अ]नलेन च ( D1 3 वा ), M4 [अ]निलेन च ( for °न वा ) — $^{c}$ ) D1 बहुभिर् ( for वसु° ) — After $4^{abc}$, Ds2 reads $3^{bc}$ — $^{d}$ ) T4 भूत- ( for लोक- ) T2 -पावकै, G1 पावनै ( for -भा° )

5 $^{a}$ ) Ś1 [अ]मरेशाभ्यां; B2 Ds M4 सुराग्राभ्यां, T1 °द्याभ्यां ( for °ग्र्याभ्यां ) K1 अश्विभ्यां च सुरेशाभ्यां; K2–4 Ñ2 3 V B1 Dn D1–5 T2 4 G °भ्यां देववैद्याभ्या, Ñ1 °भ्यां च सुराभ्यां वा, B2 ( marg ) सुरेशाभ्यां देववैद्याभ्यां ( hypermetric ) — $^{b}$ ) M4 सिद्धैर् ( for साध्यैर् ). K3. 4 V3 B2 Dn T4 G4 साध्यैर्वा त्रिदशालयै, B1 2 ( marg. ) °र्वा त्रिदिवौकसै — After $5^{ab}$, T1. 2 G M2. 4 ins

546* मरुद्भिर्वा सुरश्रेष्ठ पावकेनापि च प्रभो ।
[ T1 G3 M4 वा ( for च ) ]

— D4 reads $5^{d}$–$7^{a}$ on marg — $^{d}$ ) K3 D1 4. 5 बलिना ( for क° )

6 $^{b}$ ) K1 3 च ( for वा ). — $^{d}$ ) T1 G2–5 M2–4 सहोरगैः ( for म° )

7 $^{a}$ ) K3 B3 Dn D1, 2, 5 पतं( Dn2 °त )गै. ( for पर्वतैः ).

गङ्गामुखाभिर्दिव्याभिः सरिद्भिर्वा सुरेश्वर ॥ ७
क्षिप्रमाज्ञापय विभो कथमंशः प्रयुज्यताम् ।
यदि ते पार्थिवं कार्यं कार्यं पार्थिवविग्रहे ॥ ८
कथमंशावतरणं कुर्मः सर्वे पितामह ।
अन्तरिक्षगता ये च पृथिव्यां ये च पार्थिवाः ॥ ९
सदस्यानां च विप्राणां पार्थिवानां कुलेषु च ।
अयोनिजाश्चापि तनूः सृजाम जगतीतले ॥ १०
सुराणामेककार्याणां श्रुत्वैतन्निश्चितं महत् ।
देवैः परिवृतः प्राह वाक्यं लोकपितामहः ॥ ११
रोचते मे सुरश्रेष्ठा युष्माकमपि निश्चयः ।
सृजध्वं स्वशरीरांशांस्तेजसात्मसमान्भुवि ॥ १२
सर्व एव सुरश्रेष्ठास्तेजोभिरवरोहत ।
भावयन्तो भुवं देवीं लब्ध्वा त्रिभुवनश्रियम् ॥ १३
पार्थिवे भारते वंशे पूर्वमेव विजानता ।
पृथिव्यां संभवमिमं श्रूयतां यन्मया कृतम् ॥ १४
समुद्रेऽहं सुराः पूर्वं वेलामासाद्य पश्चिमाम् ।
आसे सार्धं तनूजेन कश्यपेन महात्मना ॥ १५
कथाभिः पूर्ववृत्ताभिर्लोकवेदानुगामिभिः ।
इतिवृत्तैश्च बहुभिः पुराणप्रभवैर्गुणैः ॥ १६
कुर्वतस्तु कथास्तास्ताः समुद्रः सह गङ्गया ।
समीपमाजगामाशु युक्तस्तोयदमारुतैः ॥ १७
स वीचिविषमां कुर्वन्गतिं वेगतरंगिणीम् ।

T1 2 G M1–3 श्वेत- ( for शैल ) Ś1 K1 पनगै पर्वतैश्चापि, K4 पत्रनै पन्नगैर्वापि, D3 शैलमुख्यै पनंगैर्वा, M4 पर्वतैर्वा श्वेतमुखैः — b ) Ñ3 V1 च ( for वा ) D2 महर्षिभि G3 M3 सहोर्मिभि· ( for म° ) — c ) K1 Ñ1 2 V B1 2 ( marg as in text ) Dn1 Ds D1–4 -मुखीभिर् ( for मुखाभिर् ) M1 2 सर्वाभि ( for दिव्याभि ) — d ) B2 ( marg ) सुरोत्तम, T3 [अ]मरेश्वर ( for सुरे° )

8 d ) T1 G4 M4 इष्ट ( for कार्यं ) K2 D4 -विग्रहै, V3 G2 M1 3 -निग्रहे ( M1 °ह, M3 °हम् ) ( for -विग्रहे ). T2 G1 3 5 इष्टं पार्थिवनिग्रहे, T3 पार्थिवस्य विनि°, M2 कार्यं पार्थिवाविग्रह.

9 c ) Ś1 K1 4 -चरा ( for गता ). — d ) Ś1 K1 पृथिव्यां पार्थिवाश्च ये.

10 b ) Ś1 कुलस्य ( for कुलेषु ) — c ) N ( except Ś1, D6 om ) T4 [ए]व ( for [अ]पि ) T3 अयोनिजानां च तनू — d ) K1 4 Ñ3 V3 B1 3 D ( D6 om ) T1 4 सृजामो ( for °म )

11 Before 11, T2 G1 5 ins वैशंपायन — a ) Ds -कार्यार्थं ( for °णां ) — b ) K2 4 Ñ1 3 V D ( D6 om ) निश्चयं ( for निश्चितं ) Ś1 वच·, K1 B1 2 Ds1 G4 M1–3 मतम् ( for महत् ) K3 Ñ2 B2 ( marg ) श्रुत्वैतन्निश्चयं मतम् ( Ñ2 समम् ) — c ) Ñ2 अपि वृत·, Ñ3 Dn T1 G4 M1 परिवृतै. ( for °वृतः )

12 Before 12, Ś1 Ñ3 V1 ins ब्रह्मोवाच — b ) D1, 3–5 इति; M1 2 इह ( for अपि ) Ś1 D2 4 G2 निश्चयम्, G4 निश्चितम् ( for निश्चय· ) K1 क्रियतामेष निश्चय· — c ) Ś1 स्वान् ( for स्व- ) Ñ2 G2 -शरीराणां, D1 °रार्धं ( for °रांशांस् ) — d ) D3 -शीघ्रम् ( for तेजसा ) K4 समतान् ( for [आ]त्मसमान् )

13 a ) K2 सर्वशश्च ( for सर्व एव ) — c ) T1 G1 गोपायन्तो ( for भाव° ) — d ) D1–3 तथा ( for लब्ध्वा )

14 b ) T2 G2 5 एवं ( for एव ) — c ) T2 G1 2 4 पृथिव्या ( for °व्यां ) K4 B2 ( marg ) D4 T1 सभ्रमम् ( for सभवम् ) K2 Ñ2 3 V B1 2 Ds D2–5 G2 M1–3 इद ( for इम ) Ñ1 पृथिव्या सभ्रममपि, Dn °व्या सभ्रममिमं, D1 °व्यां सभवास्यत्र, T3 4 पृथ्व्या सर्वमिद श्रुत्वा — d ) K1 शृणुध्वं, T3 वृत्तान्तं ( for श्रूयता )

15 a ) Ś1 K1 2 4 Ñ2 3 V B Dn Ds D1 3 4 T3 4 M3 4 पुरा पूर्वं ( Ś1 °र्वं ), K3 D5 सुरा पूर्वं, Ñ1 पुरा सर्वे, B2 ( marg ) पुरा काले, D2 T2 G सुरा सर्वे ( for सुरा पूर्वं ) — b ) D5 दिशम् ( for वेलाम् ) — c ) K2–4 Ñ1 V2 Dn D1 2 5 आसे सह, Ñ2 3 V1 3 Ds आसं सह, D3 अगां सह, T3 आद्यै सार्धं ( for आसे सार्धं ) T4 आद्यं सार्धं तनूजैश्च

16 a ) K3 लोक- ( for पूर्व- ) — b ) K3 पूर्व- ( for लोक- ) Ś1 Ñ3 V1 2 -वेदार्थ-, B1 2 ( marg ) Ds -वृत्तानु-; D4 5 वेदाभि, M3 देवानु- ( for -वेदानु- ) T4 -शासिभि ( for -गामिभि ). — c ) K2 इतिहासैश् ( for °वृत्तैश् ) — d ) K1 सुराणा ( for पुराण- ) — After 16, S ( except T3. 4 ) ins

547* निरूपयंस्तं देवेशं प्रमाणैर्बहुलक्षणै ।
[ T1 G3 M1 2 देवेश· ( for °श ) ]

17 a ) B1 पूर्वतस्तु, D4 कुर्वाणस्य ( for कुर्वतस्तु ) Ś1 K1 कथास्ता मे, M1 2 ( *inf lin* ) कथां तां मे, M3 ( also ) कथास्तेन ( for कथास्तास्ता ) M3 कुर्वतस्तत्कथां तां मे — d ) G2 युक्तैस् ( for युक्तस् ) K2 प्रयुक्तस्तोयमारुतै.

18 a ) K2 V1 D2. 4 स वीचीं, K3. 4 M4 स वीची·;

पाटयित्वा करैर्देहमुष्णं पास्यामि शोणितम् ॥ ३५
एवमुक्त्वा वचो घोरं सा यथेष्टेन वर्त्मना ।
खं सा देवालयं देवी सगणा विचचार ह ॥ ३६
तस्यां गतायां कंसस्तु तां मेने मृत्युमात्मनः ।
विविक्ते देवकीं चैव व्रीडितः प्रत्यभाषत ॥ ३७
पितृष्वसः कृतो यत्नस्तव गर्भा हता मया ।
अन्यथैवान्यतो देवि मम मृत्युः समुत्थितः ॥ ३८
नैराश्येन कृतो यत्नः स्वजने प्रहृतं मया ।
दैवं पुरुषकारेण न चातिक्रान्तवानहम् ॥ ३९
त्यज गर्भकृतां चिन्तां त्वमिमां शोककारिकाम् ।
हेतुभूतस्त्वहं तेषां सति कालविपर्यये ॥ ४०
काल एव नृणां शत्रुः कालश्च परिणामकः ।
कालो नयति सर्वं वै हेतुभूतश्च मद्विधः ॥ ४१
मा कार्षीः पुत्रजां चिन्तां विलापं शोकजं त्यज ।

---

T3 °यां समुपो-, B2 °यामपि पो-, D2 °यां संप्रपो )थिता, T4 °यां समुपादिता

35 $^{a}$) D5 क्षयान्न- (for तवान्त-) —$^{c}$) D2 नखैर् (for करैर्) Ś1 K1 (marg) ताडयित्वा तलैर्देहं, D6 T1 2 G M दारयित्वा नखैर्देहं —$^{d}$) Ś1 K1 D6 T1 2 G पास्यामि तव (Ś1 हृदि) शोणितम्, M1–3 पास्ये हृदयशो°

36 $^{b}$) V3 यथोक्तेन, T2 G1 3 ययौ देव-, M1–3 ययौ तेन (for यथेष्टेन) Ñ2 कर्मणा (for वर्त्मना) — M4 reads $36^{cd}$ after 612* —$^{c}$) Ś1 ख च, T3 खे सा (for खं सा) — D3 om $36^{d}$ —$^{d}$) T4 नगरं (for सगणा) D6 T1 2 G M विवेश सगणा तदा — K Ñ2 3 V B Dn Ds D1 2 4–6 T G ins after 36 D3 after $36^{abc}$ M4 after $36^{ab}$

612* सा कन्या ववृधे तत्र वृष्णिसद्मनि पूजिता ।
पुत्रवत्पाल्यमाना सा देवी देवाज्ञया तदा ॥
विद्धि चैनामथोत्पन्नामंशाद्देवी प्रजापतेः ।
एकानंशा योगकन्या रक्षार्थं केशवस्य तु ॥
तां वै सर्वे सुमनसः पूजयन्ति स्म यादवाः । [5]
देववद्दिव्यवपुषं कृष्णः संरक्षितो यया ॥

[ D3 om line, $1^{a}$–$2^{a}$ — (L 1) K1 Dn -सद्मसु, K3 B2 T1 -संघसु-, K4 -वेश्मसु- (for -सद्मनि) — (L 2) K2 V3 D5 पुत्रवत्परिपाल्यन्ती (V3 °त्या सा) (for $^{a}$) K2 D5 G3 वसु-, B1 T1 3 4 G1 देव-, D3 ययौ (for देवी) — G1 om line 3 Before line 3, D3 ins वैशंपायन उवाच. — (L 3) T3 वैताम् (for चैनाम्) K3 D2 विन्ध्यशैले त्वयोत्पन्नाम् (for $^{a}$) D3 6 T1 3 4 G3 5 अङ्गाद्, T2 G4 M4 महा- (for अंशाद्) — After line 3, K2 Ñ2 Ds D5 ins

612A* एकानंशेति यामाहुरुत्पन्ना मानवा भुवि ।
[ Ds2 मानुषा (for मानवा) ]

— (L 4) K1 एकादशी, K4 आकाशे ता (for एकानशा) D6 T2 G1 2 M4 गोप- (for योग-) K2 Ñ2 D5 योगकन्या दुराधर्षा, D4 सैकानंशा योगकन्या (for $^{a}$) D6 T2 G रक्षार्थं केशवोऽब्रवीत् (for $^{b}$) — (L 5) K4 स्तुत्वा (for तां वै). V3 तां वै सुमनसः सर्वे (for $^{a}$) D2 (marg as above) 6 T2 3 G M4 पूजयिष्यन्ति याद( G2 मान-, G4 दान )वा (for $^{b}$) — (L 6) K2 तां देव-, Ñ3 (marg as above) B3 Ds2 देवीं च, Ds1 दिवा च (for देववद्) K1 देव- (for दिव्य-) K4 V2 3 B2 Dn D1–5 T G3 M4 -वपुषा (for °ष) V1 देवीं च देववद्दिव्य (for $^{a}$). V3 सवर्धितो (for संरक्षितो).]

37 $^{b}$) T3 मेने तां (by transp) —$^{d}$) K2–4 Ñ V B Ds D2–5 T3 4 G5 व्रीडितः समभाष( D1 °याच )त, M1–3 °त प्रत्युवाच ह

38 Before 38, some Mss ins कंस उवाच. —$^{a}$) Dn D6 T3 4 मृत्यो स्वसः (for पितृष्वसः) —$^{b}$) K2–4 Ñ2 3 V B2 Dn D1–5 T1 G2 3 5 M4 मया हता (by transp), M3 वृथा मया D6 तव गर्भकृतौ मया. — Ś1 om (hapl) $38^{c}$–$39^{b}$ —$^{c}$) K1 2. 4 Ñ2 3 V2 3 B Dn Ds D1–5 T1 3 4 G4 अन्य एव, V1 अन्यत्र वा (for °थैव) D6 T2 G1–3 5 M4 [अ]न्यथा (for [अ]न्यतो). —$^{d}$) K2 B Ds G4 उपस्थित (for समुत्थित)

39 Ś1 om $39^{ab}$ (cf v l 38) —$^{a}$) K1 (marg as in text) 4 नैपुण्येन, D6 नैर्घृण्येन (for नैराश्येन) M3 वृथा (for कृतो) —$^{d}$) D3 6 व्यति (for चाति-) T3 न चातिक्रमितुं जनैः.

40 $^{a}$) K1 B1 2 Ds D3 T4 गर्भगता (for °कृतां) — K2 om $40^{b}$–$41^{d}$ —$^{b}$) Ś1 -कारिताम्, K1 -संमिताम् (for -कारिकाम्) K3 4 Ñ V B Dn Ds D1–5 T1 3 4 संतापं पुत्रजं त्यज, D6 T2 G M4 विला( M4 सता )प शोकजं त्यज — Ñ3 repeats $40^{cd}$ after $42^{ab}$ —$^{d}$) Ñ1 G2. 4 स तु, V1 स हि (for सति)

41 K2 om 41 (cf v l 40) —$^{a}$) Ñ2 V3 एष (for एव) D5 मृत्यु (for शत्रु) —$^{b}$) M3 कालश्च परिणामत —$^{c}$) Ñ2 V3 भूतं (for सर्वं) —$^{d}$) Ñ2 -भूतं तु, D3 -भूताश्च (for -भूतश्च) B2 मद्विधा B1 3 Ds1 D4 5 हेतुभूतास्तु मद्विधा — After 41, K1 3 4 Ñ2 3 V B D S (except M1–3) ins

613* आगमिष्यन्ति वै देवि यथाभागमुपद्रवाः ।
इदं तु कष्टं यज्जन्तुः कर्ताहमिति मन्यते ॥

एवंप्राया नृणां योनिर्नास्ति कालस्य संस्थितिः ॥ ४२
पतामि पादयोर्मूर्ध्ना पुत्रवत्तव देवकि ।
मद्गतस्त्यज्यतां रोषो जानाम्यपकृतं स्वयम् ॥ ४३
साश्रुपूर्णमुखी दीना भर्तारमभिवीक्षती ।
उत्तिष्ठोत्तिष्ठ वत्सेति कंसं मातेव जल्पती ॥ ४४

देवक्युवाच ।

ममाग्रतो हता गर्भा ये त्वया कालरूपिणा ।
कारणं त्वं न वै पुत्र कृतान्तो ह्यत्र कारणम् ॥ ४५
गर्भकृन्तनमेतन्मे सहनीयं त्वया कृतम् ।
मूर्ध्ना पद्भ्यां निपतता स्वं च कर्म जुगुप्सता ॥ ४६
गर्भेऽपि नियतो मृत्युर्बाल्येऽपि न निवर्तते ।
युवापि मृत्योर्वशगः स्थविरो मृत एव तु ॥ ४७
अजाते दर्शनं नास्ति यथा नास्ति तथैव सः ।
जातोऽप्यजाततां याति विधात्रा यत्र नीयते ॥ ४८
तद्गच्छ पुत्र मा ते भून्मद्गतं मन्युकारणम् ।
मृत्युनापहृते पूर्वं शेषो हेतुः प्रवर्तते ॥ ४९
विधिना पूर्वदृष्टेन प्रजासर्गेण तत्त्वतः ।
मातापित्रोस्तु कार्येण जन्मतस्तूपपद्यते ॥ ५० C 3369 B 2. 4 58 P 2. 4 58

---

[ (L 1) $D_5$ -भाग्यम् ( for -भागम् ) — (L 2) $Ds$ $D_4$ विद्धि, $D_2$ कृच्छ्र् ( for कष्ट ) $K_3$ $\tilde{N}_3$ V $B_3$ Dn Ds $D_{4.6}$ $T_{2-4}$ G $M_4$ शत्रु ( for जन्तु ) ]

42 $^{b}$) $K_2$ $D_6$ संतापं ( for विलापं ) $K_4$ पुत्रजं ( for शोकजं ) $B_2$ ( marg ) सताप पुत्रजं त्यज — After $42^{ab}$, $\tilde{N}_3$ repeats $40^{ab}$. — $^{c}$) $K_3$ एवंविधा, $\tilde{N}$ $V_3$ $Ds_2$ $D_4$ $T_{1\ 2}$ $G_{3\ 5}$ $M_4$ °प्रायो ( for °प्राया ) $\tilde{N}_1$ लोके, $D_6$ $G_{1\ 3-5}$ $M_{1-3}$ वृत्तिर् ( for योनिर् ) $T_{3\ 4}$ एवं प्राप्य नृणां योनिं — $^{d}$) $D_6$ $T_1$ $G_{1\ 2\ 4,\ 5}$ $M_{1-3}$ लोकस्य ( for कालस्य )

43 $K_3$ om 43-44 $B_1$ om $43^{a}$ — $^{a}$) $D_1$ ( *sup lin.* ) नमामि, Bom and Poona eds एष ते ( for पतामि ) — $^{c}$) $K_4$ मद्भवस्; $D_3$ मत्कृतस् ( for मद्गतस् ) $G_2$ $M_{1-3}$ कोपो ( for रोषो ) — $^{d}$) $G_2$ [अ]पकृत ( for °तं ) $\acute{S}_1$ मया, $K_{1\ 2\ 4}$ $\tilde{N}_{2\ 3}$ $V_{2\ 3}$ B Dn Ds $D_{2-5}$ $T_{3\ 4}$ त्वयि, $\tilde{N}_1$ स्वकम् ( for स्वयम् ) $V_1$ जानाम्यपकृतस्त्वयि — After 43, $K_4$ $\tilde{N}_2$ $V_{2\ 3}$ B Ds $D_6$ $T_{1\ 3}$ G $M_4$ ins

614* इत्युक्तवन्तं कंसं सा देवकी वाक्यमब्रवीत् ।

[ $B_1$ सहसा ( for कस सा ) $\tilde{N}_2$ $V_2$ Ds $D_6$ $G_{2\ 3\ 5}$ आददे ( $D_6$ °दौ ) ( for अब्रवीत् ). ]

44 $K_3$ om 44 ( cf. v l 43 ). — $^{a}$) $B_2$ $Dn_2$ $T_1$ $G_3$ -मुखा ( for -मुखी ) $\acute{S}_1$ धीरा ( for दीना ) — $^{b}$) $V_3$ उप-; $D_6$ $G_2$ अपि; $T_1$ अनु ( for अभि- ) $K_3$ $T_{1\ 2}$ $G_{1.\ 4\ 5}$ M -वीक्ष्य च; $T_3$ -काङ्क्षती, $G_3$ -वीक्ष्य सा ( for -वीक्षती ) — $^{c}$) $T_1$ [इ]ह ( for [इ]ति ) — $^{d}$) $D_2$ सा तं ( for कंसं ). $K_1$ ( *sup lin* as in text ) $\tilde{N}_{1\ 2\ 3}$ ( marg as in text ) $B_1$ Dn $D_{1\ 3-5}$ $T_{3\ 4}$ समभि- ( for मातेव ) $G_4$ कंस मा मेति जल्पति; $M_3$ कंस तूवाच देवकी

45 $B_3$ $T_2$ $G_{1\ 5}$ om the ref — $^{a}$) $M_{1-3}$ सस ( for [अ]ग्रतो ) $T_4$ गता ( for हता ) $K_2$ पुत्रा ( for गर्भा ) — $^{b}$) $K_4$ त्वया ये ( by transp ), $D_6$ $G_{2,\ 5}$ $M_{1-3}$ यत्त्वया $\tilde{N}_1$ $T_1$ $G_4$ $M_4$ काम- ( for काल- ) — $^{c}$) $S_1$ $\tilde{N}_1$ दारुणस्, $K_3$ कारकस्, $V_3$ °णस् ( for °णं ) — $^{d}$) $\tilde{N}_1$ $V_3$ $B_2$ ऽपि ( for हि ) $\acute{S}_1$ $\tilde{N}_1$ दारुण ( for कारणम् )

46 $^{a}$) $\acute{S}_1$ $B_3$ $T_1$ कर्तनम् ( for -कृन्तनम् ) — $^{b}$) $D_3$ महता यत् ( for सहनीयं ) $K_1$ कृत त्वया ( by transp ). — $^{c}$) $D_1$ पादे, $G_4$ त्वया ( for पद्भ्या ) $K_2$ $V_2$ B Ds $D_4$ $T_{1\ 3\ 4}$ $M_{1-3}$ पादयो पतता मूर्ध्ना — $^{d}$) $K_3$ स्वयं, $K_4$ स्वीयं ( for स्वं च ) $M_4$ जुगुप्सितम् ( for °प्सता )

47 $^{a}$) $\acute{S}_1$ गर्भस्थे, $K_{2\ 4}$ $\tilde{N}$ V Dn $D_{1-3}$ $T_3$ $M_3$ गर्भे तु, B Ds गर्भे च, $M_4$ गर्भे हि ( for गर्भेऽपि ) $T_1$ गर्भे तु निश्चितो मृत्युर् — $^{c}$) $T_4$ हि ( for [अ]पि ) $S_1$ $K_1$ $D_{4,\ 5}$ $G_3$ मृत्यु- ( for मृत्योर् ) — After 47, $\acute{S}_1$ K $\tilde{N}_{2\ 3}$ V B Ds $D_{2\ 3\ 5}$ ins

615* कालमूलमिदं सर्वं हेतुभूतस्त्वमेव हि ।

[ $D_3$ कर्म- ( for काल- ) $K_2$ B Ds -पक्रम्, $K_3$ $V_{1.\ 3}$ -भूतम् ( for -मूलम् ) $S_1$ हेतुभूतस्तु त्वद्विधः, $K_{1\ 3}$ $D_{2.\ 3}$ °तो भवद्विध, $D_5$ °ता भवद्विधा ( for $^{b}$ ) ]

48 $^{a}$) $K_2$ अज्ञात-; $T_4$ अजात- ( for °ते ) — $^{b}$) $\acute{S}_1$ $K_{1\ 4}$ वायुस्, $B_1$ $D_3$ जातस्, $M_4$ [अ]स्ति न ( by transp ) $K_1$ $Ds_2$ च ( for स. ) — $^{c}$) $K_4$ ऽथ, $M_{1-3}$ हि ( for ऽपि ). — $^{d}$) $K_2$ यदि, $V_3$ येन ( for यत्र ) $T_3$ विधाता यद्विधीयते.

49 $^{a}$) $K_1$ पुत्र गच्छ ( by transp ) $D_6$ $T_2$ G $M_4$ भूत्ते ( by transp ) — $^{b}$) $S_1$ $V_3$ ( before corr as in text ) $Dn_1$ $D_{1\ 2\ 6}$ $T_{1-3}$ G $M_4$ मृत्यु-, $D_3$ मयि ( for मन्यु- ). $M_3$ मम तावदय विधि. — $^{c}$) $\acute{S}_1$ प्रकृते; $K_{1\ 3}$ [अ]पहते; $K_4$ [उ]पहितं, $\tilde{N}$ $V_{1.\ 3}$ $D_4$ $T_{3\ 4}$ [अ]पहृतं, $Dn_1$ $D_2$ प्रहृते; $D_1$ प्रहृतं ( for [अ]पहृते )

50 $^{a}$) $K_1$ $T_2$ $G_{1\ 2\ 4\ 5}$ M -सृष्टेन; $D_5$ दि° ( for -दृ° ). — $^{d}$) $M_{1-3}$ जन्म तत्र ( $M_1$ °त्तु ) ( for जन्मतस्तु ). $\tilde{N}_1$ प्रवर्तते ( for [उ]पपद्यते ) $T_{1\ 2}$ $G_{1\ 3-5}$ जन्मत( $G_4$ °न )स्तत्प्रपद्यते; $G_4$ $M_4$ °नस्तत्प्रवर्तते.

निशम्य देवकीवाक्यं स कंसः स्वं निवेशनम् । कृत्ये प्रतिहते दीनो जगाम विमना भृशम् ॥ ५१

इति श्रीहरिवंशे अष्टचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥

# ४९

वैशंपायन उवाच ।

प्रागेव वसुदेवस्तु व्रजे शुश्राव रोहिणीम् ।
प्रजातां पुत्रमेवाग्रे चन्द्रात्कान्ततराननम् ॥ १
स नन्दगोपं त्वरितः प्रोवाच शुभया गिरा ।
गच्छानया सह त्वं तु व्रजमेव यशोदया ॥ २
तत्रेमौ दारकौ गत्वा जातकर्मादिभिर्गुणैः ।
योजयित्वा व्रजे तात संवर्धय यथासुखम् ।
रौहिणेयं च मे पुत्रं परिरक्ष शिशुं व्रजे ॥ ३
बाल्ये केलिकिलः सर्वो बाल्ये मूर्च्छन्त्यमानुषाः ।
बाल्ये चण्डतमः सर्वस्तत्र यत्नपरो भव ॥ ४

---

51 Ś$_{1}$ om 51 Before 51, K$_{1\,3}$ B$_{3}$ Dn D$_{2\,6}$ T$_{3}$ G$_{4}$ ins वैशंपायन उवाच —$^{b}$) K$_{2}$ कसस्तु स्व-, K$_{3}$ स कंस स्व ( for स कंस स्व ) — After 51$^{ab}$, K$_{2-4}$ Ñ$_{2\,3}$ V B D S ( except M$_{1-3}$ ) ins

616* प्रविवेश सुसरब्धो दह्यमानेन चेतसा ।
[ K$_{3}$ तु, K$_{4}$ B$_{2}$ G$_{3}$ स ( for सु- ) T$_{3}$ प्रविवेश महत्क्रुद्धो ( for $^{a}$ ) ]

— T$_{3\,4}$ om 51$^{cd}$, Ñ$_{1}$ reads it on marg —$^{c}$) D$_{3\,6}$ M$_{3}$ प्रतिहतो ( for °ते ) — After 51, Ñ$_{2}$ V$_{3}$ B$_{1}$ ins

617* स्ववधं चिन्त्यमानस्तु कन्यावाक्यमनुस्मरन् ।

COLOPHON om in Ś$_{1}$ — *Mention of the Epic* K$_{1\,3}$ Ñ$_{2}$ Ds$_{2}$ — *Mention of Khila* K$_{1\,3}$ Ñ$_{2.\,3}$ V B Ds D$_{1\,3}$ — *Sub-parvan* T$_{4}$ आश्चर्यपर्व — *Adhy name* K$_{1}$ विष्णूत्पत्ति., K$_{2-4}$ Ñ V B Dn Ds D$_{1-5}$ श्रीकृष्णोत्पत्ति·; D$_{6}$ कृष्णावतार., T$_{2}$ G$_{1-3}$ कृष्णावतरणम्, M$_{4}$ कृष्णावतारकथनम् — *Adhy no* ( figures, words or both ) K$_{1}$ 64, K$_{3}$ 57, Ñ$_{3}$ V$_{1}$ Dn Ds$_{2}$ 59, V$_{3}$ D$_{3}$ 58, D$_{1}$ 55, D$_{4}$ T$_{3}$ 60, T$_{1}$ G$_{3\,5}$ M$_{4}$ 54, T$_{2}$ G$_{1}$ 53, T$_{4}$ 56, G$_{2\,4}$ 51, M$_{1-3}$ 50 — *Śloka no* Dn 64, Ds$_{2}$ D$_{3\,5}$ 65, D$_{4}$ 66

## 49

1 $^{a}$) D$_{4}$ च ( for तु ) —$^{b}$) Ś$_{1}$ व्रजं ( for व्रजे ) T$_{3}$ वै नृप ( for रोहिणीम् ) —$^{c}$) K$_{2}$ Ñ$_{1}$ V$_{3}$ D$_{1}$ T$_{3}$ प्रजात ( for °ता ) D$_{3}$ [अ]ग्रं ( for [अ]ग्रे ) K$_{4}$ T$_{2}$ G$_{1\,3\,5}$ प्रजातपुत्रामेवाग्रे —$^{d}$) K$_{2\,3}$ Ds D$_{6}$ T$_{2}$ G$_{1}$ चन्द्र- ( for चन्द्रात् ) T$_{3}$ चन्द्रकान्ताननं शुभम्, G$_{4}$ चन्द्रकान्तशुभाननम्

2 $^{a}$) D$_{2\,5}$ त्वरितं, D$_{6}$ T$_{1\,2}$ G M$_{4}$ अभित ( for त्वरित ) — After 2$^{ab}$, M$_{3}$ ins .

618* बालस्य तेजसा तं तु विस्मितं विस्मितस्तदा ।

Before 2$^{cd}$, D$_{5}$ ( marg ) ins वसुदेव उवाच —$^{c}$) K$_{2-4}$ Ñ V B D ( except D$_{6}$ ) त्वं वै, T$_{1}$ [ए]व त्व, T$_{3\,4}$ त्वं हि ( for त्वं तु ) — D$_{6}$ T$_{1\,2}$ G M$_{4}$ ins after 2 M$_{1\,2}$ after 2$^{ab}$ M$_{3}$ cont after 618*

619* यदा च रोहिणी पुत्रं प्रसूता कमलेक्षणा ।
यशोदापि तदैवेय प्रसूता तनयं विभो ॥
[ ( L 1 ) G$_{1\,4}$ प्रासूत ( for प्रसूता ) G$_{5}$ प्रसूत कमलेक्षणम् ( for $^{b}$ ) — ( L 2 ) T$_{1}$ M$_{1-3}$ [आ]यीं ( for [इ]यं ) T$_{2}$ G M$_{4}$ प्रासूत ( for प्रसूता ) T$_{1}$ शुभा ( for विभो ) M$_{3}$ प्रसूता कमळेक्षणा ( for $^{b}$ ) ]

3 $^{a}$) K$_{3.\,4}$ Ñ$_{1\,3}$ V D$_{1\,3}$ तत्र तौ, Ñ$_{2}$ ततो वै, B$_{2}$ ( marg ) Dn तत्रैतौ; T$_{3\,4}$ ताविमौ ( for तत्रेमौ ) D$_{5}$ तत्र तौ जातकौ गत्वा —$^{b}$) D$_{4}$ कर्मोदितैर् ( for -कर्मादिभिर् ) —$^{c}$) G$_{5}$ भोजयित्वा ( for यो° ) G$_{4}$ जातं ( for तात ) T$_{2}$ G$_{1}$ भोजयित्वा व्रजे जातौ — After 3$^{cd}$, G$_{3}$ reads 9–10, and om 3$^{ef}$ —$^{e}$) B$_{2}$ पुत्रं मे ( by transp ) —$^{f}$) K$_{2}$ -रक्ष शुभं, T$_{3\,4}$ -रक्षस्व च ( for -रक्ष शिशुं ) D$_{6}$ T$_{1\,2}$ G$_{1\,2\,4.\,5}$ M$_{4}$ तव पुत्रं च यत्नत . — After 3, D$_{6}$ T$_{2}$ G$_{1\,2\,4\,5}$ M$_{4}$ ins

620* पालयस्व तदा तात प्रमादबहुले व्रजे ।
[ T$_{2}$ यथा, G$_{2}$ M$_{4}$ यदा ( for तदा ) ]

— After the above, D$_{6}$ T$_{2}$ G$_{1\,2\,4\,5}$ M$_{4}$ read 7$^{e}$–9$^{d}$

4 K$_{3}$ om 4 K$_{1\,2\,4}$ Ñ V B Dn Ds D$_{1-5}$ T$_{3\,4}$ read 4 after 9 —$^{a}$) K$_{1}$ D$_{3\,4}$ ( before corr as in text ) T$_{4}$ केलिकल, K$_{2}$ Ñ$_{2}$ V$_{3}$ D$_{1}$ °कर, D$_{5}$ क्रीडापर·, D$_{6}$ M$_{3}$ कलिसम, T$_{3}$ केलिरति, M$_{1\,2}$ किल कलि· ( for केलिकिलः ). Ś$_{1}$ सर्वे ( for सर्वो ) K$_{4}$ D$_{2}$ बाल केलिकल सर्वो; T$_{2}$ G M$_{4}$ बाल्ये कलिकरा ( G$_{2}$ °समा ) सर्वे —$^{b}$) D$_{6}$ T$_{1\,2}$ G M$_{4}$ मानुषाः ( for [अ]मा° ) K$_{2}$ B$_{3}$ Ds D$_{2\,3}$ बाल्ये मुह्यति मानव, K$_{4}$ बालो मुह्यति मानुषः, Ñ V B$_{1\,2}$ Dn D$_{1\,4,\,5}$

अहं वाच्यो भविष्यामि पितृपक्षेषु पुत्रिणाम् ।
योऽहमेकस्य पुत्रस्य न पश्यामि शिशोर्मुखम् ॥ ५
ह्रियते हि बलात्प्रज्ञा प्राज्ञस्यापि सतो मम ।
अस्माद्धि मे भयं कंसान्निर्घृणाद्वै शिशोर्वधे ॥ ६
तद्यथा रौहिणेयं त्वं नन्दगोप ममात्मजम् ।
गोपायसि यथा तात तत्त्वान्वेषी तथा कुरु ।
विघ्ना हि बहवो लोके बालानुत्त्रासयन्ति हि ॥ ७
स च पुत्रो मम ज्यायान्कनीयांस्तव चाप्ययम् ।
उभावपि समं प्रेम्णा निरीक्षस्व यथासुखम् ॥ ८
वर्धमानावुभावेतौ समानवयसौ यथा ।
शोभेतां गोव्रजे तस्मिन्नन्दगोप तथा कुरु ॥ ९
न च वृन्दावने कार्यो गवां घोषः कदाचन ।
तत्र वासे तु भेतव्यं केशिनः पापदाशनः ॥ १०
सरीसृपेभ्यः कीटेभ्यः शकुनिभ्यस्तथैव च ।
गोष्ठेषु गोभ्यो वत्सेभ्यो रक्ष्यौ ते द्वाविमौ शिशू ॥ ११
नन्दगोप गता रात्रिः शीघ्रयानो व्रजाशुगः ।
इमे त्वां त्वरयन्तीह पक्षिणः सव्यदक्षिणाः ॥ १२
रहिते वसुदेवेन सोऽनुज्ञातो महात्मना । C 3384 B 2. 5 14 P 2 5, 14

T3 4 बाल्ये मुह्यति मानुष — c ) K1 चण्डपर , M1–3 °कर ( for °तम ). D6 T2 G M4 बाल्ये चण्डकराः सर्वे — d ) T4 तस्माद् ( for तत्र )

5 b ) T3. 4 पुत्र- ( for पितृ ) K1 4 -पक्षे तु ( for पक्षेषु ) — c ) K2 सो ( for यो )

6 a ) D5 स्ति-, G3 M1 4 ऽपि ( for हि ) M2 बलान्मे ह्रियते प्रज्ञा — b ) D3 G2 4 ततो ( for सतो ) T3 प्रजा वै निहता मम — d ) K1 4 V1 2 D1 T4 M4 हि ( for वै ) D6 T2 G1 2 4 5 वधात् ( for वधे ) T3 निर्घृणात्पापनिश्चयात्, M1–3 °च्छिशुमारकात्

7 a ) B1 3 D5 यथा च ( for तद्यथा ) T2 G1 4 M4 च ( for त्वं ) M1–3 यथा रक्षसि ते पुत्रं — c ) D1 गोपाय त्वं ( for °यसि ) Ś1 D2 3 सदा, Ñ2 3 (marg.) V3 B2 D5 D4 5 T3 शिशुं, D6 G2 4 5 M4 तथा ( for यथा ) V1 शिशुं ( for तात ). T2 गोपायसि तात यथा, T4 °से शिशुं तात — d ) B2 ( marg as in text ) नन्दगोप; D3 पुत्रान्वेषी, T2 G M4 यथा वेत्सि, T3 यथा स्वार्थम् ( for तत्त्वान्वेषी ) — G3 om 7e–8d. D6 T2 G1 2 4. 5 M4 read 7e–9d after 620*. — e ) D6 T2 G1. 2. 4 5 M4 विघ्नाश्च बहवस्तत्र — f ) Ś1 K2 च; Ñ1. 3 V1 2 B1 3 D5 D1 5 ह ( for हि ) K4 बालांश्च त्रासयन्ति हि; D6 T2 G1 2 4. 5 M °नुद्वेजयन्ति च ( M1–3 °न्यथ ), T3 4 बाल्ये वित्रासयन्ति ह ( T4 हि ).

8 For the sequence in D6 T2 G1 2 4 5 M4, cf v 1. 7 G3 om 8 ( cf v 1 7 ) K2 reads 8–9 on marg. — a ) K3 Dn ज्येष्ठ ( for ज्यायान् ) — b ) K1 मम ( for तव ). B2 चात्मज , D6 T2 G1 2. 4 5 M4 च ( D6 स ) प्रभो ( for चाप्ययम् ) K2 3 Ñ1 D1 5 कनीयास्तस्य चात्मजः ( K3 D1 °नुज., Ñ1 °व्ययः ), Ñ2 3 V1 2 B1 3 D5 D2–4 T3 4 °श्चाप्ययं तव, V3 Dn °श्च तवात्मज°, T1 M1–3 °श्च तव प्रभो — c ) Ś1 साम्ना , K Ñ V B D ( except D6 ) T1 3 4 नाम्ना ( for प्रेम्णा ). — d ) K3 4 Ñ V1 3 B3 Dn D1–3. 5 यथा° तथम् ( for °सुखम् )

9 For the sequence in D6 T2 G1 2 4 5 M4, cf. v 1. 7 G3 reads 9–10 after 3cd — b ) K2 D5 तथा, M1 तदा ( for यथा ) — c ) D1 तात ( for तस्मिन् ). — After 9, K1 2 4 Ñ V B Dn D5 D1–5 T3 4 read 4.

10 For the sequence in G3, cf v 1 9 — a ) D5 घोषो ( for कार्यो ) — b ) K4 ( marg ) गोष्ठ , M1–3 वास° ( for घोष ). K1 3 Ñ V B3 Dn D1 3 6 T1 G3 कथंचन ( for कदा° ) D5 गवा कार्य कथंचन — After 10ab, D6 S ins

621* तत्रासौ वसति क्रूरो मांसभोजी दुरात्मवान् ।

— c ) Ś1 T1 G2 3 5 M1 4 वस्तव्य ( for वासे तु ) K Ñ V B Dn D1–3. 5 T3 4 भेतव्यं तत्र वसत° ( K2 B2 [ marg. ] T4 वासे तु, Ñ1 वस्तव्यं ), T2 G1 4 तत्रैव वसनस्तस्य — d ) T1 -देहिन ( for दर्शिन. )

11 T2 G1. 4 om. 11ab — a ) D3 क्रूरेभ्य , T1 शृङ्गेभ्यः ( for कीटेभ्यः ). — d ) K1 D3 5 रक्ष्यौ मे, K2 D2 6 G1 2 रक्ष्यौ तौ, T3 रक्ष तौ, M4 रक्षैतौ ( for रक्ष्यौ ते ) G5 अमू ( for इमौ ). T2 G4 रक्ष्यौ तौ द्वाविमौ किल, M1–3 रक्ष्यौ द्वावपि ते शिशू — After 11, D6 T1 4 G1–3 M ins

622* यमुना नैव गन्तव्या तस्यां वसति कालिय. ।

[ D6 G1 2 च न; M4 [अ]पि न ( for नैव ).]

12 b ) K1 B1 2 ( marg ) व्रजानित K4 D2 3. 5 6 T2 G1 2 व्रज व्रजम्, Ñ2 V1 व्रजानुग , B1 ( marg ) D5 °श्रितः; D4 व्रजस्थिन°, T1 3 G5 M व्रजं व्रज, T4 व्रजं तत ( for व्रजाशुग° ). — c ) D3 त्वा T2 G1 ते, G4 च ( for त्वां ). D1 T4 व्याहरन्ति ( for त्वरयन्ति ) B3 T1 G4 [इ]व , M4 [ए]-व ( for [इ]ह ). K Ñ V B1 2 Dn D1. 3 5 G3 इमे त्वां व्याहरन्तीव, T3 इमे त्वां व्याहरिष्यन्ति; M1–3 इमे त्वा त्वार°

यानं यशोदया सार्धमारुरोह मुदा युतः ॥ १३
कुमारं स्कन्धवाह्यायां शिबिकायां समाहितः ।
संवेशयामास शिशुं शयनीये महामतिः ॥ १४
स जगाम विविक्तेन शीतानिलविसर्पिणा ।
बहूदकेन मार्गेण यमुनातीरशोभिना ॥ १५
स ददर्श शिवे देशे गोवर्धननगोपगे ।
यमुनातीरसंबद्धं शीतमारुतसेवितम् ॥ १६
विरतश्वापदं रम्यं लतावल्लीमहाद्रुमम् ।
गोभिस्तृणनिमग्नाभिः स्यन्दन्तीभिरलंकृतम् ॥ १७
समप्रचारं च गवां समतीर्थजलाशयम् ।
विषाणस्कन्धघातैश्च वृषाणां घृष्टपादपम् ॥ १८
भासामिषादानुसृतं श्येनैश्चामिषगृद्धिभिः ।
सृगालमृगसिंहैश्च वसामेदोशिभिर्वृतम् ॥ १९
शार्दूलशब्दाभिरुतं नानापक्षिसमाकुलम् ।

---

यन्तीह —$^{d}$) K$_2$ वय श्रोत्रसुखावहा

13 Before 13, K$_3$ D$_2$ ins वैशपायन उवाच —$^{a}$) K Ñ V B Dn Ds D$_{1-5}$ T$_4$ रहस्य, D$_6$ प्रहिते, T$_2$ G$_{1\ 2}$ रहितो, T$_3$ नन्दोऽपि, M$_{1\ 2}$ नन्दोऽथ ( for रहिते ) —$^{b}$) K$_4$ अनुज्ञातो, M$_{1-3}$ संमान्योक्तो ( for सोऽनुज्ञातो ) —$^{d}$) K$_2$ V$_{1\ 3}$ B$_2$ G$_2$ मुदान्वित॰; G$_4$ मुदा घृत ( for मुदा युत )

14 $^{a}$) D$_6$ कुमार स्कन्धमावाह्य —$^{b}$) V$_2$ om from समाहित up to शयनीये ( in 14$^{d}$ ) M$_3$ महामतिः ( for समाहित ) — After 14$^{ab}$, D$_6$ T$_2$ G$_{1\ 3\ 5}$ M$_4$ ins

623* शयने तं शिशुं चैव संवेश्य मृदुसस्तरे ।

[ T$_2$ G$_1$ शयान ( for शयने ). ]

— Ś$_1$ T$_3$ om 14$^{cd}$ —$^{c}$) Ñ$_1$ प्र- ( for सं- ) —$^{d}$) K$_1$ D$_6$ T$_2$ G शिबिकायां, T$_1$ M$_4$ नन्दगोपो, M$_{1-3}$ स्वास्तीर्णायां ( for शयनीये ) K$_{3\ 4}$ Ñ$_{1\ 3}$ V$_{1\ 3}$ Dn D$_{2\ 3}$ T$_4$ शिबिकायां महामना ( D$_3$ °यशा )

15 $^{a}$) K$_{2-4}$ Ñ V B Dn Ds D$_{1-5}$ T G$_1$ जगाम च ( G$_1$ स ), D$_6$ आजगाम ( for स ज° ) —$^{b}$) K$_{2-4}$ Ñ V B Dn Ds D$_{1-5}$ T$_{1\ 3\ 4}$ G$_{3\ 5}$ M$_4$ शीतलानिलसर्पि( T$_3$ °वर्षि )णा. —$^{d}$) N ( except Ś$_1$ K$_{1\ 4}$ ) S ( except T$_1$ M$_{1-3}$ ) -गामिना ( for -शोभिना )

16 $^{a}$) K$_{1-3}$ Ñ V B Dn Ds D$_{1-5}$ T$_{3\ 4}$ शुभे देशे, D$_6$ T$_2$ G$_{1\ 3-5}$ M$_{1-3}$ शिवं देशं ( G$_3$ °शे ) ( for शिवे देशे ) K$_4$ स गोव्रजं शुभे देशे —$^{b}$) K$_{1\ 3\ 4}$ Ñ V B$_{1\ 2}$ ( marg ) Dn D$_{1-3\ 5}$ T$_{1\ 3\ 4}$ समीपगे; K$_2$ B$_{2\ 3}$ Ds T$_2$ M$_4$ -वनो°, D$_6$ -वनोपमम्, M$_{1-3}$ -गिरेस्तटे ( for -नगोपगे ) D$_4$ गिरौ गोवर्धने महत् —$^{c}$) Ś$_1$ K$_1$ -संबद्धे, K$_2$ D$_5$ -संवृद्धं, K$_3$ V$_1$ Ds D$_6$ -संबन्धं, B$_1$ -संनद्धं, B$_2$ D$_3$ T$_1$ G$_{1-3\ 5}$ M$_{2-4}$ संबद्ध-, T$_2$ -संबन्धि ( for -संबद्धं ) —$^{d}$) K$_2$ शीतं ( for शीत- ). Ś$_1$ K$_1$ -सेविते, D$_3$ -शीतलम् ( for -सेवितम् ).

17 $^{a}$) K$_2$ Ñ$_{2\ 3}$ V B$_{1.\ 3}$ D$_{2\ 5}$ विगत-, K$_{3\ 4}$ Ds D$_{1\ 3}$ विरुत-, D$_6$ T$_{1\ 2}$ G निरीति-; M$_2$ विदित- ( for विरत- ). Ś$_1$ K$_1$ विरत( K$_1$ निरस्त )श्वापदे रम्ये, B$_2$ Dn विरुतश्वापदै रम्यं, M$_4$ निरीति श्वापदारम्यं —$^{b}$) Ñ$_3$ V$_1$ लतागुल्म-, M$_1$ °विष्ट-, M$_2$ °श्लिष्ट-, M$_3$ °विष्टं ( for °वल्ली- ) Ś$_1$ K$_1$ -महाद्रुमे ( for °द्रुमम् ) B$_{1\ 3}$ Ds D$_4$ लतागुल्मशता( B$_3$ D$_4$ °समा )कुलम् — B$_3$ om ( hapl ) 17$^{c}$–20$^{b}$ —$^{c}$) K$_1$ ( *sup lin* as in text ) -विमग्नाभि, K$_{2-4}$ Ñ V B$_{1\ 2}$ D T$_{2-4}$ G -तिल° ( for -निम° ) T$_1$ M$_4$ गोभिस्तृणेषु म( M$_4$ ल )ग्नाभि —$^{d}$) Ś$_1$ Dn$_1$ D$_{1\ 4}$ G$_{1\ 2\ 4}$ M$_4$ स्पन्दन्तीभिर्, K$_4$ स्रव°, G$_{3.\ 5}$ क्रन्द° ( for स्यन्द° )

18 B$_3$ om 18 ( cf v l 17 ) —$^{a}$) T$_2$ G$_1$ -प्रसारं ( for -प्रचारं ) K$_4$ तु ( for च ) —$^{c}$) Ś$_1$ Ñ V B$_{1\ 2}$ Dn Ds D$_4$ T$_3$ वृषाणां ( for विषाण- ) K$_{1\ 4}$ D$_{2\ 3}$ T$_2$ G$_{1\ 2\ 5}$ -पातैश्; G$_4$ M$_4$ पादैश् ( for -घातैश् ) K$_3$ D$_1$ G$_3$ वृषाणां स्कन्धपातैश्च —$^{d}$) D$_6$ T$_{1\ 2}$ G$_{1\ 2\ 4\ 5}$ M$_4$ वृषभैर्, T$_4$ पादपैर् ( for वृषाणां ) D$_2$ ( marg as in text ) कृष्ट-, G$_2$ M$_4$ पुष्ट- ( for घृष्ट- ) Ś$_1$ K$_3$ Ñ V B$_{1\ 2}$ Dn Ds D$_{1\ 4}$ G$_3$ विषाणोद्घृष्टपादपम्; T$_3$ पादपैः सर्वतो वृतम्

19 B$_3$ om 19 ( cf v l 17 ) —$^{a}$) K$_2$ -गतं, V$_1$ -भृतं, V$_2$ Dn D$_1$ -सृतै ( for -सृतं ) K$_1$ D$_{2\ 3\ 5}$ M$_4$ क्रव्यादसंघा( D$_5$ °सिंहा )नुसृ( D$_3$ °तयु )तं, Ds गृध्रामिषादानुसृतं, D$_6$ T$_{1\ 2}$ G$_{1\ 2\ 5}$ भासचक्रैरनुसृतं, T$_{3\ 4}$ भाषचाषाद्य°, G$_3$ भास्वच्चकोरानुसृतैः; G$_4$ हासवक्त्रैरनुसृतं —$^{b}$) D$_1$ तु ( for च ) K$_2$ V$_3$ B$_{1\ 2}$ Ds D$_{2\ 3}$ T$_{1\ 3\ 4}$ M$_4$ -गृध्नुभि ( for -गृद्धिभिः ). —$^{c}$) M -संघैश् ( for -सिंहैश् ) —$^{d}$) K$_1$ D$_5$ -मेदोशनैर्; K$_{2-4}$ Ñ V$_1$ B$_2$ Ds$_2$ D$_{1\ 3\ 4}$ T$_3$ -मेदोस्थिभिर्, V$_{2\ 3}$ -मेदास्थिभिर्, B$_1$ Dn$_1$ T$_4$ -मेदाशिभिर् ( for -मेदोशिभिर् ) D$_2$ वसामेदोस्थिभिर्भृतम्, D$_6$ T$_{1\ 2}$ G M$_4$ मृग( T$_1$ वसा-, G$_2$ मृत )मेदोवसाशि( T$_1$ G$_3$ °सादि )भिः

20 B$_3$ om 20$^{ab}$ ( cf v l 17 ) K$_3$ om ( hapl ) 20$^{a}$–21$^{b}$ D$_3$ om 20 —$^{a}$) T$_4$ -युतं ( for -रुतं ) —$^{b}$) D$_6$ T$_2$ G M$_4$ वानरर्क्ष- ( for नानापक्षि- ). K$_1$ B$_1$ Ds -गणाकुलम् ( for -समा° ) —$^{c}$) T$_3$ सर्व- ( for स्वादु- ) K$_1$ ( *sup lin* as in text ) $_{2\ 4}$ Ñ V B$_{1.\ 2}$ ( marg as in text ) $_3$ Dn Ds D$_{1.\ 2\ 4.\ 5}$ T$_{3\ 4}$ -वृक्ष- ( for -पुष्प- ) Ś$_1$ -फलाकीर्णं; D$_6$ T$_{1\ 2}$ G$_{1\ 3-5}$ M$_4$ -मधुक्षीरं; G$_2$ M$_{1.\ 2}$ -फलक्षीरं; M$_3$

स्वादुपुष्पफलं रम्यं पर्याप्ततृणसंस्तरम् ॥ २०
गोव्रजं गोरुतशिवं गोपनारीभिरावृतम् ।
हम्भारवैश्च वत्सानां सर्वतः कृतनिस्वनम् ॥ २१
शकटावर्तविपुलं कण्टकीवाटसंकुलम् ।
पर्यन्तेष्वावृतं वन्यैर्वृहद्भिः पतितैर्द्रुमैः ॥ २२
वत्सानां रोपितैः कीलैर्दामभिश्च विभूषितम् ।
करीषाकीर्णवसुधं कटच्छन्नकुटीमठम् ॥ २३
क्षेमप्रचारबहुलं हृष्टपुष्टजनायुतम् ।
दामनीप्रायबहुलं गर्गरोद्गारनिस्वनम् ॥ २४

तक्रनिस्रावबहुलं दधिमण्डार्द्रमृत्तिकम् ।
मन्थानवलयोद्गारैर्गोपीनां जनितस्वनम् ॥ २५
काकपक्षधरैर्बालैर्गोपालैः क्रीडितालयम् ।
सार्गलद्वारगोवाटं मध्ये गोस्थानसंकुलम् ।
सर्पिषा पच्यमानेन सुरभीकृतमारुतम् ॥ २६
नीलपीताम्बराभिश्च तरुणीभिः समन्ततः ।
वन्यपुष्पावतंसाभिर्गोपकन्याभिरावृतम् ॥ २७
शिरसा धृतकुम्भाभिर्बद्धैरुद्ग्रथिताम्बरैः ।
यमुनातीरमार्गेण जलहारीभिरावृतम् ॥ २८ C 3400 B 2. 5 30 P 2 5. 30

---

-फलोपेतं ( for -फलं रम्यं ) — $^{d}$) K1 D2, 4 5 -सवृतम्, K2 4 Ñ2 3 V T4 -सस्कृतम्, D1 T1 वीरुधम्, G3 -विस्तरम् ( for सस्त° ).

21 K3 om $21^{ab}$ ( cf v l 20 ) — $^{a}$) T1 गोवृत ( for गोव्रजं ) Ds2 गोरुतं, T4 गोकुलं ( for गोरुत- ) K4 गोव्रज गोरुतै रम्यं, T3 गोव्रज गोकुलाविष्टं — $^{b}$) T4 घोष ( for गोप- ) M1–3 गोपनारीसमावृतम् — $^{c}$) Ś1 D3 हम्बारवैश्, K1 भम्भारा°, D5 T1 2 G1–3 5 M हुम्भार° ( for हम्भा° ) — $^{d}$) T3 सर्वत्र ( for °त )

22 $^{b}$) D6 S नेमिस्वनमनोरम( T3 4 G4 °हर )म् — $^{c}$) T1 पर्यन्ते च ( for °न्तेषु ) Ś1 Ñ2 V3 रम्यैर्, D2 6 T2 G1 2. 4 5 चान्यैर् ( for वन्यैर् ) T4 पर्यन्तेनावृत पुष्पैर् — $^{d}$) Ś1 K2 महद्भि ( for बृ° ) K1 Ñ2 V3 पातितैर्, D6 T2 G1 3–5 M1–3 फलि° ( for पति° )

23 $^{a}$) B3 कीर्णैर् ( for कीलैर् ) — $^{b}$) Ś1 विशोभितम्; K3, 4 Dn निषेवितै ; G3 विराजितम् ( for विभूषि° ) D1 M1–3 दामनीभिश्च भूषि( M1 शोभि )तम् — $^{d}$) K2 Ds1 ( *inf lin* ) T2 G1 -मुखम्; T3 -रचम् ( for -मठम् )

24 M4 transp 24 and 25 — $^{a}$) K3 Ñ V1 2 Dn D2–5 G3 क्षेम्य-, B Ds T1 क्षेम्यं ( for क्षेम- ) — D3 om ( hapl. ) $24^{bc}$ — $^{b}$) K4 -जनैर्युतम्; Ñ1 ( marg ) V2 B1 ( marg ) 2 3 Dn Ds D2 4, 5 -जनावृतम्; Ñ2 3 V1 3 B1 D1 6 T G M4 °कुलम् ( for °युतम् ). — $^{c}$) K1 3 4 V2 B1 Dn D2 -पाश-; D6 T1 2 G M दाम- ( for -प्राय- )

25 T3 om ( hapl ? ) $25^{a}$–$26^{d}$ M4 transp 24 and 25 M4 transp $25^{ab}$ and $25^{cd}$ — $^{a}$) K1 D3 G4 -निर्माण- ( for -निस्राव- ) K3 V2 Dn D1 T1 4 G3 5 M4 मलिन ( for -बहुलं ) — $^{b}$) K3 -बिन्द्वार्द्र-; K4 Ñ2 V3 D1 2 4 G2 M -पिण्डार्द्र-, V1 D6 -मन्थार्द्र- ( for -मण्डार्द्र- ) — After $25^{ab}$, D6 T1, 2 4 G1 2 4 5 M ins .

624* नवनीतपरिक्षिप्तमाज्यगन्धविभूषितम् ।
[ M1–3 -मनोरमम् ( for -विभूषितम् ) ]

— T4 reads $25^{cd}$ twice — $^{d}$) V1 D3 G4 -स्वनैः ( for -स्वनम् )

26 T3 om $26^{abcd}$ ( cf v l 25 ) — $^{b}$) Ś1 K1 T1 G3 गोपाल- ( for °लैः ) K2–4 Ñ V B Dn Ds D1–5 T4 गोपालैः क्री( K3 4 Ñ3 V1 B2 Dn D1 2 °लक्री )डनाकुलम्, M1–3 °लैः क्रीडितव्रजम् — After $26^{ab}$, D6 T2 4 G M ins

625* दारकैर्दारिकाभिश्च परस्परसमाकुलम् ।
[ M1–3 -समागतै ( for °कुलम् ) ]

— K3 om ( hapl ) $26^{cd}$. — $^{c}$) Ñ2 V3 B1 संकुल-, Ñ3 ( marg ) साकुल-, B3 साकुलं ( for सार्गल- ) — $^{d}$) B2 ( marg ) M4 संस्थान-; D1 गोष्ठान- ( for गोस्थान- ) S1 M3 -मकटम् ( for संकुलम् ) — $^{e}$) T3 सर्वेषां ( for सर्पिषा )

27 $^{a}$) D4 तु ( for च ) — $^{b}$) V3 B1 3 अलंकृतम् ( for समन्तत ). — After 27, D2 5 ins :

626* सीमन्तमधुरालापाः स्मितभ्रूललितेक्षणाः ।
सीत्कारभ्रूविलासैश्च चेतोबुद्धिमनोहराः ।
सर्वास्ताश्चन्द्रवदना गोपनार्यः सुशोभनाः ॥
तासां नूपुरशब्देन मेखलानां स्वनेन च ।
स्वनन्तीनां च शब्देन मयूरा ननृतुस्तदा ॥ [ 5 ]
[ ( L 4 ) D5 मेखलानि - ( for °लाना ) ]

28 $^{a}$) S1 Dn शिरोभिर् ( for शिरसा ) — $^{b}$) K2 Ñ V2 3 B D ( except D6 ) T3 4 बद्धैरग्रस्तनाम्ब( T3 4 °न्त )रैः. — $^{c}$) Ds D2 -मार्गेषु ( for °ण ) — D6 T1 2 G ins after 28 T4 M1–3 after $28^{ab}$

627* तक्रविक्रययुक्ताभिर्दधिसर्पिःक्रयेषु च ।
[ T1 G3 M1–3 -क्रयमु- ( for -विक्रय- ). ]

स तत्र प्रविशन्हृष्टो गोव्रजं गोपनादितम् ।
प्रत्युद्गतो गोपवृद्धैः स्त्रीभिर्वृद्धाभिरेव च ।
निवेशं रोचयामास परिवर्ते सुखाश्रये ॥ २९
सा यत्र रोहिणी देवी वसुदेवसुखावहा ।
तत्र तं बालसूर्याभं कृष्णं गूढं न्यवेशयत् ॥ ३०

इति श्रीहरिवंशे एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

## ५०

### वैशंपायन उवाच ।

तत्र तस्यासतः कालः सुमहानत्यवर्तत ।
गोव्रजे नन्दगोपस्य बल्लवत्वं प्रकुर्वतः ॥ १
दारकौ कृतनामानौ ववृधाते सुखं च तौ ।
ज्येष्ठः संकर्षणो नाम यवीयान्कृष्ण एव तु ॥ २
मेघकृष्णस्तु कृष्णोऽभूद्देहान्तरगतो हरिः ।
व्यवर्धत गवां मध्ये सागरस्य इवाम्बुदः ॥ ३
शकटस्य त्वधः सुप्तं कदाचित्पुत्रगृद्धिनी ।

29 $^{a}$) T3 4 तत्र प्रविश्य संहृष्टो — $^{b}$) T1 M4 गोवि- ( for गोप- ) D3 व्रजं नन्द. स्वभार्यया, D6 T2 G1 2 5 व्रजं गोप( D6 घोष )विनादितम्, T3 4 गोव्रजे घोषनादिते ( T4 °तै ) — $^{c}$) K2. 3 प्रत्युद्गतैर् ( for °तो ) — $^{d}$) D2 गोपि- ( for स्त्रीभिर् ) — D1 om 29$^{e}$–30$^{b}$ — $^{e}$) S1 K1 4 B2 ( marg ) D2 निवास ( for निवेश ) M4 निवेशं कारयामास — $^{f}$) K1 Ñ2 V3 D2 3 5 T3 M3 परिवृत्ते, G2 परावर्त- ( for परिवर्ते ) B3 यथाश्रये ( for सुखा° )

30 D1 om 30$^{ab}$ ( cf v l 29) — $^{a}$) Ś1 K1 Ñ1 B1 D5 T1 सा त( K1 द्य )त्र, K4 यत्र सा ( by transp ) — $^{b}$) K1 -सुखावहे ( for °हा ) — Ś1 om 30$^{cd}$, M1 reads it twice. — $^{c}$) M4 [ए]व ( for तं ) — $^{d}$) Ds2 D6 T2 3 G1, 2 5 गूढे, D2 गेहे ( for गूढं ) M4 कृष्णं स्कन्धे निवेशयन् — After 30, D6 S ins

628* वसुदेवप्रयुक्तश्च तयोर्गर्गो महातपा ।
अकरोज्जातकर्माद्या क्रिया सर्वा यथाक्रमम् ॥
ब्राह्मणेभ्यो धनं दत्त्वा भोजनं च यथाक्रमम् ।
गोपाश्चैवोत्सवं चक्रुर्गोभ्यो विप्रेभ्य एव च ॥
[ ( L 1 ) D6 G1 M4 गार्ग्यो ( for गर्गो ) ]

Colophon — *Mention of the Epic* K3 Ñ2 Ds2 — *Mention of Khila* S1 K3 Ñ2 3 V B Ds D1 4 — *Sub-parvan* D4 विष्णुपर्व, T4 आश्चर्यपर्व — *Adhy name* Ś1 K1 2 V2 3 B2 3 Ds गोव्रजगमनम्, K3 4 Ñ V1 Dn D1 2 4 5 गोव्रजीयम्, D3 गोव्रजप्रवेश., D6 G2 3 M4 व्रजप्रवेशः — *Adhy. no* ( figures, words or both ) K3 58, Ñ3 V1 Dn Ds2 D4 60; V3 D3 59, D1 T4 57, T1 G3 5 M4 55, T2 G1 54, G2 4 52, M1–3 51 — *Śloka no* K1 35; Dn Ds D4 32, T2 G1 38.

50

1 B1 om 1$^{ab}$ — $^{a}$) M1 ततस् ( for तत्र ) — $^{b}$) K2 3 V1 3 Dn Ds1 D2 4 T3 4 अभ्यवर्तत ( for अत्य° ) K4 D1 स महानभ्यवर्तत — $^{c}$) Ś1 गोव्रजं, G5 गोवृन्दे ( for गोव्रजे ) — $^{d}$) Ś1 Ñ1 V3 B2 G4 वल्लभत्वं ( for बल्लवत्वं ). — After 1, B2 ins

629* गर्गश्च [ गर्गो ] गोपकुले तत्र वसुदेवप्रचोदितः ।
प्रच्छन्न एव गोपाना सस्कारानकरोत्तयोः ॥
[ Cf 628* ]

2 $^{a}$) T2 G1 बालकौ ( for दारकौ ) D3 T3 धृत- ( for कृत- ) — $^{b}$) T2 G1 व्यवर्धेतां ( for ववृधाते ). Ś1 सुखोचितौ, M1–3 समं च तौ ( for सुख च तौ ) — $^{d}$) N ( except Ś1 D6 ) T1 3 4 G1 3 M4 कनीयान् ( for यवी° ) Ś1 K1 V2 B1 Ds2 D2 3 5 T3 4 च, T2 तत् ( for तु )

3 $^{a}$) B1 एवं, T3 4 नायं ( for मेघ- ) Ś1 -वर्णस्तु, G1 -कृष्णश्च, G2 -पक्षस्तु ( for -कृष्णस्तु ) Ś1 ऽसौ ( for ऽभूद् ). — $^{c}$) K2–4 V1 3 D1 4 T3 4 अवर्धत ( for व्य° ) — $^{d}$) K1 3 Ñ2 V B1 Ds D1–4 T3 4 G4 सागरस्थ, G2 °रोत्थ ( for °रस्य ) Ś1 T2 [अ]म्बरे ( for [अ]म्बुद ) G1 सागरस्थ इवाम्बरे — After 3, D6 S ( except G4 ) ins

630* विस्तरेणाथ वक्ष्यामि बालस्य चरित महत् ।
अवधानपरो भूत्वा शृणु राजन्यदिच्छसि ॥
स तत्र योगमास्थाय दानवाश्चावधीत्किल ॥
कश्चिद्दनो सुतो वीर कृष्णस्य वधकाङ्क्षया ।
नन्दस्य प्रियतामायाच्छाकटं वपुरुद्वहन् ॥ [5]

[ M1–3 om lines 1–2. — ( L. 1 ) D6 [आ]चरित ( for च° ) — ( L 2 ) T4 यथातथम् ( for यदिच्छसि ). — ( L 3 )

यशोदा तं समुत्सृज्य जगाम यमुनां नदीम् ॥ ४
शिशुलीलां ततः कुर्वन्स्वहस्तचरणौ क्षिपन् ।
रुरोद मधुरं कृष्णः पादावूर्ध्वं प्रसारयन् ॥ ५
स तत्रैकेन पादेन शकटं पर्यवर्तयत् ।
न्युब्जं पयोधराकाङ्क्षी चकार च रुरोद च ॥ ६
एतस्मिन्नन्तरे प्राप्ता यशोदा शीघ्रगामिनी ।
स्नाता प्रस्नवदिग्धाङ्गी बद्धवत्सेव सौरभी ॥ ७
सा ददर्श विपर्यस्तं शकटं वायुना विना ।
हाहेति कृत्वा त्वरिता दारकं जगृहे तदा ॥ ८
न सा बुबोध तत्त्वेन शकटं परिवर्तितम् ।
स्वस्ति मे दारकायेति प्रीत्या भीता च साभवत् ॥ ९
किं नु वक्ष्यति ते पुत्र पिता परमकोपनः ।
त्वय्यधःशकटे सुप्ते शकटे च विलोडिते ॥ १०
किं मे स्नानेन दुःस्नानं किं च मे गमने नदीम् ।
पर्यस्ते शकटे पुत्र या त्वा पश्याम्यपावृतम् ॥ ११
एतस्मिन्नन्तरे गोभिराजगाम वनेचरः ।
काषाये वाससी बिभ्रन्नन्दगोपो व्रजान्तिकम् ॥ १२
स ददर्श विपर्यस्तं भिन्नभाण्डघटीघटम् । C 3415 B 2 6 13 P 2 6 13

D6 T2 G1 तत्र स्व ; T4 G2 5 तत्रस्थ , G3 तत्रस्थो ( for स तत्र ) T1 M4 तत्र योग समास्थाय ( for $^{a}$ ) T1 M1–3 om च — ( L 5 ) T1 M1–3 यात ( for आयाच् ) G1 3 नन्दस्य व्रजमायात. ( for $^{a}$ ) ]

4 $^{a}$ ) K4 अधः, D6 T2 G ह्यध , M4 [अ]प्यध ( for त्वध ) — $^{b}$ ) K1 Ñ2 V2 B1 2 ( marg as in text ) 3 Ds D2–4 कर्म- , M3 सुस- ( for पुत्र- ) G5 -गर्विनी ( for गृद्धिनी ) K2 दारकं कर्मगृद्धिनी , T3 4 कदाचित्कर्म कुर्वती — $^{c}$ ) G2 समुत्क्षिप्य ( for °त्सृज्य ) — $^{d}$ ) B1 T2 G1 M4 यमुना- ( for °नां ).

5 $^{b}$ ) T2 G1 5 स्वहस्तौ ( for °स्त- ) — D6 T G M1 2 4 ins after $5^{ab}$ M3 after $6^{ab}$

631* अङ्गुष्ठमास्ये निक्षिप्य पादाभ्या परिचिक्षिपन् ।
हास्यं कुर्वन्शिशु कृष्णो नेत्राभ्यां परिविभ्रमन् ॥
करं करेण संपीडय पादं पादेन पीडयन् ।
अनेकाभिः स लीलाभिर्लोकास्तद्गतमानसान् ।
कल्मषं क्षाळयन्विष्णुस्तद्गतासक्तचेतसाम् ॥ [5]

[ ( L 1 ) T1 -विभ्रमन् , T2 G3 M4 -विक्षिपन् , G1 -वीक्षयन् ( for -चिक्षिपन् ). — ( L. 2 ) T2 G1 हासं ( for हास्य ) M4 त्वपरि- ( for परिवि- ) — ( L 4 ) T1 G3 M1–3 स्व- ( for स ) T3 4 G3 -मानस- ( for °सान् ) T1 M1–3 लोकान्तर्गतमानस- ( for $^{b}$ ). — ( L 5 ) M4 -चेतन ( for °साम् ) ]

— T4 reads $5^{cd}$ twice. — $^{d}$ ) T1 2 G1 पादम् ( for पादाव् ) T4 ( second time ) प्रहारयन् ( for प्रसा° )

6 $^{a}$ ) D6 T2 G1 2. 5 वामेन ; G3 समेन ; M4 स तम् ( for स तत्र ) — $^{b}$ ) V3 D1 शकटं पर्यवर्तत. — After $6^{ab}$, M3 ins 631* D6 T G M1 2 4 ins after $6^{ab}$ M3 cont after 631*

632* अञ्जनेन परिक्षिप्त मुखमुन्नमयन्हरिः ।

— $^{c}$ ) T2 G1 ( *sup lin* ) अनिशं ( hypermetric ) ( for न्युब्ज ) K2 मातु पयोधराकाङ्क्षा — $^{d}$ ) K4 ह ( for the second च ) T2 G1 चकारोच्चैश्च रोदनम्

7 $^{a}$ ) D3 भीता ( for प्राप्ता ) — $^{b}$ ) B Ds D8 T1 2 G M -विक्रमा ( for -गामिनी ) S1 K3 Dn यशोदा भयविक्लवा. — $^{c}$ ) Ñ V B1 3 Dn Ds2 D2 5 प्रस्नव ( for प्रस्नव- ) T2 M1 3 4 -संयुक्ता ( for दिग्धाङ्गी ) D3 जाता प्रस्नवदिग्धाङ्गी ; D6 T1 G2–5 M2 स्नाता प्रस्नवसंयुक्ता — $^{d}$ ) K1 बाल- , K4 तदा ( for बद्ध- )

8 $^{b}$ ) D6 G2 यथा ( for विना ) — $^{c}$ ) B3 Ds T4 त्वरितं ( for °ता ) — $^{d}$ ) S1 दारक प्रत्यगृह्णत

9 $^{a}$ ) D2 त ( for सा ). S1 K1 4 Ñ2 3 V2 B1 Dn Ds D2 4–6 T G3–5 M4 तत्त्वेन , K2 तं येन , K3 V3 B2 3 D1 तत्केन ; Ñ1 V1 D3 केनेद ( for तत्तेन ) — $^{c}$ ) B1. 3 D6 T1 2 G1 2 5 M1–3 दारकस्य , M4 तनयस्य ( for दारकाय ). — $^{d}$ ) Dn1 om भीता K1 तदा ( for च सा ) T4 [अ]वदत् ( for [अ]भवत् )

10 $^{a}$ ) B Ds ते तात , T3 4 पुत्र त्वा ( for ते पुत्र ) — $^{d}$ ) K1 3 4 Ñ2 3 V B Dn Ds D1–5 T3 G4 अकस्माच्च ( B2 °त्तु ) ( for शकटे च ). K2 कस्माच्च प्रविलोडिते ; T4 अकस्मात्प्रविलोकिते

11 $^{a}$ ) Ñ3 M3 दु स्नातं , T1 M4 °ता ( for °नं ). D3 किं मे स्नानेऽधिकं स्नातं , T3 4 किं कार्यं मे नदीस्नाने — $^{b}$ ) G4 नु ( for च ) K2 Ñ2 3 V1 3 B Ds नद्याश्च गमनेन किम् — $^{c}$ ) K1 पर्यस्त- ( for °स्ते ) B2 3 D3 तात ; D6 T2 G M4 वत्स ( for पुत्र ) — $^{d}$ ) K3 Dn D3 5 6 G2–5 M4 या त्वां ; V B2 3 Ds यत्त्वा , B1 यत्ते ; D2 4 G( ed ) यं त्वां ; T1 यदा ( for या त्वा ). M1–3 [अ]नावृतम् ( for [अ]पा° ). K1 यत्त्वां पश्याम्युपागता , K2 पथ पास्याम्यपावृतम् ; T3 4 या त्वां पश्यामि पीडितम्.

12 $^{b}$ ) D2 नन्दगोपः समाययौ — $^{c}$ ) K1 D1. 3. 5 T1. 3 G2 3 काषाय- ; Ñ1 B1 कषाये ( for का° ).

अपास्तधूर्विभग्नाक्षं शकटं चक्रमालि वै ॥ १३
भीतस्त्वरितमागम्य सहसा साश्रुलोचनः ।
अपि मे स्वस्ति पुत्रायेत्यसकृद्वचनं वदन् ॥ १४
पिबन्तं स्तनमालक्ष्य पुत्रं स्वस्थोऽब्रवीत्पुनः ।
वृषयुद्धं विना केन पर्यस्तं शकटं मम ॥ १५
प्रत्युवाच यशोदा तं भीता गद्गदभाषिणी ।
न विजानाम्यहं केन शकटं पातितं भुवि ॥ १६
अहं गता नदीमार्यं चैलप्रक्षालनार्थिनी ।
आगता च विपर्यस्तमपश्यं शकटं भुवि ॥ १७
तयोः कथयतोरेवमब्रुवंस्तत्र दारकाः ।
अनेन शिशुना यानमेतत्पादेन पातितम् ।
अस्माभिः संपतद्भिस्तु दृष्टमेतद्यदृच्छया ॥ १८
आश्चर्यमिति ते सर्वे विस्मयोत्फुल्ललोचनाः ।
स्वस्थाने शकटं चैव चक्रबन्धमकारयन् ॥ १९

13 $^{b}$) V1 -घटीं कटम्, T1 -कटाकुलम्, G3 कटीकटम्, M4 -घटाकुलम् (for -घटीघटम्) — $^{c}$) S1 B2 D5 6 T1 G2 4 विभिन्नाक्षं (for विभग्नाक्षं) T2 G1 3 5 M4 अपास्तधुर्यं भिन्नाक्षं — $^{d}$) Ś1 K2–4 Ñ3 V1 2 B1 3 Dn Ds D2 5 T1 3 -मौलिनम्; K1 Ñ1 V3 D1 3 4 T4 -मालिनम्; D6 T2 G M4 -पाणिना (for -मालि वै)

14 $^{a}$) Ñ1 आक्रम्य, V3 D5 T1 आगत्य (for °म्य). — $^{b}$) V1 D1 चाश्रु-, V2 T2 G1–4 M सास्र (for साश्रु-) — $^{d}$) Ñ2 V3 D6 T4 G2–4 ब्रुवन्, T2 G1 5 अब्रवीत् (for वदन्).

15 $^{a}$) T3 स्तन्यम् (for स्तनम्) Ñ2 3 V B1 3 Ds D1. 5 G3 आलोक्य (for आलक्ष्य) — $^{b}$) T4 ऽभवत् (for ऽब्रवीत्). B2 (marg) D2 वच, D3 इदम्, D6 T1 G2 M4 तत., T2 G1. 3–5 तदा (for पुन) M1–3 पुत्रं स्वस्थोऽभवत्तत. — $^{d}$) G2 भुवि (for मम) M4 शकटं पातितं भुवि

16 M4 om (hapl) 16 — $^{b}$) T2 भीतं (for भीता). — $^{c}$) K2 [अ]भि-; Ñ1 V2 B1 3 Ds2 हि (for वि-) — $^{d}$) K1 शकटं परिवर्तितम्, K2–4 Ñ V B1 2 (marg) 3 D (except D6) T3. 4 °ट भुवि पा(V2 विनिपा-, Ds2 नु विपा)तितम्, B2 °टं तु विलोडितम्

17 Ś1 M3 om (hapl) 17 — $^{a}$) B1 T2 G गत्वा (for गता) K1 अहं नदीगता येन, K2–4 Ñ V B2 Dn D1–5 T3. 4 अहं नदीं ग(Ñ1 V1 D1 2 4 °दीग)ता सौम्य, D6 अहं गत्वा नदीमार्गं — $^{b}$) T2 G M4 जले, T3 वस्त्र- (for चैल-) — $^{c}$) T2 G1 4 आजगाम (for आगता च) B1 [अ]हं वि-, Ds भुवि (for च वि-). — $^{d}$) D3 विभो (for भुवि).

18 $^{a}$) T2 G1 तु ब्रुवतोर् (for कथयतोर्) — $^{b}$) K3 4 Ñ3 V B2 (marg as in text) Dn D1. 2 4 5 T3 4 बालकाः (for दारकाः) K2 Ñ2 अब्रुवंस्तत्र (Ñ2 °स्य) बालकाः, D3 अवदंस्तत्र बालका — $^{d}$) Ś1 पीडितम्, K1 3 4 Ñ3 (marg) B2 (marg as in text) Dn D1–4 लोडि°, K2 Ñ1 D5 G2 पाटि°, V1 लोलि°, V2 ताडि° (for पाति°) — $^{e}$) N (except Ś1 D6) T3 4 G4 च (for तु) — $^{f}$) Ds2 D5 यथेच्छया (for यदृ°) — After 18, K3 V2 Dn Ds2 D2. 4 5 (marg) T2 ins

633* नन्दगोपस्तु तच्छ्रुत्वा विस्मयं परम ययौ ।
प्रहृष्टश्चैव भीतश्च किमेतदिति चिन्तयन् ।
न च ते श्रद्दधुर्गोपा सर्वे मानुषबुद्धय ॥

[(L 3) D4 बालक- (for मानुष-)]

19 Ś1 om $19^{a}$–$20^{b}$ G5 reads $19^{ab}$ twice — $^{a}$) D3 सर्वे ते (by transp), D6 T1 2 G1–4 5 (both times) M4 मेनेऽसौ, M1–3 मेने स — $^{b}$) T2 G1 2 4 5 (both times) M -लोचन (for °ना) — $^{c}$) K1 4 Ñ1 3 V1. 2 Dn D1 4–6 T1 3 4 G3. 4 M4 स्वे (for स्व-) K2 Dn D1. 2 4 5 T3 स्थाप्य, V1 om; D6 T1 2 G M चक्रे (for चैव). Ñ2 V3 B Ds D3 स्वे स्था(D3 स्वस्था)ने शकटस्याथ — $^{d}$) K4 चक्रे बन्धम्, D1 सर्वभाण्डम् (for चक्रबन्धम्). D6 T2 G1 2 4 5 बद्धधुर्यं यथाविधि, T1 M1–3 बन्धं चक्रे य(M3 °क्रुर्य)-थाविधि, G3 कृत्वा धुर्यं यथाविधि, M4 बद्धचक्रं यथाविधि. — After 19, D6 S G(ed) ins

634* नन्दोऽङ्कमेनमारोप्य भूरेणुं परिगृह्य च ।
प्रदक्षिणं शिर. कुर्वन्मन्त्रमेतज्जजाप ह ॥
विष्णुस्ते पूर्वत पातु रुद्रो रक्षतु दक्षिणम् ।
ब्रह्मा च पश्चिमं पायात्स्कन्दो रक्षत्वथोत्तरम् ॥
उपरिष्टात्तथा सूर्यं पायाच्चाधश्च वासुकि. । [5]
पायाच्च त्वामथो वत्स शिष्टा काष्ठा समीरणः ॥
स्वस्तिं करोतु भगवान्पिनाकी वृषभध्वज ।
गावो रक्षन्तु सर्वत्र भूमिं पातु सदाशिव ॥
एवमुच्चार्य नन्दस्तु कृष्णं पस्पर्श सर्वश ।
स एव मन्त्रो बालानां रक्षायै परिकीर्तित ॥ [10]

[(L. 2) T1 M1–3 कृत्वा (for कुर्वन्). T2 4 G1 एत (for एतज्) D6 जगाद (for जजाप) —(L 3) T3 ते पातु (for रक्षतु) —(L 4) T3 G2 पातु (for पायात्) — G4 om. lines 5–8 —(L 5) T2 G1 नागश्, T4 पादौ; G2 त्वाधश्, M4 वायुश् (for चाधश्) D6 त्वध. पायाच्च वासुकि; T3 पायात्पादौ च पावक (for $^{b}$) — G(ed) om line 6 —(L. 6) T3 चोर्ध्वमधो, G5 तु त्वामधो (for च त्वामथो) —(L 7)

धात्री कंसस्य भोजस्य पूतनेति परिश्रुता ।
ततोऽर्धरात्रसमये शकुनिः प्रत्यदृश्यत ॥ २०
व्याघ्रगम्भीरनिर्घोषा व्याहरन्ती पुनः पुनः ।
निलिल्ये शकटाक्षे सा प्रस्नवोत्पीडवर्षिणी ॥ २१
ददौ स्तनं च कृष्णाय तत्र सुप्तजने निशि ।
तस्याः स्तनं पपौ कृष्णः प्राणैः सह ननाद च ।

C 3427
B2 6 36
P2.6 26

T1 करोतु स्वस्ति भगवान् ( for $^{a}$ ). T1 केशवो गरुडध्वज , M2 3 पिनाकी गोवृषध्वज ( for $^{b}$ ). — ( L 8 ) T3 गोपा ( for गावो ) T2 4 G1 भूमौ ( for भूमि ) G( ed ) भूमि पातु त्रिविक्रम ( for $^{b}$ ). — ( L 9 ) G4 एवमुच्चार्यमाणस्तु ( for $^{a}$ ) T1 G3 M4 सर्वत॰, T3 4 पाणिना ( for सर्वश ). — ( L 10 ) D6 T1 G3 M1–3 एष, G2 सर्व- ( for एव ) G2 M4 च प्र- ( for परि- ) G(ed.) -कल्पित ( for कीर्तित ) G3 M1 2 रक्षायै च प्रतिष्ठित ( for $^{b}$ ). ]

— K1 2 Ñ2 3 V B D1–5 ins an addl colophon after 19, T3 ins the same after 634*

[ *Mention of Khila* Ñ3 V1 3 B D1 3 — *Sub-parvan* K1 Ñ3 V1 2 B2 3 D2–5 बालचरितम्. — *Adhy name* K1 Ñ3 V1. 2 B D2–5 शकटभङ्ग , V3 शकटभञ्जनम्; D1 शकटपरिवर्तनम्. — *Adhy no.* K1 20, V1 D4 61; D1 58; D3 60, T3 63. ]

— K1. 2 Ñ2 3 V B D1–5 T3 ins after the addl colophon K3. 4 Ñ1 Dn Ds after 19 D6 T1 2 4 G M4 cont. after 634*

635* वैशंपायन उवाच ।
कस्यचित्त्वथ कालस्य शकुनीवेषधारिणी ।

[ Ñ1 T1. 2 G1–3 5 M4 om the ref T4 कदाचित् ( for कस्य° ) D3 -चारिणी ( for -धा° ) D6 T1 2 G1 2 5 M4 शकुनेश्चाङ्गधारिणी ( for $^{b}$ ) ]

20 Ś1 om 20$^{ab}$ ( cf v 1 19 ) — $^{a}$ ) M1 2 राज्ञस्तु ( for भोजस्य ) K2 V2 धात्री भोजस्य कंसस्य ; M3 या धात्री कंसराजस्य — $^{b}$ ) K1 प्रति- ( for परि- ) T3 4 पूतना चाप्यदृश्यत. — After 20$^{ab}$, K2 Ñ2 3 V B Dn Ds D4–6 T G M4 ins

636* पूतना नाम शकुनी घोरा प्राणभयंकरी ।
आजगामार्धरात्रे वै पक्षौ क्रोधाद्विधुन्वती ॥

[ ( L. 1 ) D6 शकुनिर् ( for °नी ) Ds पूतना शकुनी नाम ( for $^{a}$ ) V1 2 B2 Ds D4 6 T2 G1 प्राणि- ( for प्राण- ). T1. 4 G4 -भयकरा ( for °री ) T3 G3. 5 M4 घोरा प्राणिभयंकरा ( for $^{b}$ ) — ( L 2 ) K2 V1 D4 T3 [अ]र्धरात्र ( for °रात्रे ) T2 G1 केशाश्च, G3 क्रोड च, G5 क्रोधाच्च ( for °द्वि- ) K2 तन्वती ( for -धुन्वती ). T1 G2 राक्षसी क्रोधरूपिणी ( for $^{b}$ ) ]

While, D2 ins after 20$^{ab}$

637* तस्यै स्तनं दुर्जरवीर्यमुल्बणं
घोराङ्कमादाय शिशोर्ददावथ ।
गाढं कराभ्यां भगवान्प्रपीड्य
प्राणैः समं रोषसमन्वितोऽपिबत् ॥
सा मुञ्च मुञ्च बालमिति प्रभाषिणी
निपीड्यमानाखिलजीवमर्मणि ।
विवृत्य नेत्रे चरणौ भुजौ मुहु-
र्विक्लिन्नगात्रा क्षिपती रुरोद ह ॥
तस्याः स्वनेनातिगभीररंहसा
साद्रिर्मही द्यौश्च चचाल सग्रहा ।
रसा दिशश्च प्रतिनेदिरे जनाः
पेतुः क्षितौ वज्रनिपातशङ्कया ॥
निशाचरीत्थं व्यथितस्तना व्यसु-
र्विस्तार्य केशांश्चरणौ भुजावपि ।
प्रसार्य गोष्ठे निजरूपमाश्रिता
वज्राहतो वृत्र इवापतन्नृप ॥
पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् ।
चूर्णयामास राजेन्द्र महदासीत्तदद्भुतम् ॥
ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम् ।
गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ।
अन्धकूपगभीराक्षं पुलिनारोहभीषणम् ॥
बद्धसेतुभुजोर्वङ्घ्रिशून्यतोयह्रदोदरम् ॥
बालं च तस्या उरसि क्रीडन्तमकुतोभयम् ।
गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसम्भ्रमाः ॥
यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः ।
रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः ॥
गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकम् ।
रक्षां चक्रुश्च शकृता द्वादशाङ्गेषु नामभिः ।

[ =( var ) Bhāgavata P 10 6 9–16, 18–20 ]

— $^{c}$ ) Ś1 D1 -रात्रि- ( for रात्र- ) — $^{d}$ ) K Ñ V B Dn Ds D1 2 4–6 T3 4 G4 पूतना ( for शकुनि ). D3 पूतना सम्प्रदृश्यते.

21 $^{a}$ ) K4 B1 2 Dn D5 T2 3 G1 5 M4 -निर्घोष ( for °षा ) — $^{b}$ ) M4 व्याहरन्तीं ततस्ततः — $^{c}$ ) Ś1 D1 शकटाक्षी ( for °क्षे ) D6 T1 2 G2–5 M4 तु ( for सा ) K3 B1 Dn D5 T3 4 निलिल्ये शकटस्याक्षे; G1 निलिल्ये शकटाक्षी तत्. — $^{d}$ ) D1 धर्मिणी ( for -वर्षिणी ) Ś1 K1–3 Ñ2 V2 B1 Dn Ds D3 5 T1 3 4 G5 प्रस्नवोत्पीडवार्षिणी; V1 प्रस्नवापीड°; V3 प्रस्नवोत्पीडधारिणी, D6 प्रश्रवोत्पीडकर्षिणी, G4 प्रस्नुतोत्पीडवर्षिणी

22 $^{a}$ ) D4 स्तनौ, M2 स्तन्यं ( for स्तनं ) K4 B1. 3 Ds सा, G2 तु ( for च ) Ś1 K4 कृष्णस्य ( for कृष्णाय ) — $^{b}$ ) K2. 3 Ñ V1 B Dn Ds1 D1–5 T1 4 M4 तस्मिन्सुप्ते, K4 तत सुप्त॰, V3 Ds2 T3 तस्मिन्सुप्त- ( for तत्र सुप्त- ). V2

छिन्नस्तनी सा सहसा पपात शकुनी भुवि ॥ २२
तेन शब्देन वित्रस्तास्ततो बुबुधिरे जनाः ।
स नन्दगोपो गोपाश्च यशोदा च सुविक्लवा ॥ २३
ते तामपश्यन्पतितां विसंज्ञां विपयोधराम् ।
शकुनिं निहतां भूमौ वज्रेणेव विदारिताम् ॥ २४
इदं किं न्विति संत्रस्ताः कस्येदं कर्म चेति च ।
नन्दगोपं पुरस्कृत्य गोपास्तं पर्यवारयन् ॥ २५
गतेषु तेषु गोपेषु विस्मितेषु यथागृहम् ।
यशोदां नन्दगोपस्तु पप्रच्छागतसंभ्रमः ॥ २६
कोऽयं विधिर्न जानामि विस्मयो मे महानयम् ।
पुत्रस्य मे भयं भीरु भीरुत्वं समुपागतम् ॥ २७
यशोदा त्वब्रवीद्भीता नार्य जानामि किं न्विदम् ।
दारकेण सहानेन सुप्ता शब्देन बोधिता ॥ २८
यशोदायामजानन्त्यां नन्दगोपः सबान्धवः ।
कंसाद्भयं चकारोग्रं विस्मयं च जगाम ह ॥ २९

इति श्रीहरिवंशे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

तस्मिन्सुप्ते व्रजे निशि —$^{c}$) K$_4$ अस्या ( for तस्या ) Ñ$_2$ V$_3$ D$_3$ M$_3$ स्तनौ , D$_1$ T$_3$ M$_{2\ 4}$ स्तन्यं ( for स्तनं ) —$^{d}$) K$_3$ Ñ$_2$ V$_{1\ 3}$ Dn D$_{2-4}$ T$_4$ विनद्य , Ñ$_3$ विभिद्य ( for ननाद ) K$_{1-3}$ Ñ$_2$ V$_3$ D$_{1-4}$ सा ( for च ) — D$_6$ T$_{1\ 2}$ G M ins after 22$^{cd}$ T$_3$ after 22

638* स्तन्यं तद्विषसंमिश्रं रस्यमासीज्जगद्गुरो ॥
पतन्ती तां तु सदृश्य शकुनी भयविक्लवाम् ।
प्रयाणे शीघ्रचपला वाशमानां च विस्वरम् ।
पादाङ्गुष्ठेन ता कृष्णश्चक्राक्रान्तामकारयत् ॥
चक्राक्रान्ता तु शकुनी पपात च ममार च । [5]
ननाद च महानाद पुन पुनरसौ हरि ॥

[ T$_3$ reads line 1 after 22$^{cd}$ —( L 1 ) T$_3$ व्यस्त ( for स्तन्य ) M$_4$ -मिश्र स ( for -संमिश्र ) T$_{1-3}$ G$_{1\ 4\ 5}$ M$_4$ रसम् ( for रस्यम् ) G$_2$ रसमासीज्जगत्पते ( for $^{b}$) —( L 2 ) D$_6$ पतिता ता , M$_{1-3}$ सपतन्तीं ( for पतन्तीं ता ) — T$_3$ M$_{1\ 2}$ om line 3 —( L 3 ) T$_1$ G$_{1-3}$ क्रोशमाना ( for वाश° ) M$_4$ क्रोशमाना च विस्वनाम् ( for $^{b}$) — T$_3$ M$_{1-3}$ om line 5 —( L 5 ) D$_6$ T$_1$ G$_{1\ 3}$ सा पपात ( for पपात च ) —( L 6 ) G$_1$ सु- ( for च ) ]

—$^{e}$) D$_6$ T$_1$ G M भिन्नस्तनी ( M$_{1\ 3}$ °ना ) ( for छिन्न° ) Dn छिन्नस्तना तु सहसा —$^{f}$) Ś$_1$ T$_2$ G$_1$ सहसा ( for पपात ) G$_2$ विहता ( for शकुनी ) G$_3$ M$_{1-3}$ पपात च ममार च

23 $^{b}$) Ś$_1$ तया , K$_{1\ 3\ 4}$ Ñ$_{1\ 3}$ V$_1$ Dn D$_{1-3\ 6}$ T$_{1-3}$ G$_{2-5}$ भयात् , M$_4$ वधात् ( for जना ) —$^{c}$) K$_{3.\ 4}$ Ñ V B$_{1\ 2}$ Dn D$_{1\ 5}$ T$_{3\ 4}$ गोपा वै , D$_3$ गोपाला ( for गोपाश्च ). D$_6$ नन्दगोपश्च गोपोऽयं , T$_2$ G M$_4$ नन्दगोपश्च गोपाश्च —$^{d}$) T$_4$ सा ( for च ). G$_4$ -विह्वला ( for -विक्लवा ).

24 $^{b}$) T$_{1\ 2}$ विसज्ञामपयोधराम्. —$^{c}$) K Ñ V B$_{1\ 3}$ Dn Ds D$_{1-5}$ T$_{1\ 3\ 4}$ G$_3$ पूतना पतिता भूमौ , B$_2$ पतितां पूतनां भूमौ , T$_2$ G$_1$ शकुनीं च हतां भूमौ —$^{d}$) K$_{2\ 3}$ Ñ$_{2,\ 3}$ V$_{1\ 3}$ B$_3$ Ds D$_{2\ 5}$ [अ]व- ( for वि- ) Ś$_1$ निसूदिताम् ( for विदारिताम् )

25 $^{a}$) K$_1$ D$_6$ T$_1$ G$_{1-3\ 5}$ M$_4$ इद किं त्वि( K$_1$ त्व )तिसभ्रान्ता , K$_2$ इदं किं त्विति वित्रस्ता —$^{b}$) K$_{2-4}$ Ñ$_{1\ 2}$ V$_{1\ 3}$ D$_{1-3\ 5}$ इत्यपि , V$_2$ B Dn Ds T$_{3\ 4}$ चेत्यपि , D$_4$ वेत्यपि , M$_{1-3}$ चेति ते ( for चेति च ) —$^{d}$) Ś$_1$ गोप स- , K Ñ V B Dn Ds D$_{1-5}$ T$_{3\ 4}$ G$_3$ गोपास्ते ( for °स्त ) — After 25, N ( except Ś$_1$ Ñ$_1$ ) S ( except M$_{1-3}$ ) ins

639* नाध्यगच्छन्त च तदा हेतु तत्र कदाचन ।
आश्चर्यमाश्चर्यमिति ब्रुवन्तोऽनुययुर्गृहान् ॥

[( L 1 ) K$_4$ D$_6$ T$_{1\ 2}$ G M$_4$ नाध्यगच्छत्तदा हेतु , D$_2$ °गच्छस्तदा ते तु , D$_3$ T$_{3\ 4}$ °गच्छस्तदा तत्र K$_4$ तत्र कश्चित् , D$_1$ हेतुरत्र , D$_3$ हेतु ते तु , D$_6$ T$_2$ G$_4$ नन्दस्तत्र , T$_1$ M$_4$ नन्दगोप ( for हेतुं तत्र ) T$_1$ कथचन ( for कदा° ) T$_3$ निपातं त कथचन ( for $^{b}$) —( L 2 ) K$_1$ D$_{1-3\ 6}$ T$_{1\ 2}$ G$_{1-3\ 5}$ M$_4$ ऽथ ययुर् , V$_{1\ 2}$ निर्ययुर् ( for ऽनुय° ) ]

26 $^{a}$) Ñ$_2$ V$_1$ B$_1$ [ए]तेषु ( for तेषु ) K$_1$ तेषु गतेषु गोपेषु —$^{b}$) D$_5$ यथासुखम् , D$_6$ T G °गतम् ( for °गृहम् ) —$^{d}$) Ś$_1$ Ñ$_{1\ 3}$ B$_{2\ 3}$ Dn$_1$ T$_{1\ 4}$ G$_5$ M$_4$ गत- ( for [आ]गत- ) K$_3$ पप्रच्छ गतविभ्रमः

27 $^{b}$) T$_2$ G$_1$ विस्मयोऽथ , T$_4$ °यं तु ( for °यो मे ). —$^{c}$) Ś$_1$ D$_6$ T$_2$ G$_{4\ 5}$ M$_4$ भये , K$_2$ कथं , M$_{1\ 2}$ महद् ( for भयं ) Ñ$_1$ Ds D$_3$ तीव्रं ( for भीरु )

28 $^{a}$) K$_2$ T$_{3\ 4}$ च ( for तु ) Ś$_1$ दीना , K$_2$ वाक्यं ( for भीता ) —$^{b}$) K$_4$ Ñ$_3$ V$_{1\ 2}$ B$_2$ ( marg ) D$_{2\ 3}$ G$_2$ M$_4$ [अ]हं ( for [आ]र्यं ). Ś$_1$ त्विति , M$_4$ न्विति ( for न्विदम् ). K$_2$ भीता नो वेद्मि किं त्विदम् —$^{d}$) K$_4$ स्वप्नेन ( for शब्देन ). K$_2$ घोषिता , T$_2$ मोहिता ( for बोधिता )

29 $^{c}$) Ś$_1$ शङ्कमानो , D$_4$ चकारार्यं , M$_{1-3}$ तदा ( M$_3$ °तो ) मेने ( for चकारोग्र ) —$^{d}$) M$_4$ चकार ( for जगाम ). Ś$_1$ हि ;

# ५१

वैशंपायन उवाच ।
काले गच्छति सौम्यौ तौ दारकौ कृतनामकौ ।
कृष्णसंकर्षणौ चोभौ रिङ्गिणौ समपद्यताम् ॥ १
तावन्योन्यगतौ बालौ बाल्यादेवैकतां गतौ ।
एकमन्त्रधरौ कान्तौ बालचन्द्रार्कवर्चसौ ॥ २
एकनिर्माणनिर्युक्तावेकशय्यासनाशनौ ।
एकवेषधरावेकं पुष्यमाणौ शिशुव्रतम् ॥ ३
एककार्यान्तरगतावेकदेहौ द्विधा कृतौ ।
एकचर्यौ महावीर्यावेकस्य शिशुतां गतौ ॥ ४
एकप्रमाणौ लोकानां देववृत्तान्तमानुषौ ।
कृत्स्नस्य जगतो गोपौ संवृत्तौ गोपदारकौ ॥ ५
अन्योन्यव्यतिषक्ताभिः क्रीडाभिरभिशोभितौ ।
अन्योन्यकिरणग्रस्तौ चन्द्रसूर्याविवाम्बरे ॥ ६
विसर्पन्तौ तु सर्वत्र सर्पभोगभुजावुभौ ।
रेजतुः पांशुदिग्धाङ्गौ दृप्तौ कलभकाविव ॥ ७
क्वचिद्भस्मप्रदिग्धाङ्गौ करीषप्रोक्षितौ क्वचित् ।

C 3443
B 2 7 8
P 2. 7. 8

T4 च ( for ह )

Colophon om in T3 4 — *Mention of the Epic* K3 Ñ2 — *Mention of Khila* S1 K1 3 Ñ2 3 V B Ds D1 6 — *Adhy name* N पूतनावध — *Adhy no* ( figures, words or both ) K3 D1 59, Ñ3 V1 D4 62, V3 Dn Ds2 D3 61, T1 G3 M4 56, T2 G1 55, G2 4 53, G5 63, M1–3 52 — *Śloka no* Dn Ds 34, D1 59

## 51

1 $^{a}$) N ( except Ś1 D2 6 ) तौ सौम्यौ ( by transp ), M3 सौम्यौ तु — D6 T2–4 G1 2 4 5 M3 4 ins after $1^{ab}$ M2 after $10^{ab}$

640* पञ्च संवत्सरान्प्राप्तौ शोभयानौ व्रजं मुहुः ।

[ T3 -षड्वत्सरान् ( for सव° ) T3 4 M2 3 जगत् ( for व्रज ) ]

— $^{c}$) B1 2 ( marg ) Ds D1 3 6 T3 G1 2 5 M1–3 कृष्ण सकर्षणश्चो( D5 °ण उ )भौ — $^{d}$) Ś1 रूपिणौ, K3 D3 रिङ्गणौ, Ñ3 ( marg as in text ) V3 D4 6 T2 4 G1 5 M4 रङ्गिणौ ( for रि° ) T1 रिङ्गिणौ समवर्धताम्

2 $^{a}$) K3 याव् ( for ताव् ) G2 अन्योन्यं ( for °न्य- ) Ś1 -मयौ बालौ, D3 बलौ बाल्ये ( for गतौ बालौ ) — $^{b}$) K1 D6 T1 2 G1–3 5 M1–3 बाल्य ( for बाल्याद् ) D5 देवाविव च गां गतौ — After $2^{ab}$, K1 D3 read $5^{a}$ and $5^{d}$ repeating them in their proper place — $^{c}$) K2–4 Ñ V B D ( except D6 ) T1 3 4 G4 M4 -मूर्ति- ( for -मन्त्र- ) T3 4 जातौ ( for कान्तौ ) — $^{d}$) K1 D2 3 बालौ ( for बाल- ) Ś1 -तेजसौ ( for -वर्चसौ )

3 $^{a}$) K2–4 Ñ V B Dn Ds1 D1–5 T3 4 G5 M4 निर्मुक्ताव्, D6 -युक्ताश्च, M1–3 संयुक्ताव् ( for -निर्यु° ) — $^{b}$) K3 एकशय्यासनागतौ, Ñ2 D3 T1 2 G M4 °नावुभौ — T3 repeats $3^{cd}$ after $4^{ab}$ — $^{c}$) T3 ( both times ) 4 -पुष्प- ( for -वेष- ) D3 T3 ( both times ) एतौ ( for एकं ) — $^{d}$) K3 D3 शिशुव्रतौ, Ñ3 ( marg ) व्रजम् V1 T1 शिशू व्रजम्; B2 ( marg ) शुभव्रतम् ( for शिशु° )

4 K3 om ( hapl ) 4 — $^{a}$) G1 कृताव् ( for -गताव् ) — After $4^{ab}$, T3 repeats $3^{cd}$, and om $4^{cd}$ — $^{c}$) K1 2 4 Ñ V B1 3 D1 2 4 5 T4 एककार्यौ, T2 G1 °शय्यौ ( for °चर्यौ ). D3 महाचर्याव् ( for °वीर्याव् ) — $^{d}$) Ś1 एकधा ( for °स्य ) — After 4, K2 reads $6^{c}$–$7^{b}$.

5 K1 D3 read $5^{a}$ and $5^{d}$ for the first time after $2^{ab}$ — $^{a}$) K1 D3 ( both first time ) पालौ च ; T4 -प्रमाणं ( for °णौ ) — $^{b}$) D5 -वृत्ता तु ( for वृत्तान्त- ) D6 T1 G2–4 M देवौ देव( M1 2 लोक हितैषिणौ, T2 G1 देवौ देवहितव्रतौ — $^{d}$) K4 संवृद्धौ, T1 सद्वृत्तौ ( for संवृत्तौ ). T2 G1 -दारकै .

6 T4 om $6^{ab}$ — $^{a}$) K2 T3 अन्योन्यं ( for °न्य- ) T2 G1 अन्योन्यमनुषक्ताभि — $^{b}$) Ś1 K1 V2 उप-, T1 G1 अति- ( for अभि- ) — K2 reads $6^{c}$–$7^{b}$ after 4 — $^{d}$) T4 सोम- ( for चन्द्र ) D1 [ऊ]दितौ ( for [अ]म्बरे )

7 For the sequence in K2, cf v 1 6 — $^{a}$) D3 विसर्पितौ ( for °र्पन्तौ ) K2 Ñ3 V1 च ( for तु ) T3 तौ तत्र ( for सर्वत्र ) — $^{b}$) K3 सर्पराज-, Ds1 D6 M4 सर्वभोग- ( for सर्प° ) M1–3 -भुजोपमौ ( for -भुजावुभौ ) — $^{c}$) Ñ1 चेरतु ( for रेजतुः ) K2 पङ्क ( for पांशु- ) — Ś1 om ( hapl ) $7^{d}$–$8^{a}$ — $^{d}$) V2 दृप्तौ B1 तप्तौ, G1 दीप्तौ ( for दृप्तौ ) T4 सुदृप्तौ कलभाविव.

8 Ś1 om $8^{a}$ ( cf. v 1 7 ) — $^{a}$) K2, 4 B2 D5 T1, 2, 4 M4 -प्रदीप्ताङ्गौ, T2 G1 3 5 -विदिग्धाङ्गौ ( for -प्रदि° ). — D6

दृष्ट्वा कृष्णं ह्रदगतं क्रीडन्तं शिशुलीलया ।
सधूमाः पन्नगेन्द्रस्य मुखान्निश्चेरुरर्चिषः ॥ ९
सृजता तेन रोषाग्निं समीपे तीरजा द्रुमाः ।
क्षणेन भस्मसान्नीता युगान्तप्रतिमेन वै ॥ १०
तस्य पुत्राश्च दाराश्च भृत्याश्चान्ये महोरगाः ।
वमन्तः पावकं घोरं वक्त्रेभ्यो विषसंभवम् ।
सधूमाः पन्नगेन्द्रास्ते निष्पेतुरमितौजसः ॥ ११
प्रवेशितश्च तैः सर्पैः स कृष्णो भोगबन्धनम् ।
निर्यत्नचरणाकारस्तस्थौ गिरिरिवाचलः ॥ १२
ददंशुर्दशनैस्तीक्ष्णैर्विषोत्पीडजलाविलैः ।
ते कृष्णं सर्पपतयो न ममार च वीर्यवान् ॥ १३

एतस्मिन्नन्तरे भीता गोपालाः सर्व एव ते ।
क्रन्दमाना व्रजं जग्मुर्बाष्पसंदिग्धया गिरा ॥ १४
एष मोहं गतः कृष्णो मग्नो वै कालियह्रदे ।
भक्ष्यते सर्पराजेन तदागच्छत माचिरम् ॥ १५
नन्दगोपाय वै क्षिप्रं वल्लवाय निवेद्यताम् ।
एष ते कृष्यते पुत्रः सर्पेणेति महाह्रदे ॥ १६
नन्दगोपस्तु तच्छ्रुत्वा वज्रपातोपमं वचः ।
आर्तस्खलितविक्रान्तस्तं जगाम ह्रदोत्तमम् ॥ १७
सबालयुवतीवृद्धः स च संकर्षणो युवा ।
आक्रीडं पन्नगेन्द्रस्य जनस्तं समुपागमत् ॥ १८
नन्दगोपमुखा गोपास्ते सर्वे साश्रुलोचनाः । C 3671 B 2. 12 20 P 2 12. 20

ततोऽर्चिः ( G2 °दार्चि )ष , T2 G1 3 5 M1 2 ( *inf lin* as in text ) 4 निश्चेरु पावका°

10 a) K2 4 M4 [अ]नेन ( for तेन ) — b) K2 ( marg ) म्रियन्ते ( for समीपे ) — c) K2 Ds T3 भस्मता ( for °सान् ) — After 10, K3 4 D1 read 7cd

11 a) B2 भृत्याश्, G(ed) दासाश् ( for दाराश् ) — b) B2 दाराश् ( for भृत्याश् ) — d) K1 मुखेभ्यो ( for वक्त्रेभ्यो ) — e) K2–4 Ñ V B Dn Ds D1 3 5 T1 3 4 G3 4 M3 4 सधूमं ( for °मा ) Ś1 T3 तु ( for ते ) — f) Some Mss निपेतुर् ( for निष्पे° )

12 a) Ś1 प्रवेष्टितैश्, D2 4 °ष्टितश्, M2 3 आवेष्टितश् ( for प्रवेशि° ) D3 4 सर्वै ( for सर्पैः ) — b) K2 कृष्णो नाग-, D1 कृष्णोरग- ( for कृष्णो भोग- ) D4 बन्धनै , D6 °न , M2 3 बन्धित ( for -बन्धनम् ) T1 M1 2 ( *inf lin* ) 4 कृष्णो भोगस्य बन्धनम् — c) T2 G1 3 5 निर्युक्त- ( for निर्यत्न ) D3–5 निर्धुक्तबाहु( D3 °हस्त )चरणस्

13 a) N ( except Ś1 D6 ) T4 G4 अदशन् ( for ददशुर् ) — b) Ś1 ( *sup lin* ) -जलाविला ( for °विलैः ) M2 3 विषोत्पीडानलाविलैः — K3 om 13cd — c) K2 तान्कृष्णः पन्नगान्सर्वान् — d) Ñ1 D6 T1 2 G M4 पपात ( for ममार ). Ś1 ( *sup lin* ) K4 D5 G4 स ( for च ) M1–3 ददंशुर्दशनैर्भृशम् — After 13, D6 S ( except T3 4 ) G(ed) ins

678* संदश्यमानो दशनैर्न चचाल स केशवः ।
व्यचरत्सुचिरं कालं कृष्णो वै कालिये ह्रदे ॥

[ ( L 1 ) D6 च ( for स ) M2. 3 वीर्यवान् ( for केशव ). — ( L 2 ) T1 ननन्द , M ननर्त ( for व्यचरत् ) T1 G3 M2. 3 कालिय , T2 G1. 2. 4 5 M1 4 °य- ( for °ये ) ]

14 b) K2 च ( for ते ) — c) T2 व्रजे ( for व्रजं ). — d) K Ñ2 3 V B1 2 ( marg as in text ) D ( except D6 ) T3 4 G3 गद्गदया ( for -संदिग्धया )

15 Before 15, D5 ins गोपा ऊचुः — a) Ś1 D4 मोहा- ( D4 °ह )गत , D6 G2 M2 3 मोहाद्गत , T1 2 G1 3 5 मोहाद्धरि ( for मोहं गत ) V1 विष्णुर् ( for कृष्णो ) — b) Ś1 निमग्न ( for मग्नो वै ) K2–4 Ñ1 3 B D T1 4 G कालिये ( for °य ) K1 निमग्न कालिये ह्रदे — c) Ś1 भोक्ष्यते ( for भ° ). — d) D5 आगच्छन्तु ( for °च्छत )

16 b) K3 G4 वल्लभाय , Ñ3 V2 B Ds D5 G(ed) सबलाय , V1 शरणाय ( for वल्लवाय ) T3 न्यवेदयन् ( for निवेद्यताम् ) T4 प्रलम्बमल्लिकागयम् — Before 16cd, K4 ins. गोपा ऊचुः — c) D3 T1 3 G M1 2 ( *inf lin.* as in text ) 3 4 क्लिश्यते , T4 नाशित ( for कृष्यते ) K4 D5 कृष्ण ( for पुत्र ) — d) Ś1 M3 जलह्रदे , M2 ( *inf lin* ) जजल्पिरे ( for महाह्रदे ) D6 T1 2 G M1 2 4 सर्पेणातिबलीयसा

17 a) D3 च ( for तु ) — c) T1 G3–5 अन्त- ( for आर्त- ) K2 4 Ñ2 V3 Dn D1 2 -त्वरित ; T3 4 -चलित- ( for -स्खलित ) Ś1 अन्तस्त्वरितमागम्य — d) D3 स ( for तं ). V1 महाह्रदम् ( for ह्रदोत्तमम् ).

18 a) M2 3 सबालयुववृद्धश्च — c) T1 आक्रीडन्तं पन्नगेन्द्र — d) V2 3 B1 2 D5 जलस्थं ( for जनस्तं ) M2 ( *inf lin* ) 3 जनस्तं समुपाद्रवन्.

19 a) B1 3 -गोपादयो ( for -गोपमुखा ) — b) Ś1 सर्वे ते ( by transp ) T2 G M2 3 सास्र- ( for साश्रु- ) — After 19ab, K1 D2 3 read 20cd, while D6 T1 2 G1–3. 5 M1 2. 4 ins after 19ab .

हाहाकारं प्रकुर्वन्तस्तस्थुस्तीरे ह्रदस्य वै ॥ १९
व्रीडिता विस्मिताश्चैव शोकार्ताश्च पुनः पुनः ।
केचित्तु कृष्ण हाहेति हा धिगित्यपरे पुनः ।
अपरे हा हताः स्मेति रुरुदुर्भृशदुःखिताः ॥ २०
स्त्रियश्चैव यशोदां तां हा हतासीति चुक्रुशुः ।
या पश्यसि प्रियं पुत्रं सर्पराजवशं गतम् ।
संदितं सर्पभोगेन कृष्यमाणं यथा मृगम् ॥ २१
अश्मसारमयं नूनं हृदयं तेऽभिलक्ष्यते ।
पुत्रं कथमिमं दृष्ट्वा यशोदे नावदीर्यते ॥ २२
दुःखितं बत पश्यामो नन्दगोपं ह्रदान्तिके ।
न्यस्य पुत्रमुखे दृष्टिं निश्चेतनमवस्थितम् ॥ २३
यशोदामनुगच्छन्त्यः सर्वावासमिमं ह्रदम् ।
प्रविशामो न यास्यामः सर्वा दामोदरं विना ॥ २४
दिवसः को विना सूर्यं विना चन्द्रेण का निशा ।
विना वृषेण का गावो विना कृष्णेन को व्रजः ।
विना कृष्णं न यास्यामो विवत्सा इव धेनवः ॥ २५
तासां विलपितं श्रुत्वा तेषां च व्रजवासिनाम् ।
एकभावशरीरज्ञ एकदेहो द्विधा कृतः ।
संकर्षणस्तु संक्रुद्धो बभाषे कृष्णमव्ययम् ॥ २६
कृष्ण कृष्ण महाबाहो गोपानां नन्दिवर्धन ।
दम्यतामेष वै क्षिप्रं सर्पराजो विषायुधः ॥ २७
इमे नो बान्धवास्तात त्वां मत्वा मानुषं प्रभो ।

679* इदं किं स्विति संभ्रान्ता कस्येदं कर्म चेति वै ।
[ D6 इति, T1 G3 M1 2 न्विति ( for स्विति ) T2 G1 3 विभ्रान्ता ( for सं° ) ]

— After the above, M4 reads $20^{ab}$, repeating it in its proper place Ś1 om $19^{cd}$. D6 T1. 2 G M1-3 transp $19^{cd}$ and $20^{ab}$ — $^{c}$ ) K2 M2 3 च कुर्वन्तस्; G2 च कुर्वाणास् ( for प्रकुर्वन्तस् ) — $^{d}$ ) D6 G1 2 5 M2-4 स्थितास् ( for तस्थुस् ) G2 3 5 M1 4 च ( for वै )

20 D6 T1 2 G M1-3 transp $19^{cd}$ and $20^{ab}$ T3 4 transp $20^{ab}$ and $20^{cd}$ M4 reads $20^{ab}$ for the first time after 679* — $^{a}$ ) G1 2 5 M4 ( first time ) मीलिता, M3 पीडिता ( for व्रीडिता ) — Ś1 K3 4 Ñ1 Dn D1 om ( hapl ) $20^{cd}$ K1 D2 3 read $20^{cd}$ after $19^{ab}$ Ñ2 3 V1 transp $20^{cd}$ and $20^{ef}$. — $^{c}$ ) K1 2 Ñ2 3 V B Ds D2 5 च पुत्र, D4 T4 G4 तु पुत्र, T3 पुत्रक ( for तु कृष्ण ) — $^{d}$ ) K3 D2-4 धिग् ( for हा ) V2 जना ( for पुन ) — $^{e}$ ) M3 सर्वे ( for स्मेति ) — $^{f}$ ) M1 4 रुरुदुर्दुःखिता भृशम्

21 $^{a}$ ) K1 [अ]पि ( for [ए]व ) D3 यशोदार्ता ( for °दां तां ) — $^{b}$ ) K1 हता. स्म ( for हतासि ) S1 हतासीति विचुक्रुशु — $^{e}$ ) K1 संबद्धं, K2-4 Ñ2 3 V B1 2 D G1 स्पन्दितं, T1 सहितं ( for संदित ) Ñ1 स्पन्दितं सर्पभोगेषु, M1-3 वेष्टितं सर्पराजेन. — $^{f}$ ) K1 3 4 Ñ2 3 V1 3 Dn D1-3 6 T1 G M4 मृतम्; T2 धृतम् ( for मृगम् )

22 Ś1 K3 Ñ1 M3 om $22^{ab}$ — $^{a}$ ) B2 D6 T2 G1 2 4 5 M1 2 4 -सारमिदं, D4 °समं ( for °मयं ). — $^{b}$ ) Ñ3 इव, V1 तव, B2 D2 तेऽति-, G4. 5 ते हि ( for तेऽभि- ). — $^{c}$ ) D6 T2 G1. 2. 5 M1-3 कथं पुत्रम् ( by transp ), G4 कथं कथम्, M4 कथं कृष्णम्. — $^{d}$ ) D5 G2 वि- ( for [अ]व- ) D4 ( marg as in text ) :सीदति ( for -दीर्यते )

23 $^{a}$ ) K1 4 तं च, K2 D1 च न, Ñ1 2 तव, D4 5 च प्र- ( for बत ) — $^{d}$ ) D4 T1 G3 इव ( for अव- ) K2 M1 निश्चेतसमुप( M1 °मव )स्थितम्, D1 निश्चेष्ट तमव°, D6 T2 G1 2 4 5 M2 3 °ष्टमिव संस्थि( M2 3 च स्थि )तम्

24 $^{b}$ ) Ñ2 D1 3 M1 3 4 सर्पवासम् ( for सर्वा° ) — $^{c}$ ) Ś1 ( *sup lin* ) ऽनया सार्कं ( for न यास्याम. ) — $^{d}$ ) K2 Dn विना दामोदरं व्रजम्

25 $^{c}$ ) D2 कृष्णेन ( for वृषेण ) — $^{d}$ ) Ś1 K4 G4 M3 गोव्रज , T3 गोव्रजम् ( for को व्रज ) — $^{e}$ ) Ś1 D2 कृष्णेन, D6 T1 2 G1 3-5 कृता न ( for कृष्णं न ) G2 विना कृष्णेन वत्स्यामो

26 Before 26, G2 ins वैशंपायन — $^{b}$ ) M3 4 तु ( for च ) — After $26^{ab}$, Ñ2 3 V B1 2 Ds D3 5 ins

680* विलापं नन्दगोपस्य यशोदां रुदतीं तथा ।
[ B1 2 Ds यशोदारुदितं तथा ( for $^{b}$ ) ]

— $^{c}$ ) D6 एकं तावन्न्, M2 3 एक एव ( for एकभाव- ) T1 M1 4 -शरीर सन्, T2 G1 4 °रस्था ( for °रज्ञ ) — $^{d}$ ) T3 एव ( for -देहो ) — $^{e}$ ) K1 D1. 6 T1 2 G M1-3 सु- ( for तु ) K3 [अ]सक्रुद्धो ( for संक्रुद्धो ) — $^{f}$ ) D6 बभाषे वदतां वरः, M1-3 °षे पुष्करेक्षण

27 $^{a}$ ) B3 -वर्धनम् ( for °न ) V1 गोपालं नन्दिवर्धन, D2 गोपीनां नन्दवर्धन, D3 गोपानां नन्दवर्धनम् — $^{c}$ ) Ñ3 Ds1 D5 T1 4 M4 गम्यताम् ( for द° ) D3 अथ ( for एष ). V2 शीघ्रं ( for क्षिप्रं )

परिदेवन्ति करुणं सर्वे मानुषबुद्धयः ॥ २८
तच्छ्रुत्वा रौहिणेयस्य वाक्यं संज्ञासमीरितम् ।
विक्रीड्यास्फोटयद्बाहू तच्छित्त्वा भोगबन्धनम् ॥ २९
तस्य पद्भ्यामथाक्रम्य भोगराशिं जलोक्षितम् ।
शिरोऽस्य कृष्णो जग्राह स्वहस्तेनावनाम्य च ॥ ३०
तस्यारुरोह सहसा मध्यमं तन्महच्छिरः ।
सोऽस्य मूर्ध्नि स्थितः कृष्णो ननर्त रुचिराङ्गदः ॥ ३१
मृद्यमानः स कृष्णेन श्रान्तमूर्धा भुजंगमः ।
आस्यैः सरुधिरोद्गारैः कातरं वाक्यमब्रवीत् ॥ ३२
अविज्ञानान्मया कृष्ण रोषोऽयं संप्रदर्शितः ।
दमितोऽहं हतविषो वशगस्ते वरानन ॥ ३३
तदाज्ञापय किं कुर्यां सदारापत्यबान्धवः ।
कस्य वा वश्यतां यामि जीवितं मे प्रदीयताम् ॥ ३४
पञ्चमूर्धानतं दृष्ट्वा सर्पं सर्पारिकेतनः । C 3689 B 2 12 38 P 2 12 38

28 $^{a}$) $K_4$ इमे ते, $D_6$ $T_2$ $G_1$ इमे मे, $T_1$ $M_{1\ 4}$ त इमे (for इमे॰नो) —$^{b}$) $K_1$ $D_6$ $G_{1\ 2\ 4\ 5}$ मत्वा त्वा (by transp), $K_{3\ 4}$ $\tilde{N}_{1\ 3}$ $V_{1\ 2}$ $B_2$ $D_{1-5}$ $T_4$ त्वा ज्ञात्वा, $M_{1-3}$ मत्वा त्वा N (except $S_1$ $\tilde{N}_1$ $B_2$ $D_6$) $T_{3\ 4}$ $G_1$ $M_4$ विभो (for प्रभो) —$^{c}$) $G_{1\ 2\ 4\ 5}$ परिदेवयन्ति करुणं (hypermetric) —$^{d}$) $S_1$ (*sup lin*) दीन- (for सर्वे) $D_3$ -वृत्तय. (for -बुद्धय)

29 $^{a}$) $G_2$ तच्छ्रुत्वा बलदेवस्य —$^{b}$) $K_2$ वाचं (for वाक्यं) $V_1$ -समन्वितम् (for -समीरि°) —$^{c}$) $S_1$ $B_1$ $D_5$ विक्रम्य, $V_3$ विकृष्य, $D_6$ $G_{4\ 5}$ क्रीडया (for विक्रीड्य) $K_1$ $\tilde{N}_{1\ 3}$ $V_1$ $D_{1\ 3}$ बाहुं (for बाहू) $K_4$ $\tilde{N}_2$ $T_{3\ 4}$ विक्रम्या($\tilde{N}_2$ °गृह्या-, $T_3$ °कृष्या)स्फोटयद्बाहु, $T_1$ वव्रधास्फोटयन्बाहू, $T_2$ $G_{1\ 3}$ क्रीडयास्फोटयन्बाहू —$^{d}$) B Ds $D_5$ भित्त्वा तद् (by transp), $D_6$ $G_{1\ 2}$ $M_3$ तं भित्त्वा, $T_1$ $M_{1\ 2}$ (*inf lin*) $_4$ तच्छित्त्वा, $T_2$ $G_4$ तं हित्वा, $G_3$ स्तम्भित्वा $D_2$ नाग- (for भोग-) $K_1$ $\tilde{N}$ V Dn $D_3$ $T_{3\ 4}$ $G_5$ भित्त्वा तन्नागबन्धनम्, $K_{2-4}$ $D_{1\ 4}$ भित्त्वा तं नागब°

30 $^{a}$) $\acute{S}_1$ $\tilde{N}_2$ अथा($\tilde{N}_2$ उपा)गम्य, $B_{1\ 3}$ Ds समाक्रम्य; $M_4$ अभि° (for अथा°) —$^{b}$) $K_2$ $\tilde{N}$ V B Dn Ds $D_{2\ 4\ 5}$ $G_3$ जलोत्थितम्, $K_{3\ 4}$ °च्छ्रितम्, $D_3$ $G_4$ जले स्थि° (for जलोक्षि°) $T_2$ $G_1$ भोगिराज्यं जले स्थितम्, $G_{2\ 5}$ भोगराज जलोत्थितम् —$^{c}$) $S_1$ शिरश्च, $K_2$ $V_1$ $B_3$ Ds $D_3$ शिर सु, $K_3$ $\tilde{N}_{1\ 3}$ $B_{1\ 2}$ Dn $D_5$ $T_3$ $G_{1\ 4}$ शिरस्तु; $K_4$ $V_{2\ 3}$ $D_{1\ 2\ 4}$ शिर स (for शिरोऽस्य) $M_3$ जग्रास (for जग्राह) $T_4$ शिरस्तु कृष्णो जगृहे —$^{d}$) $K_1$ $T_2$ $G_1$ [अ]वमन्य च, $D_3$ °नामयन्, $D_6$ $T_{1\ 3}$ $G_{2-4}$ $M_3$ °नस्य च (for °नाम्य च).

31 $Dn_2$ om 31 —$^{a}$) $S_1$ $M_3$ तरसा, $V_3$ स हसन् (for सहसा). —$^{c}$) $\acute{S}_1$ सोऽथ, $M_{1\ 2}$ तस्य (for सोऽस्य). — After 31, $D_6$ S ins

681* लास्यं बहुविधं कृष्णो विदधे तस्य मूर्धनि ॥
तस्य नृत्तं स्मरन्विष्णोर्हर्षोऽद्य मम जायते ।
रोम्णां सर्वेषु गात्रेषु राजन्नुद्भ्रमयन्सदा ॥

[(L. 1) $D_6$ हास्य (for लास्य) —(L 2) $D_6$ नृत्तस्मरन्, $T_3$ नृत्तोत्तर (for नृत्तं स्मरन्). $T_1$ नित्य (for विष्णोर्). $M_{1-3}$ यन्नृत्त स्मरतो विष्णोर (for $^{a}$) —(L 3) $T_{1\ 3\ 4}$ $M_4$ राजन्नद्यापि नित्यशः (for $^{b}$) ]

32 $^{a}$) $B_2$ $D_3$ नृत्यमान., $D_2$ मृ(*sup lin* मृ)ज्य° (for मृद्य°) $\acute{S}_1$ $G_4$ तु (for स) $T_{2\ 4}$ $G_1$ ताड्य($T_4$ मर्द्य)मानस्तु कृष्णेन, $M_{2\ 3}$ स मृद्यमान कृ° —$^{b}$) $K_2$ $\tilde{N}_3$ $V_1$ शान्त-; $K_4$ $T_3$ क्रान्त-, $M_4$ भ्रान्त- (for श्रान्त-) —$^{c}$) $K_4$ आस्यै. स तु विषोद्गारै. —$^{d}$) $K_{2-4}$ $\tilde{N}$ V B D (except $D_6$) $T_{3\ 4}$ कातरो (for °र)

33 $^{a}$) $T_1$ अविज्ञान, $T_4$ °ज्ञाय (for °ज्ञानान्) —$^{b}$) $K_2$ (by corr) -वर्धित, $D_5$ -वर्हितः (for -दर्शित) —$^{c}$) $M_3$ ऽय (for ऽहं) $D_6$ $T_2$ $G_5$ वीतविषो, $G_2$ वीतदर्पो (for हतविषो) —$^{d}$) $D_6$ तव दासो (for वशगस्ते)

34 $^{a}$) $K_{1\ 3\ 4}$ $\tilde{N}_{1\ 3}$ $V_1$ $D_{1\ 6}$ $T_2$ G $M_{1\ 3\ 4}$ कुर्मि (for कुर्यां) —$^{b}$) $K_{2\ 4}$ $M_2$ -दासापत्य- (for -दारा°) $T_4$ सदापत्य सबान्धव — $K_2$ om (hapl) $34^{c}$–$36^{d}$. —$^{c}$) $T_3$ तस्य ते (for कस्य वा). $K_4$ $D_5$ $T_{1\ 4}$ वशतां, $D_4$ दास्यतां (for वश्यतां) —$^{d}$) $D_5$ $M_4$ न, $T_1$ स (for मे) — After 34, $D_6$ $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_{1\ 2\ 4}$ ins

682* नमस्ते ब्रह्मरुद्रेन्द्रसुरासुरनमस्कृत ।
शरणं त्वां प्रपन्नोऽस्मि जीवितं मे प्रदीयताम् ॥
अपराधं कृतं यत्तु मूढेनाकृतबुद्धिना ।
दर्पान्वितेन च मया न तत्संस्मर्तुमर्हसि ॥
प्रसन्ने त्वयि देवेश वैनतेयो न मां हरेत् ।
तस्माद्विधत्स्व यत्कार्यं मया कर्तव्यमीश्वर ।
इत्युक्त्वा स शिरोभिस्तु कृष्णपादावपूजयत् ॥

[(L 1) $M_{1-3}$ om (hapl) from नमस्ते up to सुरासुर (in $^{b}$). —(L 3) $T_1$ अपराध कृतो यस्तु (for $^{a}$) — Before line 7, $T_1$ $G_3$ ins वैशंपायन ]

35 $K_2$ om 35 (cf v l 34) $T_4$ om 35–36 Before 35, $T_2$ $M_{1\ 2\ 4}$ ins वैशंपायन —$^{a}$) $K_1$ $D_3$ एवं; $D_3$ $T_3$ त च (for पञ्च) $K_3$ Dn तं दृष्ट्वा पञ्चमूर्धानं —$^{c}$) $G_3$ $M_{1\ 4}$ आक्रीडन् (for अक्रुद्ध). — $K_3$ om. $35^{d}$–$37^{c}$. —$^{d}$) $D_3$ तदोवाच (for प्रत्यु°).

अक्रुद्ध एव भगवान्प्रत्युवाचोरगेश्वरम् ॥ ३५
तवास्मिन्यमुनातोये नैव स्थानं ददाम्यहम् ।
गच्छार्णवजलं सर्प सभार्यः सहबान्धवः ॥ ३६
यश्चेह भूयो दृश्येत स्थले वा यदि वा जले ।
तव भृत्यस्तनूजो वा क्षिप्रं वध्यः स मे भवेत् ॥ ३७
शिवं चास्य जलस्यास्तु त्वं च गच्छ महार्णवम् ।
स्थाने त्विह भवेद्दोषस्तवान्तकरणो महान् ॥ ३८
मत्पदानि च ते सर्प दृष्ट्वा मूर्धसु सागरे ।
गरुडः पन्नगरिपुस्त्वयि न प्रहरिष्यति ॥ ३९
गृह्य मूर्ध्ना तु चरणौ कृष्णस्योरगपुंगवः ।
पश्यतामेव गोपानां जगामादर्शनं ह्रदात् ॥ ४०
निर्जिते तु गते सर्पे कृष्णमुत्तीर्य विष्ठितम् ।
विस्मितास्तुष्टुवुर्गोपाश्चक्रुश्चैव प्रदक्षिणम् ॥ ४१
उचुः सर्वे सुसंप्रीता नन्दगोपं वनेचराः ।
धन्योऽस्यनुगृहीतोऽसि यस्य ते पुत्र ईदृशः ॥ ४२
अद्यप्रभृति गोपानां गवां घोषस्य चानघ ।
आपत्सु शरणं कृष्णः प्रभुश्चायतलोचनः ॥ ४३
जाता शिवजला सर्वा यमुना मुनिसेविता ।
सर्वैस्तीर्थैः सुखं गावो विचरिष्यन्ति नः सदा ॥ ४४
व्यक्तमेव वयं गोपा वने यत्कृष्णमीदृशम् ।
महद्भूतं न जानीमश्छन्नमग्निमिव व्रजे ॥ ४५
एवं ते विस्मिताः सर्वे स्तुवन्तः कृष्णमव्ययम् ।
जग्मुर्गोपगणा घोषं देवाश्चैत्ररथं यथा ॥ ४६

इति श्रीहरिवंशे षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

---

36 K2 om 36 (cf v l 34) K3 T4 om 36 (cf v l 35) —$^{a}$) Ñ2 एतस्मिन् (for तवा°) Ś1 Ñ1 -तीरे (for -तोये). —$^{b}$) Ñ2 V3 नावस्थानं, D3 नैव वासं (for नैव स्थानं) —$^{d}$) D3 सपुत्र (for सभार्य) D2 6 G2 बान्धवै (for -बान्धव). K1 सदारापत्यबान्धव, K4 B2 सभार्यश्च सबान्धव·

37 K3 om 37$^{abc}$ (cf v l 35) Before 37, K2 ins कृष्ण उवाच —$^{a}$) Ñ2 T3 [ए]व (for [इ]ह) D6 T1 2 G M4 सर्पो (for भूयो) D3 यदि दृश्यो भवेद्भूय —$^{b}$) D5 T1 4 स्थाने, G4 जले (for स्थले) D6 T2 G1–3 5 M जले (M4 स्थाने) वा यदि वा स्थले —$^{c}$) M4 पुत्रास् (for भृत्यस्) D2 सुतोऽन्यो (for तनूजो) —$^{d}$) K1 मा, Ds नो (for मे)

38 $^{a}$) K2 जलं चास्तु, G5 जलस्यास्य (for °स्तु) K3 D6 M4 शिवं चास्तु जल चास्तु (D6 चास्यास; M4 वास्य), T1 2 G1–4 M1–3 शिवं चास्तु जल(M3 °न)स्यास्य —$^{b}$) S1 T4 तु (for च) K2 त्वं च गच्छार्णवं पुन —$^{c}$) T1 [ए]व (for [इ]ह) D2 एष (for दोषस्)

39 $^{ab}$) K2 [ए]व (for च) D6 T2 G2–5 दृष्ट्वा सर्प (by transp) Ś1 (marg) मत्पदाङ्कगते सर्प (for $^{a}$) Ś1 मूर्धनि (for °सु) — After 39, D6 T1 G1–3 M1 2 4 ins

682* एवमुक्तस्तु कृष्णेन पतत्रिवरकेतुना ।

40 $^{a}$) K2 B1 3 Ds D4 वचस्तस्य, T4 स चरणौ (for तु च°) K1 मूर्ध्नादाय वचस्तस्य, D6 T1 2 G M1 2 4 प्रगृह्य (G2 °णम्य) मूर्ध्ना (D6 G3 5 °र्ध्नि) चरणौ —$^{d}$) Ś1 तदा; D6 T1 2 G M1 3 (*inf lin*) 3 4 ह्रदे (for ह्रदात)

41 $^{a}$) K1 ऽत्र (for तु) —$^{b}$) Ś1 B3 वेष्टितम्, K Dn D1–5 T4 G1 धिष्ठि°, D6 T1 2 G2–5 M2–4 संस्थि°, M1 निष्ठि° (for वि°) —$^{d}$) D5 6 T1 2 G M1 2 4 पुनं (for एव)

42 $^{a}$) K4 V2 B2 3 Dn D5 M2 च सं-, G2 परं (for सुस-) —$^{c}$) K1 D3 6 धन्या स्थोऽनुगृहीता स्थो —$^{d}$) M2 3 सुत (for पुत्र)

43 $^{b}$) K Ñ V B Dn Ds D1–5 T3 4 गोष्ठस्य (for घोषस्य) D6 T1 2 G1 2 4 5 M ईश्वर (for चानघ) G3 गवां गोष्ठस्य चेश्वर —$^{d}$) K2 D4 आयत-, T3 कमल- (for चायत-)

44 $^{b}$) Ñ2 यमुना सागरंगमा — K1 reads 44$^{c}$–45$^{d}$ on marg Ś1 reads 44$^{c}$ on marg —$^{c}$) Ś1 K2 Ñ2 3 V B Ds T3 4 तीरे चा(Ñ3 V1 ह्य)स्या, K1 4 T1 G2 सर्वैस्तीरै; D6 T2 G1 3–5 M1–3 अस्यास्तीरे, M4 सर्वास्तीरै· (for सर्वैस्तीर्थैं) —$^{d}$) D3 निर्भयाः, M3 ता सदा (for न. सदा)

45 $^{a}$) Ś1 वयं मूढा, K2 B1 3 Ds T3 4 वने जाता, T2 G4 वय गोप्यो, M1–3 वयं जाता (for वयं गोपा) —$^{b}$) K1 2 वयं च, B1 3 D5 वयं यत्, D2 (*sup lin.*) 3 वने यं (for वने यत्) T3 अव्ययम् (for ईदृशम्) T4 वयं यत्कृष्णमीश्वरम् —$^{c}$) M1–3 महाभूतं (for महद्भूतं) K2 भजेमेमं; D2 (*sup lin* as in text) च जानिमश्, T4 न जानन्ति (for न जानीमश्)

# ५७

वैशंपायन उवाच ।
दमिते सर्पराजे तु कृष्णेन यमुनाह्रदे ।
तमेव चेरतुर्देशं सहितौ रामकेशवौ ॥ १
जग्मतुस्तौ तु संरक्तौ गोधनैः सहगामिनौ ।
गिरिं गोवर्धनं रम्यं वसुदेवसुतावुभौ ॥ २
गोवर्धनस्योत्तरतो यमुनातीरमाश्रितम् ।
ददृशातेऽथ तौ वीरौ रम्यं तालवनं महत् ॥ ३
तौ तालपर्णप्रतते रम्ये तालवने रतौ ।
चेरतुः परमप्रीतौ वृषपोताविवोद्धतौ ॥ ४
स तु देशः समः स्निग्धो लोष्टपाषाणवर्जितः ।
दर्भप्रायस्थलीभूतः सुमहान्कृष्णमृत्तिकः ॥ ५
तालैस्तैर्विपुलस्कन्धैरुच्छ्रितैः श्यामपर्वभिः ।
फलाग्रशाखिभिर्भाति नागहस्तैरिवोच्छ्रितैः ॥ ६
तत्र दामोदरो वाक्यमुवाच वदतां वरः ।
अहो तालफलैः पक्वैर्वासितेयं वनस्थली ॥ ७
स्वादून्यार्य सुगन्धीनि श्यामानि रसवन्ति च ।
तालपक्वानि सहितौ पातयावो लघुक्रमौ ॥ ८
यद्येषामीदृशो गन्धो मधुरो घ्राणसंमतः । C 3710 B 2 13 9 P 2.13 9

46 [a]) $D_1$ G(ed) एवं वै, $T_3$ इति ते, $M_2$ हर्षिता (for एवं ते) $V_1$ गोपा (for सर्वे) — [c]) $K_2$ -गणाध्यक्ष, $T_2$ -गणा गोष्ठ (for -गणा घोषं)

Colophon — *Mention of the Epic* $K_3$ Ñ$_2$ $Ds_2$ $T_3$ — *Mention of Khila* Ś$_1$ $K_{1\ 3}$ Ñ$_3$ V B $Dn_2$ Ds $D_1$ — *Sub-parvan* $T_4$ आश्चर्यपर्व — *Adhy name* Ś$_1$ कालियह्रददमनम्, K Ñ$_{1\ 3}$ V $B_{1\ 2}$ Dn Ds $D_{1-3\ 5}$ कालियदमनम्; Ñ$_2$ $B_3$ कालियमथ($B_3$ °दर्श)नम्, $D_{4\ 6}$ $T_4$ $G_{2\ 3}$ कालियमर्दनम्. — *Adhy no* (figures, words or both) $K_3$ $T_4$ $M_{1-3}$ 65, Ñ$_3$ $V_1$ $T_2$ $G_1$ 68, $V_3$ $G_2$ 66, Dn $Ds_2$ $D_4$ 67; $D_1$ 64, $D_3$ 63, $T_1$ $G_{3\ 5}$ $M_4$ 69, $T_3$ 75, $G_4$ 60 — *Śloka no* Dn 48, $Ds_2$ 49, $D_4$ 50

## 57

1 [c]) $D_6$ $T_2$ $G_{1.3\ 5}$ जग्मतुर् (for चेर°) Ś$_1$ तदा विचेरतुर्मार्गे

2 [a]) $D_6$ ते सु-, $M_{2\ 3}$ तत्र (for तौ तु) $D_5$ सहितौ, $G_2$ संसक्तौ (for सरक्तौ) K Ñ V B Dn Ds $D_{1-4}$ $T_{3\ 4}$ $G_4$ आजग्मतुस्तौ सहितौ — [b]) Ś$_1$ $G_3$ $M_3$ Ca -गोमिनौ (for -गा°) $M_2$ गोधनै. सहितौ तदा ※ Ca गोमिनौ गोस्वामिनौ।※

3 [b]) $T_2$ $G_1$ यामुनं (for यमुना-). $K_{1\ 4}$ $T_{3\ 4}$ आश्रितौ (for °तम्) — [c]) B Ds ततो, $D_5$ $T_1$ $G_{3\ 5}$ $M_1$ च तौ (for ऽथ तौ) $D_2$ वीरौ तु (for तौ वीरौ) — [d]) $T_1$ (also) शुभम् (for महत्)

4 [a]) $D_6$ -पत्र- (for -पर्ण). Ś$_1$ $K_3$ Dn $D_4$ (marg.) $T_4$ -प्रकरे, $K_2$ $D_3$ -प्रततौ; $K_4$ -प्रसरे; Ñ$_{2\ 3}$ $V_{1\ 3}$ $D_4$ $G_3$ -पतिते (for -प्रतते) — [b]) $G_{1.2}$ रम्य- (for रम्ये). $K_2$ शुभौ, $T_3$ यथा, $T_4$ तथा (for रतौ) — [d]) $K_1$ Ñ$_{1.3}$ (marg as in text) $V_2$ $Dn_1$ $D_5$ उद्धतौ, $K_2$ उद्यतौ, $D_6$ $T_{1\ 2}$ G M उत्कटौ (for उद्धतौ)

5 [a]) $D_{1\ 5}$ $G_1$ $M_4$ सदा (for सम) — $K_{2-4}$ Ñ V B Dn Ds $D_{1-5}$ transp 5[b] and 5[d] — [c]) $D_4$ दस्युप्राय (for दर्भ°) — [d]) Ñ$_3$ $V_1$ सुमहत् (for °हान्) Ñ$_1$ ताम्र- (for कृष्ण-)

6 [a]) Ñ$_3$ $D_{3\ 6}$ $G_1$ विपुलै, $D_1$ विरल- (for विपुल-) — [b]) Ś$_1$ मोच्छ्रितै, $T_4$ उद्वृत्तै (for उच्छ्रितै) — [c]) $V_2$ फलाग्रे, $G_3$ °ग्र्य- (for °ग्र-) $T_1$ -पालिभिर्, $T_2$ $G_{2-5}$ M -शालि° (for -शाखि°) — [d]) $M_{2\ 3}$ हस्ति- (for नाग-)

7 [d]) $M_{1-3}$ भासिता (for वा°).

8 $T_2$ not collated — [a]) Ś$_1$ (marg) [अ]ति-; $K_4$ च, $V_1$ $D_3$ [अ]पि, $D_5$ [अ]थ (for [आ]र्य) — [c]) $D_6$ $G_5$ $M_{1\ 4}$ काल- (for ताल-) K Ñ$_{2\ 3}$ V B Dn Ds $D_{1-5}$ $T_1$ $G_{3\ 4}$ पक्वतालानि सहितौ — [d]) $K_3$ Ñ$_{1.2}$ Dn $T_{1\ 3\ 4}$ $G_{1\ 2\ 5}$ पातयामो (for °वो) Ś$_1$ $K_{1\ 4}$ लघुक्रमम्, $K_2$ चलद्रुमौ, $D_3$ लघुद्रुमैः, $D_5$ महीतले (for लघुक्रमौ)

9 [a]) $D_3$ यथा (for यदि) — [b]) Ś$_1$ Ñ$_1$ Ds माधुर्य- (for मधुरो) $T_4$ $G_{2-4}$ $M_4$ -तर्पण (for संमत). K $V_{2\ 3}$ B Dn $D_{1-3\ 5}$ $T_3$ माधुर्यघ्राणतर्पण ($D_1$ °णे), Ñ$_{2\ 3}$ $V_1$ $D_4$ माधुर्यं घ्रा(Ñ$_2$ °र्यैघ्रा, $V_1$ °र्यं प्रा)णतर्पणम् — [c]) Ds $D_6$ कल्पानि (for कल्पेन) Ś$_1$ स्वादून्यमृतकल्पानि — [d]) $Ds_2$ हि (for [इ]ति) K Ñ V B Dn $Ds_1$ $D_{1\ 5}$ $T_{3-4}$ भवितव्यं च मे मति .

10 [c]) K Ñ$_{2\ 3}$ V B Dn Ds $D_{1-5}$ $T_{1\ 3\ 4}$ $G_3$ पक्वतालानि (for तालपक्वानि). Ñ$_1$ $G_2$ पातयामास पक्वानि.

रसेनामृतकल्पेन भविष्यन्तीति मे मतिः ॥ ९
दामोदरवचः श्रुत्वा रौहिणेयो हसन्निव ।
पातयंस्तालपक्कानि चालयामास तांस्तरून् ॥ १०
तत्तु तालवनं नृणामसेव्यं दुरतिक्रमम् ।
निर्माणभूतमिरिणं पुरुषादालयोपमम् ॥ ११
दारुणो धेनुको नाम दैत्यो गर्दभरूपवान् ।
खरयूथेन महता वृतः समुपसेवते ॥ १२
स तत्तालवनं घोरं गर्दभः परिरक्षति ।
नृपक्षिश्वापदगणांस्त्रासयानः स दुर्मतिः ॥ १३
तालशब्दं स तं श्रुत्वा संघुष्टं फलपातने ।
नामर्षयत संक्रुद्धस्तालस्वनमिव द्विपः ॥ १४
शब्दानुसारी संक्रुद्धो दर्पाविद्धसटाननः ।
स्तब्धाक्षो हेषितपटुः खुरैर्निर्दारयन्महीम् ॥ १५
आविद्धपुच्छो हृषितो व्यात्तानन इवान्तकः ।
आपतन्नेव ददृशे रौहिणेयमवस्थितम् ॥ १६
तालानां तमधो दृष्ट्वा सध्वजाकारमव्ययम् ।
रौहिणेयं खरो दुष्टः सोऽदशद्दशनायुधः ॥ १७
पद्भ्यामुभाभ्यां च पुनः पश्चिमाभ्यां पराङ्मुखः ।
जघानोरसि दैत्यः स रौहिणेयं निरायुधम् ॥ १८
ताभ्यामेव स जग्राह पद्भ्यां तं दैत्यगर्दभम् ।
आवर्जितमुखस्कन्धं प्रैरयत्तालमूर्धनि ॥ १९
स भग्नोरुकटिग्रीवो भग्नपृष्ठो दुराकृतिः ।

—$^{d}$) Ñ$_1$ lacuna D$_3$ पातयामास, G$_3$ तोलया° (for चाल°) Ś$_1$ D$_6$ T$_1$ G$_{2-4}$ तांस्तदा, G$_1$ तांस्तथा, M$_{1-3}$ तद्वनम् (for तांस्तरून्). D$_2$ T$_2$ G$_5$ M$_4$ पातयामास तांस्तदा

11 $^{a}$) Ñ$_3$ Ds तत्र (for तत्तु) G$_3$ फलं (for -वन) — K$_3$ B$_1$ om (hapl ?) 11$^{cd}$ —$^{c}$) V$_3$ G$_{1-4}$ M$_{2-4}$ निर्वाण- (for निर्माण) D$_3$ T$_4$ निर्वाणभूतशरणं (T$_4$ °मलिनं) — After 11, D$_6$ T$_{1\ 2}$ G$_{1\ 3-5}$ M ins

683* पाषाणैरथ राजेन्द्र बहुभि पर्वतोपमै· ।
पक्कानि चैव राजेन्द्र पातयामास कामतः ॥

[ (L. 1) T$_1$ M$_{2\ 3}$ गड्डुभि (for बहुभि·) — (L 2) T$_1$ तालानि (for राजेन्द्र) ]

12 G$_2$ om 12. —$^{b}$) S$_1$ -रूपधृत्, K$_2$ Dn D$_2$ (*sup lin* as in text) °धृक् (for °वान्) —$^{c}$) Ś$_1$ खरी- (for खर-) —$^{d}$) Ś$_1$ K$_1$ वृत समुपधावति, K$_2$ B Ds D$_{2\ 3}$ T$_{3\ 4}$ वृतो बलवता वर, K$_{3\ 4}$ Ñ V Dn D$_{1\ 4\ 5}$ G$_{3\ 4}$ वृत समनुसेव(Dn$_2$ °सर्प्य)ते

13 $^{a}$) K$_1$ Ñ$_{2\ 3}$ V B Ds D$_{3\ 5}$ T$_{1\ 3\ 4}$ M$_{2-4}$ तु, K$_4$ D$_1$ तं (for तत्) —$^{b}$) D$_1$ -रक्षते (for °ति) —$^{c}$) T$_2$ G$_1$ -पश्वादि- (for -श्वापद-) D$_4$ -गणं (for -गणांस्) —$^{d}$) K$_2$ त्रासनाय (for °यान·) K$_1$ D$_6$ T$_{1\ 2}$ G M$_{1-3}$ सु(T$_2$ G स)-दर्पित·, K$_{3\ 4}$ Ñ V$_{1\ 2}$ Dn D$_{1\ 4\ 5}$ T$_{3\ 4}$ सुदुर्मति· (for स दु°) V$_3$ त्रासयामास दुर्मति, B Ds °यन्नतिदर्पित

14 $^{a}$) D$_6$ स तं कृत्वा, T$_{2\ 4}$ नतः श्रु(T$_4$ कृ)त्वा, M$_3$ स तच्छ्रुत्वा (for स तं श्रुत्वा) D$_3$ तं शब्दं सततं श्रुत्वा· —$^{b}$) Ś$_1$ संघुष्टः, K$_2$ संजुष्टं, D$_4$ संकष्टं, D$_5$ संप्राप्त (for संघुष्टं) D$_3$ ताल- (for फल-) K$_1$ D$_6$ T$_{1\ 2}$ G M$_{1\ 3}$ -पातनै; K$_{3\ 4}$ V$_2$ Dn D$_1$ -पातनात्, M$_2$ -शातनै (for -पातने). M$_4$ संघुष्ट· फलपातनै —$^{c}$) Ds$_1$ स क्रुद्धस्, D$_6$ G$_{1\ 2\ 4\ 5}$ M$_4$ सक्रोधस् (for संक्रुद्धस्) K$_2$ Ñ$_2$ B$_2$ D$_{1\ 3\ 5}$ T$_1$ नामर्षयत्सु-संक्रुद्धस् —$^{d}$) G$_2$ ताली- (for ताल-) M$_4$ तालध्वनिमव-स्थितम्

15 M$_4$ om (hapl) 15–16 —$^{a}$) V$_3$ B$_1$ D$_1$ T$_1$ G$_{2\ 3}$ M$_{1\ 3}$ -कारी- (for -सारी) —$^{b}$) K$_1$ Ds दर्पाविद्ध (for °विद्ध-) T$_{1\ 2}$ G$_{1\ 3-5}$ M$_1$ दर्पाविद्ध स दानव —$^{c}$) K$_3$ हर्षित- (for हेषित-) Ś$_1$ -वपु, T$_{1\ 2}$ G$_{1\ 3}$ -रव·, G$_5$ -पर (for -पटु) Ñ$_2$ V$_3$ हेषितपटु. स्त(V$_3$ °टुर्ल)ब्धाक्ष.

16 M$_4$ om 16 (cf v l 15) —$^{a}$) D$_3$ संक्रुद्धो (for हृषितो) — Ds$_2$ om 16$^{d}$–17$^{a}$ —$^{d}$) K$_{2-4}$ Ñ V B D (except D$_6$, Ds$_2$ om) T$_{3\ 4}$ उपस्थितम् (for अव°)

17 Ds$_2$ om 17$^{a}$ (cf v l 16) T$_4$ repeats 17 after 19 —$^{a}$) T$_4$ (both times) कृत्वा (for दृष्ट्वा) — V$_1$ om 17$^{b}$–20$^{a}$ —$^{b}$) T$_4$ (both times) पर्वताकारम् (for सध्वजा°) Ś$_1$ M$_3$ सध्वजाकारदर्शन(M$_3$ °वर्चस)म् —$^{c}$) T$_{2\ 4}$ (both times) G$_{1-4}$ M$_{1\ 2\ 4}$ रुष्ट (for दुष्टः) —$^{d}$) M$_{1-3}$ ददश (for ऽदशद्)

18 V$_1$ om 18 (cf v l 17) —$^{c}$) K$_2$ B Ds दैत्योऽसौ; K$_{3\ 4}$ Ñ V$_{2\ 3}$ Dn D$_{1-5}$ T$_{1\ 3\ 4}$ दैत्येन्द्रो (for दैत्य. स).

19 V$_1$ om 19 (cf v l 17) —$^{a}$) M$_1$ पद्भ्याम् (for ताभ्याम्) —$^{b}$) M$_1$ ताभ्यां (for पद्भ्यां) K$_3$ च स (for दैत्य) —$^{c}$) K$_2$ D$_6$ -मुखस्कन्ध, Ñ$_3$ B Ds$_1$ T$_4$ -खुर-स्कन्ध, T$_2$ G$_{2-5}$ M$_{1-3}$ -महास्कन्धं (for -मुख°) —$^{d}$) K$_{2\ 3}$ Ñ V$_{2\ 3}$ B Dn Ds D$_{1-5}$ M$_1$ प्रेरयंस्, T$_3$ सोऽक्षिपत्, M$_2$ प्रैषयत् (for प्रैर°) — After 19, T$_4$ repeats 17

20 V$_1$ om 20$^{a}$ (cf v 1, 17) —$^{a}$) Ñ$_1$ B$_2$ Ds$_2$

खरस्तालफलैः सार्धं पपात धरणीतले ॥ २०
तं गतासुं गतश्रीकं पतितं वीक्ष्य गर्दभम् ।
ज्ञातींस्तथापरांस्तस्य चिक्षेप तृणराजनि ॥ २१
सा भूर्गर्दभदेहैश्च तालपक्वैश्च पातितैः ।
बभासे छन्नजलदा द्यौरिवाव्यक्तशारदी ॥ २२
तस्मिन्गर्दभदैत्ये तु सानुगे विनिपातिते ।
रम्यं तालवनं तद्धि भूयो रम्यतरं बभौ ॥ २३
विप्रमुक्तभयं शुभ्रं विविक्ताकारदर्शनम् ।
चरन्ति स्म सुखं गावस्तत्तालवनमुत्तमम् ॥ २४
ततः प्रव्याहृताः सर्वे गोपा वननिवासिनः ।
वीतशोका वनं सर्वे चञ्चूर्यन्ते स्म ते सुखम् ॥ २५
ततः सुखं प्रकीर्णासु गोषु नागेन्द्रविक्रमौ ।
द्रुमपर्णासने कृत्वा तौ यथार्हं निषीदतुः ॥ २६

C 3727
B 2. 13 24
P 2 13 26

इति श्रीहरिवंशे सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

D1 5 T1 3 G1 4 5 M4 स-, Ñ2 प्र- ( for स ) —$^{b}$) Ñ1 निराकृति ( for दुरा° ) —$^{c}$) D5 खलस् ( for खरस् ). M1 4 साक ( for सार्धं )

21 D6 G3 4 om 21 —$^{a}$) T3 स ( for तं ). —$^{c}$) Ś1 Ds2 अथ ( for तथा ) —$^{d}$) T1 M2 3 -राजसु ( for °नि ) K2–4 Ñ V B D ( D6 om ) T3 4 तृणराजनि सोऽक्षिपत्, T2 G1 2 5 M1 4 चाक्षिपत्तृणराजसु — After 21, T1 2 G1 2 5 M1–3 ins

684* ते सर्वे तालपक्वैश्च निपेतुर्धरणीतले ।

[ M1 काल- ( for ताल- ) T1 सर्वे तालफलै पक्वैर् ( for $^{a}$) ]

22 $^{a}$) D2 6 T3 M3 [अ]भूद्, T4 तु ( for भूर् ) —$^{b}$) N ( except Ś1 D6 ) T3 4 G1 4 5 M4 तालै ( for ताल- ) —$^{c}$) B2 D6 T1 G1 M भिन्न- ( for छन्न ) D4 बभासे जलदच्छन्ना —$^{d}$) D6 -शार्वरी ( for -शारदी )

23 $^{b}$) D3 निहते भुवि पातिते.

24 $^{a}$) B3 विप्रयुक्तं, G2 विनिर्मुक्त- ( for विप्रमुक्त- ) Ś1 K1 -भय रम्यं, K2 -भयास्तत्र; Ñ3 ( marg ) -भय सर्वं ( for -भय शुभ्रं ) Ñ2 विप्रयुक्तभय सर्वं. —$^{b}$) Ś1 K2 V2 M4 विचित्रा( M4 °मुक्ता )कारदर्शनम्, Ds T3 4 विविक्तं रम्य° —$^{d}$) G4 ततस्तालवनं प्रति.

25 $^{a}$) K1 2 Ñ1 3 V B Ds D2–4 T3 4 प्रहृष्टास्ते, K3 4 Ñ2 Dn D1 5 प्रविष्टास्ते, M4 त्वव्याहता. ( for प्रव्याहृता' ). —$^{b}$) Ś1 K1 खगा, D6 T2 G1–3 M1–3 गावो ( for गोपा ) K2–4 Ñ V B D ( except D6 ) T3 4 G3 -विचारिण ( for -निवासिन ) — T4 om 25$^{cd}$ —$^{c}$) Ñ3 ( marg as in text ) -शोकानना ( for शोका वनं ). M1 4 सर्वं ( for सर्वे ) Ś1 K1 2 B Ds D4 वीतशोकभयायासा( K1 B1 °बाधा-, K2 °बद्धा )श्, T3 चरन्ति स्म वनं सर्वे —$^{d}$) K2 B Ds1 स्म ते व( B1 तद्व-; B3 त व )नम्, Ñ3 V2 Dn1 Ds2 D4 5 समन्तत' ; D6 T2 G M1–3 स्म ( D6 च ) तत्सुखम्; T1 तदा सुखम् ( for स्म ते सु° ). K3 Dn2 D1 2 चञ्चूर्यन्त' समन्तत, K4 D3 विचरन्त ( D3 °न्ति ) समन्तत, Ñ2 V3 पर्यटन्त समन्तत, T3 निर्भयास्ते समन्तत'

26 $^{a}$) T1 संप्रवि- ( for सुखं प्र- ). — Ś1 om 57. 26$^{c}$–58 29$^{b}$ —$^{c}$) K3 4 Ñ2. 3 V3 B1 2 D3 5 T1 3 4 -पर्णासनं, Ñ1 °नौ ( for °ने ) —$^{d}$) K1 तौ यथेष्ट, B1 3 Ds यथार्हं तौ ( by transp ) D6 G2 निषेवतु ( for निषीदतुः ).

Colophon om in Ś1 T4. — *Mention of the Epic* K3 Ñ2 Ds2 T3 — *Mention of Khila* K3 Ñ2 3 V B Ds D1 — *Sub-parvan* D3 बालचरितम् — *Adhy name* N ( Ś1 om ) G2 3 M4 धेनुकवध — *Adhy no* ( figures, words or both ) K3 V3 Dn Ds2 D4 68; Ñ3 V1 T2 G1 69, V2 T1 G3 5 M4 70, D1 M1–3 66; D3 74, T3 76, G2. 4 67 — *Śloka no* . Dn D3. 4 26; Ds2 25, T2 G1 27

# ५८

वैशंपायन उवाच ।
अथ तौ जातहर्षौ तु वसुदेवसुतावुभौ ।
तत्तालवनमुत्सृज्य भूयो भाण्डीरमागतौ ॥ १
चारयन्तौ विवृद्धानि गोधनानि शुभाननौ ।
स्फीतसस्यप्ररूढानि वीक्षमाणौ वनानि च ॥ २
क्ष्वेडयन्तौ प्रगायन्तौ प्रचिन्वन्तौ च पादपान् ।
नामभिर्व्याहरन्तौ च सवत्सा गाः परंतपौ ॥ ३
निर्योगपाशैरासक्तौ स्कन्धाभ्यां शुभलक्षणौ ।
वनमालाकृतोरस्कौ बालशृङ्गाविवर्षभौ ॥ ४
सुवर्णाञ्जनवर्णाभावन्योन्यसदृशाम्बरौ ।
महेन्द्रायुधसंसक्तौ शुक्लकृष्णाविवाम्बुदौ ॥ ५
कुशाग्रकुसुमानां च कर्णपूरमनोरमौ ।
वनमार्गेषु कुर्वाणौ वन्यवेषधरावुभौ ॥ ६
गोवर्धनस्यानुचरौ वने सानुचरौ च तौ ।
चेरतुर्लोकसिद्धाभिः क्रीडाभिरपराजितौ ॥ ७
तावेवं मानुषीं दीक्षां वहन्तौ सुरपूजितौ ।
तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ॥ ८
तौ तु भाण्डीरमुचिते काले क्रीडानुवर्तिनौ ।

## 58

1 Ś1 om $1^{a}$–$29^{b}$ ( cf v. 1 57 26 ) — $^{a}$) K1 T3 -संहर्षौ, K2 3 -हर्षौ तौ, G2 -हर्षौ द्वौ ( for -हर्षौ तु ) — M4 repeats $1^{cd}$ after 4 — $^{d}$) M1–3 पुनर् ( for भूयो ) D2 6 T2 G M4 ( both times ) आश्रितौ ( for आगतौ )

2 Ś1 om 2 ( cf v 1 1 ) — $^{a}$) D6 रोचयन्तौ ( for चार° ) K4 विवृद्धौ तु, T1 समृद्धानि, T2 प्रनृत्तानि, G1 3 5 M4 प्रवृत्तानि, G2 M1 2 प्रवृद्धानि ( for वि° ) — $^{b}$) D3 शुभानि वै; D5 °नि च, D6 T2 G M1–3 °नि तौ ( for °ननौ ) M4 गोगणानि शुभानि तौ — $^{c}$) B1 3 स्फीतशष्प- ( for °सस्य- ) K2 D3 -प्रभूतानि ( for प्ररूढानि )

3 Ś1 om 3 ( cf v 1 1 ) — $^{a}$) K2 D4 T3 4 खेलयन्तौ, K4 क्रीड°; Ñ2 V3 उत्प्लवन्तौ, Ñ3 ( marg as in text ) तालयन्तौ ( for क्ष्वेड° ) — $^{b}$) Ñ2 D6 T4 G2 M1–3 विचिन्वन्तौ; T2 G1 4 5 M4 विचरन्तौ; G3 तोलयन्तौ ( for प्रचिन्वन्तौ ) D3 चिन्वन्तौ च कपर्दकान् — $^{c}$) M4 वारयन्तौ ( for व्याहरन्तौ ) Ñ1 Ds T2 G1 तु ( for च )

4 Ś1 om 4 ( cf v 1 1 ) — $^{a}$) K2 वियोग-, K2 ( marg ) D1 3 G3 नियोग- ( for निर्योग- ) Dn1 आसक्तैः ( for °क्तौ ) K3 Ñ V B Dn2 Ds D2 4 5 T3, 4 G4 M4 निर्योगपाशैरासक्तै, K4 नियोगपाशै ससक्तौ, D6 नियोजपाशौ संसक्तौ ( corrupt ) — $^{b}$) K3 -लक्ष्मणै ( for लक्षणौ ) K1 कण्ठाभ्यां च शुभक्षणौ — $^{c}$) K2–4 Ñ V B D ( except D6 ) T1 3 4 वनमालाकुलोरस्कौ — $^{d}$) D5 -स्कन्धाव् ( for -शृङ्गाव् ) — After 4, M4 repeats $1^{cd}$.

5 Ś1 om. 5 ( cf v. 1 1 ). — $^{a}$) K1. 3 4 Ñ1. 2 G4 -चूर्णाभ्याम्, K2 V3 D2–4 G5 M -वर्णाभ्याम्, Ñ3 V2 B1 Dn Ds D1 ( *sup lin* as in text ) चूर्णाभाव्, V1 -पूर्णा° ( for वर्णा° ) — $^{b}$) D1 3 अन्योन्यसदृशावुभौ ( D3 °म्बरै ) — $^{c}$) K3 V1 D4 T3 G3 -संयुक्तौ ( for -संसक्तौ ) D6 महेन्द्राविव संसक्तौ — $^{d}$) Ñ2 V3 [अ]म्बुदाविव ( by transp )

6 Ś1 om 6 ( cf v 1 1 ) — $^{a}$) D3 कुशेशयसमानास्यौ — $^{b}$) Ñ1. 2 V3 B Dn Ds D2 5 T2 3 कर्णपूरौ ( for °पूर- ). T1 3 4 M1 2 ( *inf lin* ) 4 मनोहरौ ( for °रमौ ) K2 कर्णपूरं मनोरमम् — $^{c}$) D1 5 -माला प्र- ( for -मार्गेषु ) D6 S वनमा( G3 °न्यमा-; M4 °नवे )ला विचिन्वन्तौ — $^{d}$) K2 Dn1 वन, T3 4 नट- ( for वन्य- ) T1 -पुष्प- ( for -वेष- )

7 Ś1 om 7 ( cf v 1 1 ) — $^{a}$) M1 lacuna K2 सानुचरौ ( hypermetric ), M4 रुचिरौ ( for [अ]नुचरौ ) — $^{b}$) G2 वनचरौ ( for सानु° ) K1 4 Ds2 G5 M4 तु तौ, Ñ3 शुभौ, G1 तदा ( for च तौ ) T1 2 M3 वने सानुचराचरौ ( T2 °रैस्तदा ) — D3 om ( hapl ) $7^{d}$–$8^{c}$ — $^{d}$) M4 कर्मभिर् ( for क्रीडाभिर् ) K1 क्रीडाभिरितरेतरम्

8 Ś1 om 8 ( cf v 1 1 ) D3 om $8^{abc}$ ( cf v 1 7 ) Ñ3 T4 M1 4 om ( hapl ) $8^{ab}$ — $^{a}$) V3 ताम्, T3 द्वाव् ( for ताव् ) K2 3 Ñ2 V1 B3 T2 G1 2 एव, D1 उभौ ( for एवं ) — $^{b}$) G2 वसन्तौ ( for वहन्तौ ) — $^{c}$) M1 तौ ( for तज् ) — $^{d}$) K1 वने ( for वनम् )

9 Ś1 om 9 ( cf v 1 1 ) — $^{a}$) K1 D5 M4 आश्रित्य, K2 आश्रिते, D6 T1 2 G M2 3 अचिरात् ( for उचिते ) — $^{b}$) K1 B1 Dn2 T1 M4 बाल-, Ñ1 M1 काल-, M2 3 कालात् ( for काले ) — $^{c}$) T4 प्रासं, M1 रात्रौ ( for प्रासौ ) D6 T1 G2 -शाखाग्रं, T2 G5 M1–3 °ध्र्यं ( for °ध्यं ) — $^{d}$) D6 T1, 2 G

प्राप्तौ परमशाखाढ्यं न्यग्रोधं शाखिनां वरम् ॥ ९
तत्र स्पन्दोलिकाभिश्च युद्धमार्गैश्च दंशितौ ।
अश्मभिः क्षेपणीयैश्च तौ व्यायाममकुर्वताम् ॥ १०
युद्धमार्गैश्च विविधैर्गोपालैः सहितावुभौ ।
मुदितौ सिंहविक्रान्तौ यथाकाम विचेरतुः ॥ ११
तयो रमयतोरेवं तच्छिप्सुरसुरोत्तमः ।
प्रलम्बोऽभ्यागमत्तेषां छिद्रान्वेषी तयोस्तदा ॥ १२
गोपालवेषमास्थाय वन्यपुष्पविभूषितः ।
लोभयानः स तौ वीरौ हास्यैः क्रीडनकैस्तथा ॥ १३
सोऽवगाहत निःशङ्कस्तेषां मध्यममानुषः ।
मानुषं वपुरास्थाय प्रलम्बो दानवोत्तमः ॥ १४
प्रक्रीडिताश्च ते सर्वे सह तेनामरारिणा ।
गोपालवपुषं गोपा मन्यमानाः स्वबान्धवम् ॥ १५
स तु च्छिद्रान्तरप्रेप्सुः प्रलम्बो गोपतां गतः ।
दृष्टिं परिदधे कृष्णे रौहिणेये च दारुणाम् ॥ १६
अविषह्यं ततो मत्वा कृष्णमद्भुतविक्रमम् ।
रौहिणेयवधे यत्नमकरोद्दानवोत्तमः ॥ १७
हरिणाक्रीडनं नाम बालक्रीडनकं ततः ।
प्रक्रीडिताश्च ते सर्वे द्वौ द्वौ युगपदुत्पतन् ॥ १८
कृष्णः श्रीदामसहितः पुप्लुवे गोपसूनुना ।　　C 3746 B 2. 14. 19 P 2. 14. 19

न्यग्रोधवरमाशुगौ, M3 °धवशमाशु तौ

10 S1 om 10 (cf v l 1) — a) Ñ1 तौ तु (for तत्र) K3 4 T3 4 ततश्चान्दोलिकाभिश्च, D6 T1 2 G1 3–5 तत्र ह्या(D6 सा)न्दो°, M4 तत्रत्यान्दो° — b) T1 युद्धमानैश्, T2 3 G1 3–5 M4 °मार्गै (for °मार्गैश्) M2 3 भासितौ (for दंशितौ) K2 युद्धमार्गस्य दर्शिनौ, D5 °मार्गविशारदौ — d) B Ds D1 T4 व्यायाम कुरुत स्म तौ, T1 M1 4 लीलामेवं प्रकुर्वताम्.

11 Ś1 om 11 (cf v l 1) — a) K2 -मार्गौ (for -मार्गैश्) M1 4 सहितैर् (for विविधैर्) — b) K1 D6 T2 G1 2 4 5 M1 4 गोपाल- (for °लै) — c) T2 G1 नादितौ (for मु°) — d) D6 G2 M2 3 च रेमतु, M1 2 (*inf lin*) 4 च चेरतु (for विचे°)

12 Ś1 om 12 (cf. v l 1) — a) Ñ1 ताभ्यां; D6 ततो (for तयो) T2 G2 एव (for एवं) — Ñ3 om 12cd — c) K1 D1 ऽभ्यागतस्, G(ed) ह्यागमत् (for ऽभ्याग°) — d) M4 रिपोस् (for तयोस्) K1 D1 सदा (for तदा)

13 Ś1 om 13 (cf v l 1). — b) K1–3 Ñ2 3 V1. 3 D1 3 -वेष (for -पुष्प) T3 विभूषितम् (for °त). — c) K1 तु, Ñ2 Dn Ds स्म (for स) K2 लोभयामास तौ वीरौ — d) B3 हासै (for हास्यै.) D3 प्रक्रीडकैस् (for क्रीडन°) D6 T1 3 G2 5 तदा (for तथा)

14 Ś1 om 14 (cf v l 1) D2 om 14 — a) K2 ऽवागाहत (for ऽवगाह°) V2. 3 निःशङ्कं (for °ङ्कस्). — b) Ñ1 D5 मध्ये तु (for मध्यम्) Ñ3 तेषां मध्ये स मानुष· — d) T2 G1 3 5 प्रलम्बो मानुषोत्तमः, M1 4 °म्बो दानवेश्वरः — After 14, D6 T1 2 G1–3 5 M1 2. 4 G(ed) read 18ab, repeating it in its proper place

15 S1 om 15 (cf v l 1) T4 om (hapl) 15–17; D5 reads the same on marg K1 reads 15ab on marg. — a) K4 सु (for प्र-) Ñ1 D3 Ds T3 तु, D6 T2 G M1–3 स्म (for च) T1 M4 प्रक्रीडन्ति स्म ते सर्वे — b) K2 [अ]नुचारिणा, D3 सुरारिणा (for [अ]मरा°) — c) M3 वपुषा (for °ष) T3 गोपालवेषमास्थाय, G2 °वपुषा गोप

16 Ś1 om 16 (cf v l 1) T1 om 16 (cf v l 15). — a) G4 -प्रेक्ष (for प्रेप्सु) M1 4 स तु च्छिद्रं ततः (M4 च्छिद्रान्तरं) प्रेक्ष्य — b) T1 प्रलम्बो दानवोत्तम·. — c) K Ñ2 3 V Dn Ds D1–5 T1 G4 प्रणिदधे, G2 परिभ्रमन् (for °दधे) T3 स दृष्टिं प्रददौ कृष्णे — d) K2 T2 दारुणे, G4 °णः (for °णाम्)

17 Ś1 om 17 (cf v l 1) T4 om. 17 (cf. v l 15). — a) V2 अभिसह्यं, V3 अधिकं तं (for अविषह्यं) — b) Ñ2 V3 कृष्णमक्लिष्टकारिणम्, G1 कृष्णविक्रममद्भुतम्

18 S1 om 18 (cf v l 1) D6 T1. 2 G1–3 5 M1 2. 4 G(ed) read 18ab for the first time after 14. — a) D3 हरिणाक्रीडितं तत्र. D6 T2 G1–3 5 M1 4 G(ed) (all second time) हरिणाक्रीडने तस्मिन्, T3 हरिसंक्रीडनं नाम; M3 अलिसंक्रीडन नाम — b) D6 T2 G1–3 (all second time) 4 5 M4 (last two second time) -क्रीडनके (for °नक) K1 Ñ2 V3 D2 तदा (for तत) — c) K1 D6 T2 G स्म, K3 4 Ñ1 3 V1 Dn D3–5 T1 नु (for च). Ñ3 V1 B Ds द्वंद्वं (for सर्वे). K2 क्रीडिताश्चैव ते सर्वे, T3 प्रक्रीडन्ति स्म ते सर्वे; M1–3 °डता तु सर्वेषा. — d) D6 T1–3 G2–5 M उत्थितौ, G1 आस्थितौ (for उत्पतन्) Ñ3 V1 B Ds उत्पेतुर्युगपत्तथा

19 Ś1 om. 19 (cf. v. l. 1). — a) T3. 4 श्रीदाम्ना स-

संकर्षणस्तु प्लुतवान्प्रलम्बेन सहानघः ॥ १९
गोपालास्त्वपरे द्वंद्वं गोपालैरपरैः सह ।
प्रद्रुता लङ्घयन्तो वै तेऽन्योन्यं लघुविक्रमाः ॥ २०
श्रीदाममजयत्कृष्णः प्रलम्बं रोहिणीसुतः ।
गोपालैः कृष्णपक्षीयैर्गोपालास्त्वपरे जिताः ॥ २१
ते वाहयन्तस्त्वन्योन्यं संहर्षात्सहसा द्रुताः ।
भाण्डीरस्कन्धमुद्दिश्य मर्यादां पुनरागमन् ॥ २२
संकर्षणं तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः ।
द्रुतं जगाम विमुखः सचन्द्र इव तोयदः ॥ २३
स भारमसहंस्तस्य रौहिणेयस्य धीमतः ।
ववृधे सुमहाकायश्चन्द्राक्रान्त इवाम्बुदः ॥ २४
स भाण्डीरवटप्रख्यं दग्धाञ्जनगिरिप्रभम् ।
स्वं वपुर्दर्शयामास प्रलम्बो दानवोत्तमः ॥ २५
पञ्चस्तबकयुक्तेन मुकुटेनार्कवर्चसा ।
दीप्यमानाननो दैत्यः सूर्याक्रान्त इवाम्बुदः ॥ २६
महाननो महाग्रीवः सुमहानन्तकोपमः ।
रौद्रः शकटचक्राक्षो नामयंश्चरणैः क्षितिम् ॥ २७
स्रग्दामलम्बाभरणः प्रलम्बाम्बरभूषणः ।
धीरः प्रलम्बः प्रययौ तोयलम्ब इवाम्बुदः ॥ २८
स जहारैव वेगेन रौहिणेयं महासुरः ।

( T4 °मस )हितः कृष्ण· —c) K2 3 सु ( for तु ) K1 Ñ2 बलवान्, D2 भग° ( for प्लुत° )

20 Ś1 om 20 ( cf v l 1 ) —b) K2 परमै. ( for अपरै. ) —c) K1 4 आप्लुता, M1 प्रभूता ( for प्रद्रुता ) D6 लङ्घयन्ते ( for °न्तो ) M2 3 च ( for वै ) T2 अविद्रुता लङ्घयन्तो —d) K1 Ñ1 B3 Ds1 D6 T2 G1 4 5 M1 अन्योन्यं ( for तेऽन्योन्यं ).

21 Ś1 om 21 ( cf v l 1 ) —a) Ñ2 सुदामम् ( for श्री° ) B1 2 Ds T1 M3 त्वजयत्, B3 दुर्जयं, D6 चारुहत्, T2 G M1 2 4 चाजयत् ( for अज° )

22 Ś1 om 22 ( cf v l 1 ) —a) D1 तौ वाहयन्तौ त्वन्योन्यं· —b) V1 संकर्षणात् ( hypermetric ), T3 M3 संघर्षात् ( for सह° ) Ñ2 जिता., V3 द्रुतम् ( for द्रुता ) D6 संस्पर्शात्सह विद्रुता, T2 G संघ( G4 5 °ह )र्षात्सह विद्रुता. —c) D6 G2 उत्सृज्य ( for उद्दिश्य ) D3 भाण्डीरवटमुद्गम्य —d) K4 मर्यादा. ( for °दा ) K1 2 आगता, G2 आविशन् ( for आगमन् ) T2 G1 4 श्रीदामा पुरमा( T2 °नरा )विशत्.

23 Ś1 om 23 ( cf v l 1 ) —c) K1 [अ]भिमुख, Ñ1 विपुलः, T3 विफल, T4 विपुलं ( for विमुख ). —After 23, K4 ins

685* अविषह्यं मन्यमान कृष्णं दानवपुंगव ।
वहन्द्रुततरं प्रागादवरोहणतः परम् ॥
[ = Bhāgavata P, 10 18 25 ]

24 Ś1 om. 24 ( cf v. l 1 ) —a) G3 असहत् ( for °हंस् ) —b) K1 दानव ( for धीमतः ) —c) K4 ऽति·; Ñ2 Dn D1 स; D2 तु ( for सु- ) M4 -महान्कश्चिच् ( for °कायश् ) —d) K2 Ñ1 3 B2 3 Dn Ds D3–5 T1 3 शक्राक्रान्त, K4 सचन्द्रान्त, D6 T4 चन्द्रकान्त ( for चन्द्राक्रान्त )

25 Ś1 om 25 ( cf v l 1 ) G3 om ( hapl ) 25-26, K2 reads the same on marg —a) K1 नग-, Ds1 -वर-, G2 -वन- ( for -वट- ) K2 -प्रस्थं ( for -प्रख्य ) —b) K2 Ñ3 V1 2 B Ds D3 4 T4 स्निग्धाञ्जन-, Ñ1 दि° ( for द° ) K1 -सम, T3 -गिरे ( for -गिरि- ). —c) D6 वपु स, T2 G1 स्ववपुर् ( for स्वं व° )

26 Ś1 om 26 ( cf v l 1 ) G3 om 26 ( cf v l 25 ) —a) D2 एवं, D3 वज्र- ( for पञ्च ) K1 -वर्णेन, Dn1 -लब्धेन, Dn2 Ds D6 T1 2 G1 2 4 5 M -लम्बेन ( for -युक्तेन ) —b) K1 Ñ2 T3 [अ]ग्नि- ( for [अ]र्क- ) —c) D3 6 T1 2 G1, 2 4 5 M4 दीप्यमानो बभौ दै( D3 °नस्ततो दै-; D6 °नोऽभवद्दै )त्य, T3 °मानोऽथ ददृशे —d) K4 T2 सूर्यक्रान्त ( for सूर्या° )

27 Ś1 om 27 ( cf v l 1 ) T4 om ( hapl ) 27–28 —a) B3 महाननैर्महाग्रीवै ( corrupt ) —b) Dn1 स ( for सु- ) —c) T3 चक्रेण ( for चक्राक्षो ) —d) Ñ1 T1 G4 M4 नमयंश् ( for ना° ) K Ñ2 V B Dn1 Ds D1–4 T3 M3 महीम् ( for क्षितिम् ) Ñ3 Dn2 D5 नमयंश्चरणैर्महीम्.

28 Ś1 om 28 ( cf v l 1 ) T4 om 28 ( cf v l 27 ). —a) D6 स्निग्ध· प्र-, T2 G1 3 प्रभूत- ( for स्रग्दाम- ) —b) D5 प्रलम्बो नरभूषण, T1 M1 4 °म्बो हारभूषण —c) K1 2 4 Ñ2 3 ( marg as in text ) V2 3 B1 Dn Ds D1–5 T1 2 G3 M3 4 वीर; K3 प्रीत; B2 3 धीरं ( for धीर ) T3 तु ( for प्र- ) —d) K1 D6 T1 2 G M लम्बतोय, Ñ2 स तोयद, V1 2 तोयपूर्ण, D5 लब्धतोय ( for तोयलम्ब )

29 Ś1 om 29[ab] ( cf v l 1 ) —a) T2 G1, 3 4 सं- ( for स ) K3 4 Dn D1 4, 5 T1 [अ]थ, Ñ1 D3 च ( for [ए]व ) K1 जहारैव स वेगेन —D4 om ( hapl ? ) 29[b]–30[a].

30 D4 om 30[a] ( cf v l 29 ). —b) V2 D6 T2–4

सागरोपप्लवगतं कृत्स्नं लोकमिवान्तकः ॥ २९
ह्रियमाणः प्रलम्बेन स तु संकर्षणो युवा ।
उह्यमान इवैकेन कालमेघेन चन्द्रमाः ॥ ३०
स संदिग्धमिवात्मानं मेने संकर्षणस्तदा ।
दैत्यस्कन्धगतः श्रीमान्कृष्णं चेदमुवाच ह ॥ ३१
ह्रियेऽहं कृष्ण दैत्येन पर्वतोदग्रवर्चसा ।
प्रदर्शयित्वा महतीं मायां मानुषरूपिणीम् ॥ ३२
कथमस्य मया कार्यं शासनं दुष्टचेतसः ।
प्रलम्बस्य प्रवृद्धस्य दर्पाद्द्विगुणवर्चसः ॥ ३३
तमाह सस्मितं कृष्णः साम्ना हर्षकलेन वै ।
अभिज्ञो रौहिणेयस्य वृत्तस्य च बलस्य च ॥ ३४
अहोऽयं मानुषो भावो व्यक्तमेवानुगृह्यते ।
यस्त्वं जगन्मयं गुह्यं गुह्याद्गुह्यतरं गतः ॥ ३५
स्मरार्य तनुमात्मानं लोकानां त्वं विपर्यये ।
अवगच्छात्मनात्मानं समुद्राणां समागमे ॥ ३६
पुरातनानां देवानां ब्रह्मणः सलिलस्य च ।
आत्मवृत्तप्रवृत्तानि संस्मरार्य च वै वपुः ॥ ३७
शिरः खं ते जलं मूर्तिः क्षमा भूर्दहनो मुखम् ।
वायुर्लोकायुरुच्छ्वासो मनःस्रष्टा मनुस्तव ॥ ३८
सहस्रास्यः सहस्राङ्गः सहस्रचरणेक्षणः ।
सहस्रपत्रनाभस्त्वं सहस्रांशुधरोऽरिहा ॥ ३९
यत्त्वया दर्शितं लोके तत्पश्यन्ति दिवौकसः । C 3767 B 2. 14 40 P 2. 14 40

G2–5 M च, G1 ह (for तु) Ś1 K1 B Dn Ds बभौ (for युवा) — c) K2–4 Ñ V B Dn Ds D1–5 T3 4 G3 [आ]काशे (for [ए]केन).

31 a) M2 सदिग्धमिव चात्मान — b) Ś1 यदा, D3 T2 तथा (for तदा) — d) K2 देवम्, V1 चैवम् (for चेदम्) D4 कृष्णं वचनमब्रवीत्

32 a) K2 D6 T1 2 G1 2 4 5 M हृतोऽहं, K3 corrupt, K4 Ñ1 D3. 4 T4 ह्रियामि (K4 °म) (for ह्रियेऽहं) — b) Ś1 K2 3 Ñ2 3 V B Dn Ds D2 3 T3 4 M2 (*inf lin*) 3 -वर्ष्मणा (for -वर्चसा) K1 मन्दरोदग्रवर्ष्मणा — c) B1 3 Ds D6 T G M1. 4 दर्शयित्वा तु म(B3 Ds सुम)हतीं, M2 3 संदर्शयित्वा म°

33 a) T2 कथयस्व (for °मस्य) — c) K1 सु-, M3 वि- (for प्र) — d) Ds मोहाद् (for दर्पाद्)

34 a) K1 वाक्यं (for कृष्ण॰) — b) Ś1 T3 -करेण, K3 4 -बलेन (for -कलेन) G2 च (for वै). V3 D1 2 5 साम्ना हर्षबलेन च, T1 4 साम्ना हर्षाकुलेन वै — d) Ś1 K1 V2 वीर्यस्य च, K2 प्रवृत्तस्य, D6 वृत्तं तस्य; G3 वृद्धस्य च (for वृत्तस्य च) V1 रणस्य (for बलस्य) Ñ2 वृत्तस्य वचन्नस्य च

35 T2 repeats $35^{ab}$ after $37^{ab}$ — b) K1 [अ]व- (for [अ]नु-) K2 Ñ V B Dn Ds D1–5 T3 4 -पाल्यते, D6 T1 2 (both times) G M -कृप्यते (for -गृह्यते) — D5 reads $35^{c}$–$36^{b}$ on marg — c) K3 Ñ2 3 V1 3 Dn D5 T2 4 G3 देवं; V2 देव (for गुह्यं) K1 4 यस्त्वं जगन्मयो गुह्यो (K4 देवो); M4 यस्त्वं जगन्ममांशस्य — d) K1 (*sup lin* as in text) गुह्यपरं, D2 वै गुह्यता (for गुह्यतरं). T3 स्मृतम् (for गतः).

36 a) K1 D4 (marg) [आ]यतनम् (for [आ]र्य तनुम्) K2–4 Ñ V B Dn Ds1 D1 5 T3 4 स्मर नारायणात्मानं. — K4 D1 om (hapl) $36^{bc}$, Ñ1 reads it on marg — b) D2 M4 च (for त्वं) D3 हि (for वि-) — T3 4 om $36^{cd}$. — c) K2 D3 अथ (for अव) Ñ2 V1 3 अवगच्छसि नात्मानं, D2 अवगच्छ त्वमा°. — d) V2 सागराणां (for समुद्राणां).

37 a) T3 4 पुरातनस्त्व देवानां — b) K2 शंकरस्य (for सलिलस्य) — After $37^{ab}$, T2 repeats $35^{ab}$ — c) G2 -वृत्ति- (for -वृत्त) K2 B Ds -प्रवृत्तं च, K3 Dn D1. 5 -प्रभावाना (D5 °णां); Ñ2 3 V D2 3 T4 G4 -प्रवृत्ताना (for °नि). Ś1 K1 4 आत्मवृत्तिप्रवृत्ता(K4 °भावा)ना; D4 °वृत्तं प्रवृत्तं च, T3 °प्रवृत्तिवृत्ताना — d) D6 T1 2 G1 5 M1 2 4 ते (for वै) K2 पुन (for वपु) Ś1 संस्मराद्याथ वै पुन; G2 स्मरार्याद्य हि ते वपु.

38 a) V2 शिरस्ते खं, D3 शिर खं च, T4 शिखरं ते (for शिर खं ते) Ś1 G3 मूर्ध्नि (for मूर्ति) — b) D3 पादौ भूर्, T1 2 G1 3–5 M1 4 क्षमा पादौ (for क्षमा भूर्). — c) K2 वायुर्लोक पुरं श्वासो, D1 °र्लोका मरुच्छ्वासो; D3 -स्ते च मुखश्वासो — d) T2 G2 मनुसृष्टे (G2 °ष्टौ); G1 4 5 M मन. सृष्टौ (for मन स्रष्टा) K2 [अ]भवत्, Ñ V2 B Dn Ds D2–5 ह्यभूत्; V1 3 ह्यहं (for मनुस्). Ś1 तथा (for तव) K3 मन-श्रेष्ठो ह्यभूत्तव.; D1 मनश्चन्द्रो ह्यभूत्तव; D6 T1 मन सृष्टौ तनुस्तव (T1 मनुस्तदा), T3 मन. सामं विदुस्तव

39 a) K2 V1 2 T1 सहस्राक्ष (for °स्यः). Ś1 Ñ2 D2 सहस्रांशुः; D6 °स्रार., M4 °स्रदः (for °स्राङ्ग॰) K1 सहस्रांशुशिरोरुहः — After $39^{ab}$, Ś1 ins

686* सहस्रशीर्षो विश्वात्मा शतजिह्वः शतोदर. ।

यत्त्वया नोक्तपूर्वं हि कस्तदन्वेष्टुमर्हति ॥ ४०
यद्वेदितव्यं लोकेऽस्मिंस्तत्त्वया समुदाहृतम् ।
विदितं यत्तवैकस्य देवा अपि न तद्विदुः ॥ ४१
आत्मजं ते वपुर्व्योम्नि न पश्यन्त्यात्मसंभवम् ।
यत्तु ते कृत्रिमं रूपं तदर्चन्ति दिवौकसः ॥ ४२
देवैर्न दृष्टश्चान्तस्ते तेनानन्त इति स्मृतः ।
त्वं हि सूक्ष्मो महानेकः सूक्ष्मैरपि दुरासदः ॥ ४३
त्वय्येव पर्वतस्तम्भा शाश्वती जगती स्थिता ।
अचला प्राणिनां योनिर्धारयत्यखिलं जगत् ॥ ४४
चतुःसागरभोगस्त्वं चातुर्वर्ण्यविभागवित् ।
चतुर्युगेशो लोकानां चातुर्होत्रफलाशनः ॥ ४५
यथा त्वमसि लोकानां तथाहं तच्च मे मतम् ।
उभावेकशरीरौ स्वो जगदर्थे द्विधा कृतौ ॥ ४६
लोकानां शाश्वतो देवस्त्वं हि शेषः सनातनः ।
आवयोर्देहमात्रेण द्विधेदं धार्यते जगत् ॥ ४७
अहं यः स भवानेव यस्त्वं सोऽहं सनातनः ।
द्वावेव विहितौ ह्यावामेकदेहौ महाबलौ ॥ ४८
तदास्से मूढवत्किं त्वं प्रागेनं जहि दानवम् ।

---

— $^{c}$ ) K2 4 Ñ V B Dn Ds D1 3 4 पद्म , D6 T1 2 G2 3 5 M -वर्ण- ( for -पत्र- ) D5 सहस्रपात्पद्मनाभ — $^{d}$ ) Ś1 सहस्रार्ध , T1 M2 3 °स्रार- ( for °स्राशु- ). B3 -धरो हरि , T2 G1 4 5 M1 4 -शिरोरुह, , T3 4 धरो युवा , G3 शिरोसुख ( for -धरोऽरिहा ) K1 सहस्रचरणेक्षण = $39^{b}$

40 After $40^{a}$, D2 reads $42^{bc}$, repeating $42^{b}$ in its proper place — $^{b}$ ) D2 तदर्चन्ति ( for तत्पश्यन्ति ) — D6 G5 om ( hapl ) $40^{c}$–$42^{d}$ — $^{c}$ ) K4 त्वयैव ; T2 वचो न ( for त्वया न ) — $^{d}$ ) D3 वेदितुम् ( for अन्वेष्टुम् ) M1 2 न तत्पश्यन्ति देवता.

41 D6 G5 om 41 ( cf v l 40 ) T3 4 om $41^{ab}$ — $^{a}$ ) B2 तद् ( for यद् ) — $^{b}$ ) S1 Ñ1 B2 3 यत् , K3 ते ( for तत् ) — $^{c}$ ) K2 यत्र च , V3 यत्तु वा ( for यत्तव ) — $^{d}$ ) T1 M2 3 चापि ( for अपि )

42 D6 G5 om 42 ( cf v l 40 ) D2 reads $42^{bc}$ after $40^{a}$, repeating $42^{b}$ here — $^{b}$ ) D2 ( first time ) तत् ( for न ) — $^{c}$ ) M3 तत् ( for ते ) — D2 om $42^{d}$ — $^{d}$ ) K1 [इ]ह देवता ( for दिवौकस ) — For $42^{cd}$, T3 subst ·

687* यस्य चैवंविधं रूपं पश्यन्ति त्रिदिवौकस ।

43 $^{a}$ ) T1 अदृष्टश् ( for न दृ° ) K2 तु ( for च ) D3 [अ]न्तस्थस् ( for °स्ते ) K4 Ds D2 5 यत्तु ( Ds D5 °त्ते ) देवैर्न दृष्टोऽन्तस् ( D2 °ष्टं ते ) — $^{b}$ ) Ñ1 D6 G3–5 श्रुति , Ds T2 M श्रुत ( for स्मृत. ) — $^{d}$ ) Ñ1 D6 T2 G1 4 5 M3 दुरानुग , V2 B3 D4 °सदै , B1 2 °गम ( for °सद )

44 $^{a}$ ) D6 G3–5 M1–3 [ए]षा ( for [ए]व ) K Ñ V Dn Ds D1–3 5 T3 4 त्वय्येव ( K1 °षा ) जगत स्तम्भे , T1 M4 °षा सर्वत स्तब्धा , T2 G1 °षा पार्वतीस्तम्भा , G2 °षा जगती सर्वा· — $^{b}$ ) K4 शाश्वता ( for °ती ) G2 समव- ( for जगती ) — $^{c}$ ) T1 M1 त्वमेव ( for अचला ) — $^{d}$ ) T1 M1 4 धारयसि ( for °ति ) T3 ता धारयति नित्यश

45 $^{a}$ ) G(ed ) -योनिस् ( for -भोगस् ) — $^{b}$ ) Ñ2 D2 चतुर्वर्ण- , G3 M3 चातुर्वर्ण ( for °र्वर्ण्य- ). T3 विभागकृत् — $^{c}$ ) Bom and Poona eds चतुर्युगेषु लोकाना , M4 चतुर्वर्गाय लो° — G2 om ( hapl ) $45^{d}$–$46^{a}$

46 G2 om $46^{a}$ ( cf v l 45 ) — $^{a}$ ) K2–4 Ñ V B D ( except D6 ) T3 4 M4 [अ]हमपि ( for त्वमसि ). — $^{b}$ ) K2–4 Ñ V B Dn Ds D1 2 4. 5 T3 4 G4 M4 त्व ( for [अ]हं ) D6 त्वं ( for तच् ) G4 मति ( for मतम् ) D3 तथा त्व वर्तसे सताम् — $^{c}$ ) Ś1 -शरीरौ द्वौ ; K1 °रौ हि , K4 D2 3 6 G3 5 M1 2 4 °रस्थौ ; T1 °रौ वै ( for °रौ स्वो ) — $^{d}$ ) D6 G2 M1 3 4 जगतोऽर्थे ( for °दर्थे ) — After 46, Ñ2 3 V2 3 B Ds D4 ins

688* अहं वा शाश्वत कृष्णस्त्वं वा शेष. पुरातन· ।

[ Ñ2 हि ( for the second वा ) D4 ( marg ) सनातन. ( for पुरा° ) ]

— After the above, Ñ2 V2 3 B1 read $50^{cd}$ repeating it in its proper place

47 D4 om $47^{ab}$ — $^{a}$ ) D6 T2 G2–5 M4 ईश्वरो ( for शाश्वतो ) — $^{b}$ ) D3 देव: ( for शेष ) — After $47^{ab}$, K1 reads $48^{cd}$, repeating it in its proper place D3 T4 om ( hapl ) $47^{c}$–$48^{b}$ — $^{c}$ ) M1 2 भेद- ( for देह- ) — $^{d}$ ) K4 द्विभेदं ( for द्विधेदं ) T1 M1 पाल्यते , T2 G युज्यते , M2. 3 भिद्यते ( for धार्यते ) Ś1 द्विधैवं वञ्च्यते जगत्

48 D3 T4 om $48^{ab}$ ( cf v l 47 ) D1 om $48^{ab}$ — $^{a}$ ) B3 एको , G3 देवो ( for एव ) — $^{b}$ ) D2 ( marg as in text ) त्वं हि , M4 त्वं च ( for यस्त्वं ) D6 स नामत ( for सनातनः ). — K1 reads $48^{cd}$ for the first time after $47^{ab}$. — $^{c}$ ) K1 ( both times ) [अ]वहितौ ; D6 T1, 2 G1 2, 5

मूर्ध्नि देवरिपुं देव वज्रकल्पेन मुष्टिना ॥ ४९
संस्मारितः स कृष्णेन रौहिणेयः पुरातनम् ।
स बलेन तदा पूर्णस्त्रैलोक्यान्तरचारिणा ॥ ५०
ततः प्रलम्बं दुर्वृत्तं सुबद्धेन महाभुजः ।
मुष्टिना वज्रकल्पेन मूर्ध्नि वीरः समाहनत् ॥ ५१
तस्योत्तमाङ्गं स्वे काये विकपालं विवेश ह ।
जानुभ्यां जगतीं चैव गतासुः स जगाम ह ॥ ५२
जगत्यां विनिकीर्णस्य तस्य रूपमभूत्तदा ।

प्रलम्बस्याम्बरस्थस्य मेघस्येव विदीर्यतः ॥ ५३
तस्य भग्नोत्तमाङ्गस्य देहात्सुस्राव शोणितम् ।
बहुगैरिकसंयुक्तं शैलशृङ्गादिवोदकम् ॥ ५४
स निहत्य प्रलम्बं तु संहृत्य बलमात्मनः ।
पर्यष्वजत कृष्णं वै रौहिणेयः प्रतापवान् ॥ ५५
तं तु कृष्णश्च गोपाश्च दिविस्थाश्च दिवौकसः ।
तुष्टुवुर्निहते दैत्ये जयाशीर्भिर्महाबलम् ॥ ५६
बलेनायं हतो दैत्यो बालेनाक्लिष्टकर्मणा । C 3785 B 2 14. 57 P 2 14 57

---

सहितौ ( for वि° ) — $^{d}$ ) K1 ( both times ) V2 D6 T1 2 G M1 4 द्विधाकृतौ ( for महाबलौ )

49 $^{a}$ ) Ñ2 3 V1 तदा( V1 °द )सि, V2 B3 M4 तदा स ( V2 स- ), G2 वदमे, G3 तथा चेन् ( for तदास्ते ) Ñ1 T4 त्वं कि ( by transp ) T3 तस्मादेन देवशत्रु — $^{b}$ ) K2 3 Ñ V1 3 Dn D1–5 प्राणेन, V2 D6 T2 G1 3–5 वेगेन, B Ds T3 4 M2 बलेन, T1 G2 M1 4 द्रोहिणं ( for प्रागेन ) — $^{c}$ ) D6 यं मूर्धनि देवरिपु

50 Before 50, K2 B T2–4 ins वैशंपायन· — $^{a}$ ) K4 D1 स ( for स ) K2 3 Ñ2 3 V Dn D2–5 G1 3 4 M3 4 तु ( for स ) K1 स्मारित स तु कृष्णेन, T3 ससस्मरन्कृष्णवाक्येन· — $^{b}$ ) Ñ3 ( marg ) V1 T2 G1 प्रतापवान्, V2 Ds D6 T3 G2–5 M1 2 4 पुरातन ( for °तनम् ) — Ñ2 V2 3 B1 read 50$^{cd}$ for the first time after 688* — $^{c}$ ) V2 ( second time ) B1 ( first time ) Ds G3 M1 2 स्व- ( for स ) T1 ततः ( for तदा ) Ñ1 क्रान्तस् ( for पूर्णस् ) K1 Ñ2 V2 3 ( last three first time ) स्वबलेन भवान्पू( K1 तत पू )र्णस्, K2–4 Ñ2 ( second time ) 3 V1 3 B1 ( last two second time ) Dn D1 3–5 T4 बलेनापूर्यत तदा, D2 बलेनापूरयस्तत्र — $^{d}$ ) D6 T1 2 G M1 3 4 -पूरिणा ( for चा° ) M2 त्रैलोक्यस्यान्तकारिणा — For 50$^{cd}$, T3 subst

689* बलेनायुज्यत तदा महतान्येन दीप्तिमान् ।

51 $^{b}$ ) Ś1 D2 सुबुद्धेन, K1 V2 T1 M4 स्व( M4 स )बलेन; B3 Dn1 D3 T4 M3 स( M3 स्व ) बद्धेन, D6 सुबन्धेन, T2 G सुबलेन ( for सुबद्धेन ) D4 महाबल· ( for °भुज· ) K4 सबद्धेन महाभुजस्; M1 सुबलेन महान्मुद्गु· — $^{d}$ ) K1–3 Ñ1 2 V2 3 Dn D3 T1 3 4 चैनं ( for वीर ). K4 Ñ3 V1 B Ds D2 5 मूर्ध्नि चैनमताडय( K4 °थाहन )त, D4 मूर्ध्नि चैनं समावधीत्

52 $^{a}$ ) Ś1 Ds [उ]त्तमाङ्गे ( for °ङ्गं ) — $^{b}$ ) K4 विकरालं, D6 M1 °लाप, G2 सकपोल ( for विकपालं ) — For 52$^{ab}$, T3 subst. ,

690* तेन मुष्टिप्रहारेण कपाल तद्द्विधाभवत् ।

— $^{c}$ ) K2–4 Ñ V B D ( except D6 ) T4 जानुभ्यां चाह( K3 B1 2 Ds च ह )त शेते T °श्यामपतद्रमौ — $^{d}$ ) M1–3 पपात ( for जगाम ) K2–4 Ñ V B D ( except D6 ) T3. 4 गतासुर्दानवोत्तम

53 $^{a}$ ) K2–4 Ñ V B D ( except D6 ) T2–4 G1 विप्र- ( for विनि- ) — $^{b}$ ) K2 4 Ñ V1 3 B1 2 Ds1 D1 3 5 T4 देहमभूत्; Ds2 D4 देहो बभौ, D2 देहो ह्यभूत् ( for रूपमभूत् ) — $^{c}$ ) T4 [आ]हवस्थस्य ( for [अ]म्बर° ) — $^{d}$ ) T4 पवनस्य ( hypermetric ) ( for मेघस्य ) T1 व्यशीर्यत; M4 विदीर्यते ( for °र्यत )

55 $^{a}$ ) K2 Ñ1 B2 ( marg ) Dn D1 5 T2 G1 4 सनिहत्य, B1 2 Ds D2 3 T1 G3 5 तं नि°, T3 4 निहत्य तु, G2 रौहिणेय ( for स निहत्य ) K2 4 D4 5 T2 4 तं ( for तु ) D3 स निहत्य प्रलम्बाख्यं — $^{b}$ ) K1 प्रहृन्य वपुरात्मन., B3 सहृत्य बलवाहन. — $^{c}$ ) K1 तं कृष्णं, K2 4 Ñ V B Dn Ds D1 3–5 T3 4 G4 M4 वै कृष्णं ( by transp ). D2 ( marg as in text ) भूयोऽव्रजत वै कृष्ण — T1 M4 repeat and G2 reads 55$^{d}$–56$^{c}$ after 58$^{c}$ — $^{d}$ ) T1 ( second time ) G2 M4 ( second time ) रौहिणेयं महाबलम्

56 For the repetition in T1 M4 and the sequence in G2, cf v l 55 — $^{a}$ ) T1 ( second time ) G2 M3 4 ( second time ) ततः ( for तं तु ) D5 तु ( for the first च ) — $^{b}$ ) D3 दिवि तुष्टा, T3 दिवि सर्वे ( for दिविस्थाश्च ). — $^{c}$ ) T1 ( second time ) तुष्टुवुर्निर्जितैर्दैत्यैर् (sic) — M1 om ( hapl ) 56$^{d}$–58$^{c}$.

57 M1 om 57 ( cf v l 56 ) — $^{a}$ ) T3 [अ]सौ ( for [अ]यं ) D3 बलेनास्मिन्हते दैत्ये — $^{b}$ ) K1 B1 2 D6 बलेन ( for बा° ). K3 D4 [आ]कृष्ट- ( for [अ]क्लिष्ट ) V3 -कारिणा ( for कर्मणा ). — After 57$^{ab}$, Ś1 K1 3 Ñ3 V2 Dn Ds1 ( marg ) s2 D4 5 ( marg ) ins

691* विचरन्त्यशरीरिण्यो वाच· सुरसमीरिताः ।

बलदेवेति नामास्य देवैश्चोक्तं दिवि स्थितैः ।। ५७
बलं तु बलदेवस्य तदा भुवि जना विदुः ।
कर्मजं निहते दैत्ये देवैरपि दुरासदे ।। ५८

इति श्रीहरिवंशे अष्टपञ्चाशत्तमोऽध्यायः ।। ५८ ।।

## ५९

वैशंपायन उवाच ।
तयोः प्रवृत्तयोरेवं कृष्णस्य च बलस्य च ।
वने विचरतोर्मासौ व्यतियातौ स्म वार्षिकौ ।। १
व्रजमाजग्मतुस्तौ तु व्रजे शुश्रुवतुस्तदा ।
प्राप्तं शक्रमहं वीरौ गोपांश्चोत्सवलालसान् ।। २
कौतूहलादिदं वाक्यं कृष्णः प्रोवाच तत्र वै ।
कोऽयं शक्रमहो नाम येन वो हर्ष आगतः ।। ३
तत्र वृद्धतमस्त्वेको गोपो वाक्यमुवाच ह ।
श्रूयतां तात शक्रस्य यदर्थं मह इष्यते ।। ४
देवानामीश्वरः शक्रो मेघानां चारिसूदन ।
तस्य चायं क्रतुः कृष्ण लोकपालस्य शाश्वतः ।। ५
तेन संचोदिता मेघास्तस्यायुधविभूषिताः ।
तस्यैवाज्ञाकराः सस्यं जनयन्ति नवाम्बुभिः ।। ६
मेघस्य पयसो दाता पुरुहूतः पुरंदरः ।

---

[ $Dn$ $D_5$ विवदन्ति , $Ds$ विचरन्त्यो ( for °रन्ति ) $\tilde{N}_2$ वाचस्त्रिदशानि सुता ( for $^b$ ) ]
— $^d$ ) $\tilde{N}$ V B $Dn$ $Ds$ $D_{1-5}$ $T_{3\,4}$ $M_4$ उक्तं ( for चोक्तं )

58 $M_1$ om $58^{abc}$ ( cf v 1 56 ) — $^b$ ) $G_2$ जगु ( for विदु ) — $^c$ ) $K_2$ $\tilde{N}_3$ $V_1$ $D_3$ $T_{3\,4}$ प्रलम्बे , $K_{3\,4}$ $D_1$ कंसजे , $\tilde{N}_2$ $V_3$ $B_{2\,3}$ $Ds$ कर्मणा , $D_6$ $T_{1\,2}$ $G_{1\,3-5}$ °भिर् , $M_{2\,3}$ मुष्टिना ( for कर्मजं ) $G_2$ कर्मभिर्निहतैर्दैत्यैर् , $M_4$ °भिर्निर्जिते दैत्ये — After $58^c$, $T_1$ $M_4$ repeat and $G_2$ reads $55^d$–$56^c$ — $^d$ ) $V_2$ दुरासदम् ( for °सदे )

Colophon — *Mention of the Epic* $K_3$ $\tilde{N}_2$ $T_3$ — *Mention of Khila* $\acute{S}_1$ $K_3$ $\tilde{N}_3$ V B $Dn_2$ $Ds_1$ $D_1$ — *Sub-parvan* $K_4$ $\tilde{N}_3$ V $Dn$ $D_{1-3\,5}$ बालचरितम् , $T_4$ आश्चर्यपर्व — *Adhy name* $\tilde{N}$ $T_4$ $G_{2\,3}$ $M_4$ प्रलम्बवध — *Adhy no* ( figures, words or both ) $K_3$ $M_{1-3}$ 67 , $\tilde{N}_3$ $V_1$ $T_2$ $G_1$ 70 , $V_2$ $T_1$ $G_{3\,5}$ $M_4$ 71 , $V_3$ $Dn$ $Ds_2$ 69 , $D_3$ 75 , $D_4$ $G_{2\,4}$ 68 , $T_3$ 77 , $T_4$ 66 — *Śloka no* $Dn$ $D_4$ 58 , $Ds_2$ 59 , $D_3$ 57.

### 59

1 $K_2$ $T_{1\,3}$ om the ref — $^a$ ) $\acute{S}_1$ $K_1$ ताभ्यामेवं प्रवृद्धाभ्यां — $^c$ ) $D_6$ $G_2$ वै ( for वि- ) $\acute{S}_1$ $K_1$ चत्वारो वै वने मासा — $^d$ ) $\tilde{N}_2$ त्वतियातौ , $D_{2\,3\,5}$ व्यतिक्रान्तौ , $G_5$ $M_{1\,2}$ व्यति( $G_5$ °ती )याता ( for °यातौ ) $K_4$ तु , $B_2$ च ( for स्म ) $\acute{S}_1$ $K_1$ $T_3$ $G_2$ व्यति( $T_3$ प्रति- ; $G_2$ परि )याताः स्म वार्षिकाः ; $K_2$ व्यपयातौ तु वार्षिकौ

2 $^a$ ) $M_{1-3}$ तत्र ( for तौ तु ) — $^b$ ) $D_4$ वने ( for व्रजे ) — $^c$ ) $D_6$ $T_{1\,3}$ $G_3$ शक्रमख ( for °महं ) $T_4$ प्राप्तौ शक्रमखं वीरौ

3 $^a$ ) $T_2$ $M_3$ कौतूहलम् ( for °लाद् ) — $^b$ ) $K_2$ B $D_{3-5}$ $T_{3\,4}$ तान् , $\tilde{N}_3$ $V_1$ $G_3$ ह ( for वै ) — $^c$ ) $T_4$ सो ( for को ) $T_1$ वा , $G_4$ वै ( for ऽय ) $D_6$ $T_3$ $G_3$ $M_4$ शक्रमखो ( for °महो ) — $^d$ ) $\acute{S}_1$ $K_3$ $\tilde{N}_{1\,2}$ $V_3$ $D_{2\,5}$ हर्षम् ( for हर्ष )

4 $^a$ ) $T_{1\,2}$ $G_{3\,5}$ $M_{1\,2}$ तं तु , $T_4$ ततो ( for तत्र ) $\tilde{N}_1$ वृद्धतरस् ( for °तमस ) $M_3$ तं तु वृद्धतरस्त्वेको — $^b$ ) $D_5$ गोपालो वाक्यमब्रवीत् — $^c$ ) $V_2$ वत्स ( for तात ) — $^d$ ) $\acute{S}_1$ $K_3$ यदर्थं क्रियते मह ( $K_3$ °ख ), $K_{1\,4}$ °र्थं यज्ञ इज्यते , $K_2$ $\tilde{N}$ $V_{2\,3}$ B $Dn$ $Ds$ $D_{2\,4\,5}$ $T_1$ °र्थं ध्वज ( $D_4$ $T_1$ मख ) इज्यते , $V_1$ $D_3$ $T_{3\,4}$ $M_3$ °र्थं ध्वज ईह( $D_3$ $M_3$ इष्य )ते , $D_1$ °र्थं व्रज ईक्ष्यते , $D_6$ $T_2$ $G_{1\,3}$ °र्थं मखमि( $G_3$ °ख इ )ष्यते

5 $^b$ ) $K_2$ देवानां ( for मेघानां ) $Ds$ -मर्दन ( for -सूदन ) — $^c$ ) N ( except $\acute{S}_1$ $K_4$ ) $T_4$ $G_{2-5}$ $M_{1\,4}$ महः , $T_{1\,2}$ $G_1$ मघ. , $T_3$ G( ed ) मख ( for क्रतु· ) — $^d$ ) N ( except $\acute{S}_1$ $K_1$ $D_6$ ) $T_{3\,4}$ -नाथस्य ( for पालस्य )

6 $^a$ ) $K_3$ $D_4$ -नोदिता , $\tilde{N}_3$ $V_1$ -देशिता ( for -चोदिता ) — $^b$ ) $K_2$ $B_2$ $D_{4,\,5}$ $T_{3\,4}$ चापवि- , $K_{3\,4}$ $\tilde{N}$ V $B_1$ $Dn$ $Ds$ $D_{1-3}$ $T_1$ चायुध- , $B_3$ चोपरि ( for [आ]युधवि- )

7 $^c$ ) $G_2$ संस्मारित· ( for संप्रहृष्ट )

8 $^a$ ) $K_1$ संवर्धितं ( for संपादितं ). — $^b$ ) $\acute{S}_1$ $K_1$ B $Ds$

संप्रहृष्टः स भगवान्प्रीणयत्यखिलं जगत् ॥ ७
तेन संपादितं सस्यं वयमन्ये च मानवाः ।
वर्तयामोपभुञ्जानास्तर्पयामश्च देवताः ॥ ८
देवो वर्षति लोकेषु ततः सस्यं प्रवर्तते ।
पृथिव्यां तर्पितायां च सामृतं लक्ष्यते जगत् ॥ ९
क्षीरवत्य इमा गावो वत्सवत्यश्च निर्वृताः ।
तेन संवर्धिता गावस्तृणैः पुष्टाः सपुंगवाः ॥ १०
नासस्या नातृणा गावो न बुभुक्षार्दितो जनः ।
दृश्यते यत्र दृश्यन्ते वृष्टिमन्तो बलाहकाः ॥ ११
दुदोह सवितुर्गा वै शक्रो दिव्याः पयस्वलाः ।
ताः क्षरन्ति नवं क्षीरं मेध्यं मेघौघधारितम् ॥ १२
वाय्वीरितं तु मेघेषु करोति निनदं महत् ।
जवेनावर्जितं चैव गर्जतीति जना विदुः ॥ १३
तस्य चैवोह्यमानस्य वातयुक्तैर्बलाहकैः ।
वज्राशनिसमाः शब्दा भवन्त्यगमभेदिनः ॥ १४
तज्जलं वज्रनिष्पेषैर्विमुञ्चति नभोगतम् ।
बहुभिः कामगैर्मेघैः शक्रो भृत्यैरिवेश्वरः ॥ १५
क्वचिद्दुर्दिनसंकाशैः क्वचिच्छिन्नाभ्रसंस्थितैः । C 3802 B 2 15. 16 P 2. 15 16

D2 देहिन ( for मानवा ) —$^{c}$) K1–3 Ñ V B1 3 Dn Ds D2 4 5 T2 G1 3 युञ्जानास् ( for -भु° ). K4 वर्तयाम प्रयुञ्जानास्, D3 वर्तनायोपयु° —$^{d}$) M1–3 तर्पयन्तश् ( for °यामश् ).

9 $^{a}$) Ds T3 G1 4 5 देवे ( for देवो ) K2 4 Ñ V B Dn D1–5 T4 G3 M4 देवे वर्षति लोकेऽस्मिन् ( Ñ3 V1 °केऽत्र ), K3 देवा वर्षन्ति लोकेऽस्मिन् —$^{b}$) Ś1 K2 Ñ1 B Ds T2 4 प्रवर्धते ( for °र्तते ) —$^{c}$) Ś1 वर्धितायां ( for तर्पि° ) N ( except Ś1 D6 ) T1 3 4 G3 M4 तु ( for च ) —$^{d}$) K2 शाश्वतं, T3 4 तर्पित ( for सामृतं )

10 $^{a}$) Ś1 तत· कृष्ण, K1 D2 3 T1 M4 इमा कृष्ण; K2–4 Ñ V B Dn Ds D1 5 त्विमा गावो, D4 स्थिता गावो ( for इमा गावो ) —$^{b}$) K4 V3 D1 निर्मिता ( for निर्वृता ) —$^{c}$) B Dn D5 G3 तात, M1–3 कृष्ण ( for गावस् ) —$^{d}$) T1 तुष्टा ( for पुष्टा· ) T3 4 च, G2 4 M1 4 सु- ( for स- ).

11 $^{a}$) D6 G4 5 नासस्य ( for °स्या ) G1 नातृणं ( for °णा ) K2–4 Ñ V B D ( except D6 ) T3 4 भूमिर् ( for गावो ) — M4 om 11$^{b}$–12$^{c}$ —$^{b}$) V1 D3 T2 G1 2 न बुभुक्षार्दिता जना —$^{c}$) Ñ3 V1 D3 दृश्यन्ते ( for °ते ). G3 दृश्यन्ते यदि सर्वत्र

12 M4 om 12$^{abc}$ ( cf v l 11 ) —$^{a}$) K2 3 V1 3 Dn Ds D1 4 स विभुर् ( for सवितुर् ) D2 3 6 G2. 4 M1–3 गाव, T3 गोभि ( for गा वै ) —$^{b}$) T4 दिव्यं ( for दिव्या ) Ś1 K1 3 4 Ñ2 V1 Dn D2 पयस्विनीः ( for °स्वला ) T1 शक्रो दिव्यं पय सदा —$^{c}$) Ñ2 गा ( for ता ) —$^{d}$) V2 M1–3 मेघोप- ( for मेघौघ- ) K1 4 -धारया, T3 -वारिणा ( for -धारितम् ) Ś1 मेध्ये मेघौवधारया

13 $^{a}$) Ś1 G2 M3 तन्; T3 4 च ( for तु ). K1 ( *sup lin* ) देशेषु, T1 2 G1 3–5 M1 2 ( *inf lin* as in text ) मेघाम्बु ( for मेघेषु ) K4 वाय्वन्तरं तु मेघे तु· —$^{b}$) Cal. ed कदनं, M1 lacuna ( for निनदं ). T3 मुहु. ( for महत् ) —$^{c}$) K3 4 Ñ2 3 V1 2 B1 3 Dn Ds D1. 4. 5 T1. 3 G2, 3, 5 M2–4 [आ]वर्तितं ( for °र्जितं ) D5 G2–5 [ए]तद्; G1 [इ]दं ( for [ए]व ).

14 Ñ2 om 14$^{ab}$ —$^{b}$) Ś1 Ñ1 3 B Dn2 T1 G3 वायु- ( for वात- ) —$^{c}$) M1–3 -युता ( for -समा ). —$^{d}$) Ś1 K1 Ñ1 चरन्ति, Ds1 श्रूयन्ते ( for भवन्ति ) T2 G1. 2 4. 5 M4 [अ]द्रवि- ( for [अ]गम- ) K2–4 Ñ2 3 V B Dn Ds2 D1–5 T3 4 G3 श्रूयन्ते नग( Ds2 D4 मर्म )भेदिन —For 34$^{cd}$, D6 subst

692* वज्राशनिसमाञ्शब्दान्गार्जन्तो गगने स्थिता· ।

15 $^{a}$) T2–4 G1 2. 4 -निर्घोषैर्- ( for -निष्पे° ) D6 तज्जलं चैव निर्घोषैर् —$^{b}$) K2 3 Ñ3 V1 Dn D4 5 M4 नभोगत.; Ñ1 2 V3 °गता, V2 B Ds D3 T3 4 G3–5 °गतै ( for °गतम् ) Ś1 D1 6 T2 G1 विमुञ्चन्ति नभोगना ( T2 G1 °तै ) K4 मुञ्चन्ति च नभोगताः, D2 न मुञ्चति नभोगतै, G2 निनदन्तो नभोगतै —$^{c}$) T3 4 वल्गुभि ( for बहुभि· ) —$^{d}$) G4 भूतैर् ( for भृत्यैर् ) Ś1 K1 विसर्जितै; Ñ1 इतस्तत ( for इवेश्वर· ).

16 $^{a}$) Ś1 -मेघाभै, K1 4 संघातै· ( for -संकाशै· ) —$^{b}$) K1 छन्नाभ्र- ( for छि° ) —$^{b}$) K2 4 Ñ V2 B D ( except D6 ) -सन्निभै· ( for -संस्थितै ) K3 V3 T3 क्वचिच्छन्नाभ्रसंनिभै; V1 °च्छिन्नाभ्रसन्निभै, T4 °च्छीकरवर्षिभि — Ñ2. 3 V B D2 3 T3 ins. after 16$^{ab}$: Ds after 16:

693* क्वचिद्भिन्नाञ्जनाकारै क्वचिच्छीकरवर्षिभि ।
मण्डयत्येव देवेन्द्रो विश्वमेव नभो घनै. ॥

[ Ds om line 1 —( L 1 ) D3 करक ( for ·ीकर- ) — G3 om line 2, D3 reads it after 16. —( L 2 ) V1. 3 D3 मण्डयन्, Ds मज्जयन् ( for मण्डयति ) D2 [ए]तद् ( for [ए]व ). B1 -गतै ( for घनै ) Ds विश्वमत्र नभोगतै ( for $^{b}$ ) ]

— B3 D2 om. 16$^{cd}$. —$^{c}$) K1, 2 Ñ1. 2. 3 ( marg. ) V B3

क्वचिच्छीकरमुक्ताभं कुर्वद्भिर्गगनं घनैः ॥ १६

एवमेतत्पयो दुग्धं गोभिः सूर्यस्य वारिदः ।
पर्जन्यः सर्वलोकानां भवाय भुवि वर्षति ॥ १७

तस्मात्प्रावृषि राजानः सर्वे शक्रं मुदा युताः ।
महैः सुरेशमर्चन्ति वयमन्ये च मानवाः ॥ १८

गोपवृद्धस्य वचनं श्रुत्वा शक्रपरिग्रहे ।
प्रभावज्ञोऽपि शक्रस्य वाक्यं दामोदरोऽब्रवीत् ॥ १९

वयं वनचरा गोप गोपा गोधनजीविनः ।
गावोऽस्मद्दैवतं विद्धि गिरयश्च वनानि च ॥ २०

कर्षकाणां कृषिर्वृत्तिः पण्यं विपणिजीविनाम् ।
अस्माकं गौः परा वृत्तिरेतत्त्रैविध्यमुच्यते ।
विद्यया यो यया युक्तस्तस्य सा दैवतं परम् ॥ २१

योऽन्यस्य फलमश्नानः करोत्यन्यस्य सत्क्रियाम् ।
द्वावनर्थौ स लभते प्रेत्य चेह च मानवः ॥ २२

कृष्यन्ताः प्रथिताः सीमाः सीमान्तं श्रूयते वनम् ।
वनान्ता गिरयः सर्वे सा चास्माकं गतिर्ध्रुवा ॥ २३

श्रूयन्ते गिरयश्चापि वनेऽस्मिन्कामरूपिणः ।
प्रविश्य तास्तास्तनवो रमन्ते स्वेषु सानुषु ॥ २४

---

D8 D1 2 4 T2–4 G1 2 4 5 M -मूकत्वं, K1 ( *sup lin* ) -मुक्तानां, K3 Dn वर्णाभं, K4 ससक्त, Ñ3 -मूलत्वं, G(ed) -मुक्ताभिः ( for -मुक्ताभं ) D3 क्वचिच्छंकररूपत्वं; D6 °च्छिशिर-मूकत्वं, T1 G3 °च्छिखरभृङ्ग( G3 °मूक )त्वं — d ) Ś1 कुरुते; Ñ2 कुर्वन्ति ( for °द्भिर् ) K2 D3 4 T1 2 G3 4 गगने ( for °नं ) Dn तथा ( for घनै ) D8 कुर्वद्भिर्गगनेचरैः, D5 कुरुते गगनं घन ; G1 5 कुरुते गगने घनै .

17 b ) K2 V2 3 B Ds D1 T3 4 शाश्वतम्; D3 6 T1. 2 G1. 3 5 M वारिदै ; G2 °दा ( for °द ) — c ) N ( except Ś1 D6 ) T1 3 4 -भूतानां ( for -लोकानां ). — After 17, K Ñ2. 3 V B D ( except D6 ) T3 ins .

694* यस्मात्प्रावृडियं कृष्ण शक्रस्य भुवि भाविनी ।

[ K2 तस्मात् ( for य° ) V1 सुवि-, D3 तु वि- ( for सुवि ).]

18 b ) V3 T2 मुदान्विता ( for मुदा युता ) — c ) Ñ1 तत॰, D6 T2 G2 4 G(ed) मखै , T1 M4 मेघै , T4 om ( for महै ). T3 सुरेशमर्चयन्तीह — After 18, K2–4 Ñ V B Dn Ds D1–5 ins an addl colophon [ *Mention of the Epic* K3 Ds2. — *Mention of Khila* K3 Ñ2 3 V B Ds D1. — *Sub-parvan* K2–4 Ñ V B2 Dn Ds D1–4 बालचरितम्, D5 पारिजात — *Adhy name* B1 घोषवाक्यम्, D2 शक्रयागारम्भ — *Adhy no* K2 D1 68, Ñ3 V1 71, V 72; V3 Dn Ds2 D4 70, D3 66, G(ed) 15 ].

19 Before 19, All Mss. ( except G2 M4 ) ins वैशंपायन उवाच — b ) G2 तस्य ( for शक्र- ) K3 D3 T4 -परिग्रह ( for °ग्रहे ) — c ) D6 T1. 2 G1–3 5 M1 3 4 हि ( for ऽपि ). K3 प्रभावज्ञेऽपि शक्रस्य .

20 a ) B3 वनं, Dn1 उप- ( for वयं ) K Ñ V B Dn Ds D1–5 T3 4 गोपा ( for गोप ) D6 T1 2 G2 3 5 वयं वनेचरा गोपा — b ) K Ñ2. 3 V B D T G M4 सदा गो- ; Ñ1 गोवित्त- ( for गोपा गो- ) — c ) M1–3 देवता ( for दैवतं ). D6 T2 G1–4 गाश्चास्मद्देवता विद्धि, T3 गावो हि दैवमस्माकं; G5 गाश्चास्मिन्देवतावद्धि — d ) D6 T2 G1–3 5 M4 गिरीनपि, M1–3 गिरीनथ ( for गिरयश्च )

21 a ) Ś1 कार्षिकाणा, K2 4 Ñ1 B3 D1 2 4 5 T1–3 G2–4 कर्षु° ( for कर्ष° ) T3 कृषि चैव, T4 कृषिं कुर्वन् ( for कृषिर्वृत्ति॰ ) — b ) Ś1 K2 Ñ3 ( marg ) G5 M2 विपण, Ñ3 B Ds G2 पण्योप- ( for विपणि- ) K4 पण्यं च पणिजीवनम् — c ) K2–4 Ñ2 3 V B D ( except D6 ) T3 4 G1 गावोऽस्माकं, Ñ1 T1 2 G2–5 M4 अस्माकं गा॰, M1–3 अस्माकं गो- ( for °कं गौ ) — e ) K2 जनो, V3 G5 यथा ( for यया ) D6 यो यया विद्यया युक्तस् — f ) Ñ1 मतम्, M4 महत् ( for परम् ) — After 21, Ñ2 3 V B1 2 Dn Ds T3 4 ins

695* सैव पूज्यार्चनीया च सैव तस्योपकारिणी ।

[ T3 4 सैवार्चनीया च नवै ( for a ) Dn T3 [उ]पकारिका ( for °रिणी ) Ñ3 V1 तस्य सैवोपजीविका ( for b ) ]

22 a ) M4 अश्नाति ( for °न ) T3 यो यस्य फलमश्नाति — b ) Ś1 [अ]स्य स ( for [अ]न्यस्य ) — c ) Ñ3 D4 T1 च ( for स )

23 a ) Ś1 दृष्टान्ताः ( for कृष्यन्ता ) G2 प्रथमा॰ ( for प्रथिताः ) K2 Ñ V2 3 B Dn Ds D2–5 T1 4 G3 4 कृष्यन्ता ( D5 °न्ते ) प्रथिता सीमा — b ) Ds2 D5 M3 सीमान्तः ( for °न्तं ) K1 D5 G(ed) प्रथितं, G3–5 श्रूयतां, M1–3 च पुनर् ( for श्रूयते ) — d ) K1 Ñ3 V1 T1 2 G2 5 ते चास्माकं; M4 चास्माकं हि, ( for सा चास्माक ) T3 गवाम् ( for ध्रुवा ). T1 ते चास्माकं गतिः परा, T4 तेनास्माक गतिर्गवाम्, G3 ते चास्माकं परा गति.

24 a ) D3 श्रूयतां ( for °न्ते ) B2 [ए]व ( for [अ]पि ). — c ) Ś1 तास्तु, D6 गास्तास् ( for तास्तास् ) K3 D1 तनूस्ते ( for तनवो ) K2 G2 प्रविश्य मायां ( G2 ता ते ) तरवो,

भूत्वा केसरिणः सिंहा व्याघ्राश्च नखिनां वराः ।
वनानि स्वानि रक्षन्ति त्रासयन्तो द्रुमच्छिदः ॥ २५
यदा चैषां विकुर्वन्ति ते वनालयजीविनः ।
घ्नन्ति तानेव दुर्वृत्तान्पौरुषादेन कर्मणा ॥ २६
मन्त्रयज्ञपरा विप्राः सीतायज्ञाश्च कर्षकाः ।
गिरियज्ञा वयं गोपा इज्योऽस्माभिर्गिरिर्वने ॥ २७
तन्मह्यं रोचते गोपा गिरियज्ञं वयं वने ।
कुर्मः कृत्वा सुखं स्थानं पादपे वाथ वा गिरौ ॥ २८
तत्र हत्वा पशून्मेध्यान्वितत्यायतने कृते ।
सर्वघोषस्य संदोहः क्रियतां किं विचार्यते ॥ २९
तं शरत्कुसुमापीडाः परिवार्य प्रदक्षिणम् ।
गावो गिरिवरं सर्वास्ततो यान्तु वनं पुनः ॥ ३०
प्राप्ता किलेयं हि गवां स्वादुर्वीर्यतृणा गुणैः ।
शरत्प्रमुदिता रम्या गतमेघजलाशया ॥ ३१
प्रियकैः पुष्पितैर्गौरं श्यामं बाणवनैः क्वचित् ।
कठोरतृणमाभाति निर्मयूररुतं वनम् ॥ ३२
विमला विजला व्योम्नि विबलाका विविद्युतः ।
विवर्तन्ते जलधरा विमदा इव कुञ्जराः ॥ ३३ C 3822 B 2. 16. 15 P 2 16. 15

D4 °श्य तास्तनूस्ते वै

25 b) Ś1 शिखिना (for न°) M4 व्याघ्रौघानखिलान्खरान्. — c) M1–3 रक्षन्ते (for °न्ति) K2 वनस्थानानि रक्षन्ति. — d) K1–3 Ñ V B1 2 D (except D6) T3 4 वन- (for द्रुम-) K4 B3 त्रासयन्ति (B3 °न्ते) वनच्छिदः

26 a) K3 ये ये (for यदा) V3 तेषा (for चैषा) V1 प्र- (for वि-) K1 यदा तेषा प्रकुर्वन्ति — b) K2 V2 G2 ये (for ते) T1 वनानिल- (for °लय-) K1 (marg) देवा आलयजीविनः — c) K4 तेन, V1 तानि (for तान्) — d) K2 4 पुरुषादेन कर्मणा, K3 D4 पौरुषाढ्येन क°, D6 पौरुषेणैव क°, T2 G1 पुरुषान्देवव(G1 क)र्मणा, G4 M4 पुरुषान्देवकर्मणः

27 a) K2 अत्र (for मन्त्र-) Ś1 -यज्ञकरा, K4 Dn1 -यज्ञा परं (Dn1 °रा) (for -यज्ञपरा) — b) Ñ2 3 (marg) V3 D6 T2 G1 2 5 M1 2 4 सीर- (for सीता) Ś1 D5 का-(D5 क)र्षिका, K2 4 Ñ3 Ds2 D1 2 4 T1 G4 कर्षुका (for कर्षका.) — c) Bom Poona eds G(ed) तथा (for वयं) — d) M3 याज्यो (for इज्यो) V3 D6 T1 G2 4 5 ऽस्माकं (for °भिर्) K1 D5 धनैः, T3 सदा (for वने)

28 a) D6 S (except T3 4) एवं मम मत गोपा — b) D6 T1 2 G M4 -यज्ञान् (for -यज्ञ) Ś1 महा- (for वय) K2–4 Ñ1 3 V2 3 K1, 3 D1 3 5 गिरियज्ञः प्रवर्तताम्; Ñ2 V1 B2 Dn Ds D2 4 T3 4 °ज्ञ. प्रवर्त्यताम् — c) D6 तत्र क्षित्वा, T1 कर्म कृत्वा, T2 G2–4 M4 तत्र कृत्वा (for कुर्म कृत्वा). K1 3 4 Ñ V1 2 B1 Ds2 D1 3–5 T3 4 कर्म कृत्वा सुखं (Ñ2 शुचौ, T3 4 परं) स्थाने; K2 V3 B2 3 Dn Ds2 G4 5 कर्म (G1 5 तत्र) कृत्वा सुखस्थाने (G5 °नं); D2 कर्म कृत्वा सुख स्याम. — d) K1, 3 4 Ñ V2 B1 Dn Ds D1–4 पादपेषु; K2 V1, 3 B2 3 D5 °पेऽपि, D6 °पैर्वा (for °पे वा).

29 a) T2 G1, 4 5 गत्वा (for हत्वा) Ś1 पशून्दिव्यान्; Ñ1 D6 G2 M1 3 पशुं मेध्यं (for पशून्मेध्यान्) — b) K1–3 Ñ V B Dn Ds D1–5 T3 4 शुभे, D6 वने (for कृते). K4 G1 विन्य(G1 °श)स्यायतने शुभे — K2 om 29c–30b. — c) G5 संदोहं (for °ह) — d) T4 श्रूयतां (for क्रि°). Ñ2 स- (for किं) K3 विचार्यताम् (for °र्यते)

30 K2 om 30ab (cf v. l 29) — a) M1, 2 ता (for तं) — b) K2 परिचर्य; V1 सीरयज्ञा (for परिवार्य). — c) D4 गोपास् (for सर्वास्) M3 गावो गिरिवरान्सर्वास्. — d) K3 4 Ñ2 3 V B1 Ds D1–3 G2 M3 4 पुनर्वनम् (by transp); Ñ1 B2 Dn D4 T3 4 पुनर्व्रजम्, B3 पुनर्बलम्; T2 G1 3–5 पुन पुन K2 प्रतियान्तु पुनर्व्रजम्; D5 ततो यान्ति पुनर्व्रजम्

31 b) K3, 4 Ñ2 3 V B Dn Ds D1, 3–5 T3 4 -तोय- (for -वीर्य-) K2 -तृणैर्गुणैः, D6 T1 2 G M -गुणैस्तृणै (for -तृणा गुणै.) — c) M1–3 गावो (for रम्या). — d) K3 4 D1 -जलाश्रया (for °शया) T3 G1 M गतमेघा जलाशया.

32 a) K2 M2 (inf. lin as in text) 3 प्रियङ्गै (corrupt); D6 G प्रियङ्गु- (for °कै) Ś1 V2 पुष्पकै; D1 पुष्पितं (for °तैर्) K3 प्रियकैः पुष्पितं गौरै; D3 पुष्पितं च वनं सर्वं; T1 प्रियङ्गुपुष्पितं गौरं; M4 प्रियङ्गुपुष्पितैर्घोरा.. — b) Ś1 बाणवरै, K1 2 Ñ2, 3 V B Dn Ds D3 4, 5 T4 G1 3, 5 बाणासनै; T3 बाणतृणै (for °वनै.) — c) T3, 4 कठिनं (for कठोर-). — d) Ś1 G4 -तृणं वनम्; Ds1 D1 -रुतस्वनम्, G3 M2 -युतं वनम् (for -रुतं वनम्). K2 निर्मलं सरुतं वनम्

33 a) K2–4 Ñ V B D T G M3 4 विज(T2 G4 °शा)ला विमला (G3 °दा) व्योम्नि. — b) D5 दिविद्युतः (for विवि°). — c) K1 M1 2 प्रवर्तन्ते; B2 T4 G1, 3 विवर्धन्ते (for °र्तन्ते). — d) K Ñ V B Dn Ds D1–5 T3, 4 G3, 4 विदन्ता, T2 G1 5 विमला (for विमदा). D6 विमदाबारकुञ्जरा

पटुना मेघवातेन वार्षिकेणावकम्पिताः ।
पर्णोत्करघनाः सर्वे प्रसादं यान्ति पादपाः ॥ ३४
सितवर्णाम्बुदोष्णीषं हंसचामरवीजितम् ।
पूर्णचन्द्रामलच्छत्रं साभिषेकमिवाम्बरम् ॥ ३५
हंसैर्विहसितानीव समुत्क्रुष्टानि सारसैः ।
सर्वाणि तनुतां यान्ति जलानि जलदक्षये ॥ ३६
चक्रवाकस्तनतटाः पुलिनश्रोणिमण्डलाः ।
हंसलक्षणहासिन्यः पतिं यान्ति समुद्रगाः ॥ ३७
कुमुदोत्फुल्लमुदकं ताराभिश्चित्रमम्बरम् ।
सममभ्युत्स्मयन्तीव शर्वरीष्वितरेतरम् ॥ ३८

मत्तक्रौञ्चावघुष्टेषु कलमापक्वपाण्डुषु ।
निर्विष्टरमणीयेषु वनेषु रमते मनः ॥ ३९
पुष्करिण्यस्तडागानि वाप्यश्च विकचोत्पलाः ।
केदाराः सरितश्चैव सरांसि च श्रियाज्वलन् ॥ ४०
पङ्कजानि च पद्मानि तथान्यानि सितानि च ।
उत्पलानि च नीलानि भेजिरे वारिजां श्रियम् ॥ ४१
मदं जहुः सितापाङ्गा मन्दं ववृधिरेऽनिलाः ।
अभवद्व्यभ्रमाकाशमभूच्च निभृतोऽर्णवः ॥ ४२
ऋतुपर्यायशिथिलैर्वृत्तनृत्तसमुज्झितैः ।
मयूराङ्गरुहैर्भूमिर्बहुनेत्रेव लक्ष्यते ॥ ४३

34 $^{a}$) $K_2$ पाण्डुना, $D_5$ मृदुना ( for पटुना ) $K_{3\ 4}$ $\tilde{N}_{1\ 2}$ $V_{1\ 3}$ $B_1$ Dn $D_{1\ 3\ 4}$ $T_4$ $G_4$ -नादेन ( for -वातेन ) — $^{b}$) $G_2$ च ( for [अ]व- ). $\acute{S}_1$ -कर्षिताः ( for -कम्पिता ) $K_{2-4}$ Ñ V B Dn Ds $D_{1-4}$ $T_4$ नवतोयानुक( $K_4$ °व )र्षिणा ( $D_4$ °ण ) — $^{c}$) $K_1$ वर्णोत्तम-, $K_4$ कर्णोत्कर-, $D_6$ $G_2$ $M_{1-3}$ प( $M_3$ व )र्णोत्कच- ( for °त्कर- ). $K_2$ $B_{1,\ 3}$ Ds $D_2$ सर्वा ( for सर्वे ) $D_3$ पद्माकरघना सर्वा, $D_4$ $T_4$ पूर्णोत्करघना सर्वा — $^{d}$) $K_2$ $\tilde{N}_1$ $V_2$ B Ds $D_{3\ 4}$ $T_4$ निम्नगा. ( for पादपा ) — For 34, $T_3$ subst

696* विना च मेघनादेन निर्मयूररुतं वनम् ।
नद्यो बहुविधाकारा जलं स्वच्छं वहन्ति च ॥

35 $^{a}$) $K_{1\ 2}$ $\tilde{N}_{2\ 3}$ V $B_{1\ 3}$ $Ds_2$ $D_1$ सित( $K_1$ शत-, $V_{1\ 3}$ शीत )वर्षाम्बुदोष्णीष, $D_3$ सितवृष्ट्य°, $D_6$ $T_2$ $G_{1-3\ 5}$ $M_{1-3}$ सितशुभ्रा°, $T_1$ $M_4$ स्मितशुभ्रा° ( $M_4$ °वर्णा° ), $T_3$ निर्गताम्बुदसंदोहं — $^{b}$) $K_1$ -सारस- ( for -चामर- ) $S_1$ $\tilde{N}_1$ ( marg as in text ) $M_{3\ 4}$ जीवितम् ( for -वीजि° ) — $^{c}$) $D_1$ छत्रामल-, $D_6$ -चन्द्रामलं ( for °मल ) $K_2$ G( ed ) -च्छन्नं ( for -च्छत्रं ) — $^{d}$) $T_3$ साभिषिक्तम् ( for °षेकम् ) — After 35, $V_3$ reads $39^{c}$–$41^{d}$

36 $^{a}$) $K_1$ $B_2$ G( ed ) प्र ( for वि- ) $D_6$ $G_{2\ 5}$ [इ]ह ( for [इ]व ) — $^{b}$) $K_2$ $D_6$ $T_2$ $G_{1\ 2\ 5}$ समुत्सृष्टानि, $Ds_2$ $D_{1\ 2}$ $G_3$ $M_4$ समुद्धतानि ( for समुत्क्रुष्टानि )

37 $^{a}$) $\acute{S}_1$ $K_3$ -घनाः ( for -तटा ) — $^{d}$) $\acute{S}_1$ $K_2$ प्रति- ( for पतिं )

38 $^{a}$) $\acute{S}_1$ कुमुदोत्फुल्लनयनं, $K_1$ कमलोत्फुल्लमुदकं, $D_4$ कुमुदोत्फुल्लकं चैव — $^{b}$) $M_{1-3}$ ताराभिश्चित्रितं नभ — $K_2$ om $38^{cd}$ — $^{c}$) $G_1$ सम्यग् ( for समम् ) $V_{1\ 3}$ अभ्युन्मिषन्ति, $B_2$ °भ्युत्सहन्ति ( for °त्स्मयन्ति ) $G_{3-5}$ $M_4$ [ए]व ( for [इ]व ) $T_2$ सम्यगभ्युत्स्मयन्त्येव — $^{d}$) $\acute{S}_1$ शर्वरीर् ( for °रीषु )

39 $\tilde{N}_2$ om ( hapl ) $39^{bc}$. — $^{b}$) $D_2$ $G_2$ कलमापक्कि- ( $G_2$ °क्ष )पाण्डुषु — $V_3$ reads $39^{c}$–$41^{d}$ after 35 — $^{c}$) $V_{1\ 3}$ $B_1$ Ds $G_{-5}$ निर्वृष्ट- ( $G_{3-5}$ °ष्टि ), $D_{2\ 6}$ $G_2$ निवृष्टि- ( for निर्विष्ट ) — $^{d}$) $K_2$ तटेषु, $\tilde{N}_{2\ 3}$ $V_2$ B Ds $D_{1\ 3\ 4}$ $T_3$ वप्रेषु; $D_2$ क्षेत्रेषु, $T_4$ चक्रेषु ( for वनेषु ) $\acute{S}_1$ पुन ( for मन ) $V_1$ वप्रेषु वसते मन

40 For the sequence in $V_3$, cf v l 39 — $^{a}$) $\acute{S}_1$ $M_3$ तडाकानि, $D_6$ $T_{1\ 2}$ G $M_4$ तटाकानि, $T_{3\ 4}$ तटाकाश्च ( for तडागानि ) — $^{b}$) $S_1$ $K_1$ $M_4$ वाप्यश्च विमलोदका ( $M_4$ °त्पला ) — $^{c}$) D- [अ]पि ( for [ए]व ) — $^{d}$) $D_2$ $G_{1\ 4\ 5}$ श्रियोज्ज्वलाः, $M_{1-3}$ प( $M_2$ व )रश्रिय ( for श्रियाज्वलन् ) $T_1$ $G_3$ $M_4$ सरासि कुमुदानि च, $T_2$ सरासीव श्रियोज्ज्वला

41 For the sequence in $V_3$, cf v l 39 $T_1$ om $41^{ab}$ — $^{b}$) $\acute{S}_1$ $K_{1\ 3}$ पङ्कजानि ( for तथान्यानि ) — $^{b}$) $M_4$ सरांसि ( for सितानि ) $K_{2\ 4}$ $\tilde{N}_{1\ 3}$ $V_{1\ 2}$ B Dn Ds $D_{1\ 3-5}$ $T_4$ [अ]पि, $T_3$ वै ( for च ) $K_3$ पङ्कजानि सितान्यपि — For $41^{ab}$, $G_{3-5}$ subst

697* श्रिया ज्वलत्पङ्कजानि ताम्राणि च सितानि च ।

— $^{c}$) $\acute{S}_1$ $K_1$ $\tilde{N}_1$ पङ्कजानि, $D_6$ $T_{1\ 2}$ G M नीरजानि ( for उत्पलानि ) $\tilde{N}_2$ $V_3$ [अ]पि ( for च ) — $^{d}$) $\tilde{N}_2$ $V_3$ सरितां, $T_2$ $G_{1\ 5}$ $M_4$ वारिणा, $T_3$ शरदा ( for वारिजा )

42 $^{a}$) $V_2$ मदं जग्मु, $D_6$ $G_2$ मदं जगु, $T_1$ मन्दं जगुः ( for मद जहु ) — $^{b}$) $\acute{S}_1$ मदं ( for मन्दं ) $D_6$ $T_1$ $G_{1\ 3-5}$ $M_3$ ववृतिरे ( for °धिरे ) — $K_1$ transp $42^{cd}$ and $44^{cd}$ — $^{c}$) $V_1$ व्यग्रम् $M_4$ शुभ्रम् ( for व्यभ्रम् ) — $^{d}$) $K_4$ विततो, $V_3$ निर्वृतो ( for निभृतो )

43 $D_3$ om $43^{ab}$ — $^{a}$) $T_4$ -शिखिनां ( for शिथिलैर् ). — $^{b}$) $D_{2\ 6}$ $G_{3-5}$ $M_{1-3}$ -समुत्थितै, $T_1$ °क्षितैः ( for °ज्झितै ). $K_2$ $T_3$ वृत्तनृत्यसमुच्छ्रि( $T_3$ °त्थि )तै — $^{d}$) $G_2$ -चित्रेव ( for -नेत्रेव ). $K_3$ जेष्यते, $G_3$ दृश्यते ( for लक्ष्यते ).

स्वपङ्कमलिनैस्तीरैः काशपुष्पलताकुलैः ।
हंससारसविन्यासैर्यमुना याति संयता ॥ ४४
कलमापक्वसस्येषु केदारेषु वनेषु च ।
सस्यादा जलजादाश्च मत्ता विरुरुवुः खगाः ॥ ४५
सिषिचुर्यानि जलदा जलेन जलदागमे ।
तानि शष्पाण्यबालानि कठिनत्वं गतानि वै ॥ ४६
त्यक्त्वा मेघमयं वासः शरद्गुणविदीपितः ।
एष वीतमले व्योम्नि हृष्टो वसति चन्द्रमाः ॥ ४७
क्षीरिण्यो द्विगुणं गावः प्रमत्ता द्विगुणं वृषाः ।
वनानां द्विगुणा लक्ष्मीः सस्यैर्गुणवती मही ॥ ४८
ज्योतींषि घनमुक्तानि पद्मवन्ति जलानि च ।
मनांसि च मनुष्याणां प्रसादमुपयान्ति वै ॥ ४९
असृजत्सविता व्योम्नि निर्मुक्तजलदे भृशम् ।
शरत्प्रज्वलितं तेजस्तीक्ष्णरश्मिर्विशोषयन् ॥ ५०
नीराजयित्वा सैन्यानि निर्यान्ति विजिगीषवः ।
अन्योन्यराष्ट्राभिमुखाः पार्थिवाः पृथिवीक्षितः ॥ ५१
बन्धुजीवाभिताम्रासु बद्धपङ्कवतीषु च ।
मनस्तिष्ठति कान्तासु चित्रासु वनराजिषु ॥ ५२
वनेषु च विराजन्ते पादपा वनशोभिनः ।
असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः ॥ ५३ C 3842 B 2. 16 35 P 2 16 35

44 $^{a}$) T1 2 G3 5 M4 अपङ्क- ( for स्वपङ्क- ) V1 सुपङ्क-सलिलैस्तीरै — $^{b}$) Ñ2 काल-, G5 शाक ( for काश- ) D2 पुष्पैर् ( for पुष्प- ) Ds1 लतान्तरै , Ds2 लताङ्कुरै ( for °कुलैः ) — K1 transp $42^{cd}$ and $44^{cd}$ — $^{c}$) Ś1 K1 4 D6 T1. 2 G1 2 5 M4 विन्यस्तैर् ( for विन्यासैर् ) — $^{d}$) Ś1 संतता; K1 4 सततम्, K2 शोभिता, Ñ1 B2 3 Dn2 शोभना, T2 G1 सयुता ( for संयता ) K3 Ñ2 Dn1 Ds D1 5 T1 यमुना-तीरशोभना ( Ñ2 °शोभिता, D1 °शोभिना, T1 °सयुता ); Ñ3 V1 यमुना भाति ( V1 तात ) शोभिता, V2 3 B1 D4 °ना भाति शोभना, D2 3 °नातीव शोभना ( D2 °भिता ), T3 4 °ना परिशोभिता, G2 °ना रौति सयुता

45 $^{a}$) G2 lacuna, M1 damaged K2 4 Ñ3 B1 D3–5 T3 4 -रम्येषु ( for -सस्येषु ) K3 V Dn Ds D1 कलमापाक- ( D1 °पङ्क )रम्येषु, Ñ1 B2 कालपक्वेषु सस्येषु, T1 2 G1 3–5 M2–4 कळमा सस्यपक्वेषु — $^{b}$) Poona ed जनेषु ( for व° ) — $^{c}$) D1 जलदाश्चैव, T1 G4 °जाताश्च ( for °जादाश्च ) V1 सस्यदा जलदाश्चैव, D6 T2 G1–3 5 M4 सस्यजा ( G5 M4 °दा ) जलजाताश्च — $^{d}$) Ñ1 Ds सत्त्वा ( for मत्ता ) Ś1 D6 T1 G2 5 विरुरुदु ; K2 4 च रुरुवु , K3 निरुरुवु ; B1 D3 विरुरुचु ( for °रुवु )

46 $^{b}$) K1 सस्यानि, D1 जलैश्च, T3 4 जलानि ( for जलेन ) Ś1 जलेन प्रथमागमे — B1 om $46^{c}$–$48^{d}$ — $^{c}$) Dn Ds D1–3 सस्यानि ( for शष्पाणि ) K4 G4 सस्यानि ( G4 शष्पाणि ) तानि बालानि; Ñ1 2 V2 3 B D5 6 T2 3 G2 M4 तानि सस्यानि ( D6 G2 M4 पुष्पाणि ) बा( T3 का )लानि.

47 B1 om 47 ( cf v l 46 ). — $^{a}$) Ś1 सर्वे, T2 G3 M1 2 4 वास ( for वास ) — $^{b}$) G3 lacuna T3 om from द्गुण up to लक्ष्मी ( in $48^{c}$ ) T4 om from द्गुण up to यान्ति वै ( in $49^{d}$ ) T2 M3 विदीपितम्; G3 -विभूषितम् ( for -विदीपित ) K4 मितेन गुणदीपन. — $^{c}$) Ś1 Ds1 D4 M3 4 वीतमलो, K2 Ñ1 B2 वै विमले, T2 G1 2–5 वीतजले ( G3 °ल ) ( for °मले ) — After $47^{abc}$, K3 reads $50^{b}$, repeating it in its proper place — $^{d}$) K1 3 D6 T2 G M व्रजति ( for वसति )

48 T3 om $48^{abc}$, T4 om 48 ( for both, cf v l 47 ) — $^{a}$) G1 द्विगुणा ( for °णं ) — $^{b}$) T1 प्रवृत्ता ( for प्रमत्ता ) — $^{c}$) V3 बालाना ( for वनानां ) M4 द्विगुणं ( for °णा ) — $^{d}$) T3 शरद्गुणवती मही

49 T4 om 49 ( cf v l 47 ). — $^{a}$) G2 मल- ( for घन- ) — $^{c}$) D3 [इ]व, M4 om ( for च ). — $^{d}$) K1 D1 च ( for वै )

50 $^{a}$) K4 शुशुभे ( for असृजत् ) — K3 reads $50^{b}$ for the first time after $47^{abc}$ — $^{b}$) K2 विमुक्तो जलदैर्भृशम्, K3 ( both times ) 4 Ñ V B Dn Ds D1–5 T1. 3 4 G1. 3 4 निर्मुक्तो जलदैर्भृशम्; M1–3 विनिर्मुक्तजले भृशम् — $^{d}$) D2 3 T4 तीव्र- ( for तीक्ष्ण- ) D5 अशोषयन्, T1 विशोध°, M3 व्यशोषयत् ( for विशोषयन् ). Ś1 K1 तीक्ष्ण-भानुरनुष्णभाक्

51 $^{a}$) G2 lacuna V1 नीराजयन्ति सैन्यानि, M1 ( *inf lin* ) निर्यातयित्वा सै° — $^{b}$) K3–4 Ñ V B Dn Ds D4 5 T3 4 G2 प्रयान्ति ( for निर्या° ) K1 ( *sup lin* as in text ) 4 निर्यान्ति विजिगीषया, D1 प्रयान्ति च जिगीषवः — $^{d}$) K1 पृथिवीं, D6 D2 पार्थिवान् ( for °वा )

52 $^{a}$) V1 -जीवाभ्र-, D3 जीवाति- ( for -जीवाभि- ). — $^{b}$) T4 बहु- ( for बद्ध- ) T1 बद्धभृङ्गवतीषु च, T2 G1 °पङ्क-सरस्सु च; G3–5 M °पङ्कजराजिषु — G4 om. ( hapl ) $52^{cd}$.

53 $^{a}$) D6 T2 G3–5 M विराजन्ति ( for °जन्ते ) Ś1 K1

इषुसाह्वा निकुम्भाश्च प्रियकाः स्वर्णकास्तथा ।
सृमराः पिचुकाश्चैव केतक्यश्च समन्ततः ॥ ५४
व्रजेषु च विशेषेण गर्गरोद्गारहासिषु ।
शरत्प्रकाशयोषेव गोष्ठेष्वटति रूपिणी ॥ ५५
नूनं त्रिदशलोकस्थं मेघकालसुखोषितम् ।
पतत्त्रिकेतनं देवं बोधयन्ति दिवौकसः ॥ ५६
शरद्येवं सुसस्यायां प्राप्तायां प्रावृषः क्षये ।
अर्चयाम गिरिं देवं गाश्चैव सविशेषतः ॥ ५७
सावतंसैर्विषाणैश्च बर्हापीडैश्च दंशितैः ।
घण्टाभिश्च प्रलम्बाभिः पुष्पैः शारदिकैस्तथा ॥ ५८
शिवाय गावः पूज्यन्तां गिरियज्ञः प्रवर्तताम् ।
पूज्यन्तां त्रिदशैः शक्रो गिरिरस्माभिरिज्यताम् ॥ ५९
कारयिष्यामि गोयज्ञं बलादपि न संशयः ।
यदास्ति मयि वः प्रीतिर्यदि वा सुहृदो वयम् ॥ ६०

---

फुल्ला ह्यतीव राजन्ते, $K_2$ वनेषु वृद्धयातेषु (sic) — $^{b}$) $K_1$ गिरि- (for वन) $V_3$ -चारिण (for -शोभिन) — $^{cd}$) $K_{1\ 4}$ पनसाः (for असना) $D_2$ पनसा सप्तपर्णासु (for $^{c}$) $K_4$ सेवनीयाश् (for कोविदाराश्) $G_2$ transp सप्तपर्णाश् and कोविदाराश् $T_1$ सायका स्वर्णकास्तथा (for $^{d}$) — After 53, Dn $Ds_2$ ins 699*

54 $T_3$ om $54^{ab}$ $T_4$ om $54^{a}$ — $^{a}$) $K_2$ $D_4$ इषुसाङ्का, $K_4$ भृङ्गसेव्या; $\tilde{N}_2$ $V_3$ $B_1$ इषुशाक- (for °साह्वा) $K_1$ विकुम्भाश् (for नि°) $D_3$ इषुप्रसङ्गी. कुम्भ्यश्च, $G_2$ $M_3$ इक्षुसस्या निकुञ्ज्या($M_3$ °ल्या)श्च — $^{b}$) $Ś_1$ सायका·; $K_1$ चम्पकाः (for प्रियका.) $D_4$ प्रियका स्वर्णयूथिकाः — For $54^{ab}$, $D_6$ $T_{1.\ 2}$ G M subst

698* इक्षुसस्या निकुप्याश्च प्रियङ्गुश्च विशेषत ।

— $^{c}$) $Ś_1$ अपरा, $G_2$ आम्राता (for सृमरा) $K_{2\ 4}$ $\tilde{N}_3$ $V_1$ Dn $D_{1\ 5}$ पेचुकाश्, $\tilde{N}_{1\ 2}$ $V_{2\ 3}$ B Ds पेचि°, $D_3$ पेच°, $D_4$ पिचि° (for पिचु°) $K_{1\ 3}$ $M_1$ अमला· पेचुकाश्चैव, $D_2$ समरा पेतुकाश्चैव, $D_6$ आम्राता पिप्सुका°, $T_{1\ 2}$ $G_{1\ 3-5}$ आताम्रा ($T_2$ $G_{1\ 5}$ आम्राता, $G_4$ आम्राश्च) पावका°, $T_3$ सृमय परका°, $T_4$ सृयमा परस्रो°, $M_{2\ 3}$ अमरा पेतु($M_2$ °पु)का°, $M_4$ आताम्रा· पादपा° — $^{d}$) $K_1$ केतुकाश्, $K_{2\ 4}$ Ñ V $B_{1\ 2}$ Ds $D_{3\ 4}$ केंदिन्यश्, $Dn_1$ केतवाश्, $T_{3\ 4}$ रेवताश् (for केतक्यश्) $T_1$ विशेषत (for समन्तत)

55 $^{a}$) $Ś_1$ व्रजे वैर, $K_1$ व्रजेष्वेवं (for °षु च) — $^{b}$) $D_{5\ 6}$ $T_1$ $G_3$ -भासिषु, $G_4$ -गन्धिषु, $M_4$ -हारिषु (for -हासिषु) $D_3$ चाङ्गेरीपुष्पहासिषु, $T_4$ मर्मरोद्गारहासिषु — $^{c}$) $T_4$ प्रकामं; $M_{1-3}$ चकाशे (for -प्रकाश-) $K_2$ -रूपेव (for -योषेव) $D_6$ शरत्प्रकाशा गोष्वेव — $^{d}$) $T_4$ च सु- (for [अ]टति) $T_3$ गोष्ठेषु च सुहासिनी

56 $^{a}$) $\tilde{N}_3$ मूलं (for नूनं) $K_{2\ 3}$ Ñ V B Dn Ds $D_{1\ 3-5}$ $T_{3\ 4}$ -भूयिष्ठं (for -लोकस्थं) — $^{b}$) $K_4$ Dn $Ds_1$ $T_1$ $M_{1-3}$ -काले (for -काल-) $V_1$ $D_1$ -सुखोचितम्, $D_3$ °षितै; $D_5$ °ष्वित· (for °षितम्). — After $56^{ab}$, $V_2$ $D_{2-5}$ ins 699* — $^{c}$) $\tilde{N}_2$ दिव्यं (for देवं) — $^{d}$) $Ś_1$ वर्धयन्ति, $V_3$ योज° (for बोध°)

57 $^{a}$) $K_2$ $T_2$ $G_4$ सुसंध्यायां, $\tilde{N}_2$ $V_3$ सुरम्यायां, $T_3$ प्रपन्नाया, $M_3$ प्रवृत्तायां (for सुसस्यायां) — $^{b}$) $Ś_1$ $T_2$ $G_{1\ 3}$ प्रावृषि (for °ष) — $V_3$ $B_1$ ins after $57^{ab}$, $V_2$ $D_{2-5}$ after $56^{ab}$: Dn $Ds_2$ after 53

699* नीलचन्द्रार्कवर्णैश्च रचितं बहुभिर्द्विजै ।
फलै· प्रवालैश्च घनमिन्द्रचापघनोपमम् ॥
भवनाकारविटपं लतापरममण्डितम् ।
विशालमूलावनतं पवनाभोगमण्डितम् ॥

[(L 1) $B_1$ सुचित्र, Dn $Ds_2$ $D_{2\ 3}$ चरित (for रचित) — (L 2) Dn $Ds_2$ [अ]र्चन्तम्, $D_2$ घनैर् (for घनम्) $D_2$ ऐन्द्र-, $D_3$ सेन्द्र- (for इन्द्र-) — $D_4$ om lines 3–4 — (L 3) $Ds_2$ $D_2$ -प्रस्तर-, $D_3$ -प्रस्तार- (for -परम-) — (L 4) $D_2$ वितान- (for विशाल-) $V_{2\ 3}$ धारिणम्, $D_2$ -वर्चसम् (for -मण्डितम्) $B_1$ Dn $Ds_2$ $D_5$ सुप्रचार गवा नृणाम्, $D_3$ पर्वताभोगवर्चसम् (for $^{b}$) ]

— $^{c}$) All Mss (except $Ś_1$ $M_{1-3}$) अर्चयामो ($D_4$ °मि) (for °म) — $^{d}$) $D_6$ $T_2$ G $M_3$ गावश्च (for गाश्चैव) $Ś_1$ $K_1$ हि; $D_1$ om, Bom Poona eds G(ed) च (for स-) $D_{2,\ 3}$ $M_1$ गा सवत्सा ($M_1$ गावश्चैव) विशेषत

58 $^{a}$) $T_3$ विषाणाग्रैर् (for °णैश्च) — $^{b}$) $K_4$ भूषितैः, $T_1$ $G_3$ दशिता, $M_4$ दसिता, some Mss दंसितै (for दशितै) — $^{d}$) $D_6$ तारादिकैस् (for शार°) $B_2$ $G_4$ तदा (for तथा)

59 $^{a}$) $K_1$ (marg) गा प्र- (for गावः) $K_3$ गावः शिवाय पूज्यन्तां — $^{b}$) $S_1$ प्रकुर्वताम् (for प्रवर्त°) — $^{c}$) $\tilde{N}_1$ ईज्यतां (for पू°) — $^{d}$) $K_3$ पूज्यताम्, $V_2$ ईड्य° (for इज्य°)

60 $^{a}$) B Ds गोयज्ञं कारयिष्यामि — $^{b}$) $K_2$ $V_3$ B Ds $D_{2\ 3}$ एव, $K_3$ $D_1$ एनं, $K_4$ $\tilde{N}_2$ एवं, $\tilde{N}_{1\ 3}$ $V_{1,\ 2}$ Dn $D_{4,\ 5}$ एतं (for अपि). — $^{c}$) $Ś_1$ वा, $T_2$ $G_{4,\ 5}$ च (for वः). — $^{d}$) $D_6$ ह्यहम्; $G_2$ मम (for वयम्).

61 $^{a}$) $\tilde{N}_1$ $M_4$ ऽभि, $T_4$ ऽथ (for हि) — $^{b}$) $K_2$ सर्वशो (for सर्वेषा) $D_2$ नास्ति (for नात्र) — $T_{3,\ 4}$ om $61^{cd}$. — $^{c}$) $K_1$ (*sup lin.*) यत्तु नाम, $K_3$ Dn यदि साम्ना; $K_4$

गावो हि पूज्याः सततं सर्वेषां नात्र संशयः ।
स्यात्तु साम्ना भवेत्प्रीतिर्भवतां वैभवाय च ।
तत एतन्मम वचः क्रियतामविचारितम् ॥ ६१

इति श्रीहरिवंशे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

# ६०

वैशंपायन उवाच ।
दामोदरवचः श्रुत्वा हृष्टास्ते गोषु जीविनः ।
तद्वागमृतमाख्यातं प्रत्यूचुरविशङ्कया ॥ १
तवैषा बाल महती गोपानां हर्षवर्धिनी ।
प्रीणयत्येव नः सर्वान्बुद्धिर्वृद्धिकरी नृणाम् ॥ २
त्वं गतिस्त्वं रतिश्चैव त्वं वेत्ता त्वं परायणम् ।
भयेष्वभयदस्त्वं नस्त्वं चैव सुहृदां सुहृत् ॥ ३
त्वत्कृते कृष्ण घोषोऽयं क्षेमो मुदितगोकुलः ।
कृत्स्नो वसति शान्तारिर्यथा स्वर्गगतस्तथा ॥ ४
जन्मप्रभृति दिव्यैस्तैर्विक्रान्तैर्भुवि दुष्करैः ।
बोद्धव्याच्चाभिमानाच्च विस्मितानि मनांसि नः ॥ ५ C 3859 B 2 17 6 P 2 17 6
बलेन च पराध्र्येन यशसा विक्रमेण च ।

---

या तु साम्ना ; Ñ3 V1 2 साधूनां च , D3 मनसो नो ( for स्यात्तु साम्ना ) Ds1 स्यात्तु नामाभवत्प्रीतिर् — d ) K3 G1 भवतो ( for °तां ) D4 वै जयाय ( for वैभवाय ) D1 वै ( for च ) — e ) Ś1 K1 मतं ( for वच ) K2–4 Ñ V Dn Ds D1–5 T3 4 M1 2 एतन्मम वचस्तथ्यं

COLOPHON om in K4 — *Mention of the Epic* K3 Ñ2 Ds2 T3 — *Mention of Khila* Ś1 K1, 3 Ñ2 3 V B Dn2 Ds D1 — *Sub-parvan* D5 पारिजात, T4 आश्चर्यपर्व. — *Adhy name* S1 गिरिवर्तं , K1 गिरियज्ञ , K2 3 Ñ V B Dn Ds D1 2 4 5 G2 3 शरद्वर्णनम् D3 गिरियज्ञविचार , D6 गिरियज्ञे दामोदरवाक्यम् — *Adhy no* ( figures, words or both ) K3 D1 G2 4 69 , Ñ3 V1 T1 G5 M4 72 , V2 B2 73 , V3 Dn Ds2 T2 G1 71 , D3 77 , D4 70 , T3 78 , T4 67 ; G3 52 , M1–3 68 — *Śloka no* Dn1 43 , Ds2 47 ; D3 46 , D4 55

## 60

1 b ) K3 कृतास् ( for हृष्टास् ) K1 T1 गोष्ठ- ; M1–3 घोष- ( for गोषु ) D3 कृष्टास्ते गोष्ठजीविन — c ) K2 Ñ V B Ds D1–4 T3 4 अश्नाना , Dn D5 T1 आसाद्य ( for आख्यातं ) K1 ( *sup lin* as in text ) 3 4 तद्वागमृतस्नाना- ( K4 °पूता )स्ते — d ) D2 3 T3 4 अविशङ्किता ( for °शङ्कया )

2 a ) D1 T4 तथा ( for तव ) D6 T2 G M तवैषा ( D6 °षां ) महती पथ्या , T1 तथैषा भारती पथ्या , T3 तवैषा भारती देवी — b ) Dn हित- ( for हर्ष- ). Some Mss -वर्धनी ( for -वर्धिनी ). Ś1 K1 गोपाना हितकारिणी. — c ) D3 प्रीणात्येव च न सर्वान् — d ) T1 M1 2 बुद्धिवृद्धि- ; M3 °वृत्ति- ( for °वृद्धि- ) S1 K1 3 B Dn Ds D2 3 गवाम् ( for नृणाम् ) K2 बुद्धिवृद्धिकरी गवाम् , D5 बुद्धेर्बुद्धिकरी गवाम्

3 a ) K1 2 T1 4 मतिश् ( for रतिश् ) M1–3 [ए]षां ( for [ए]व ) — b ) K2 त्राता ( for वेत्ता ) Ñ V B1 3 D5 D1 4 6 G2 4 5 परायण ( for °णम् ) — d ) K2–4 Ñ V B D ( except D6 ) T3 4 M4 एव ( for चैव ).

4 b ) K3 4 Ñ1 3 V B D ( except D6 ) T1 3 4 क्षेमी ( for क्षेमो ) D6 T2 G M4 गोगण ( for -गोकुल ) Ñ2 क्षेमं मृदितकण्टकम् — c ) K2 Ñ2 B1 Ds2 हृष्टो ( for कृत्स्नो ) M3 भवति ( for वसति ) — d ) K3, 4 Ñ3 Dn D1 T1 4 M2 स्वर्गं गतस् , D5 वा स्वर्गतस् , T2 G1 स्वर्गगतिस् ; G3 दिविगतस् , M3 स्वर्गं गतिस् ( for स्वर्गगतस् )

5 a ) K3 4 Ñ1 2 D1–3 5 T1 3 4 कर्मैतद् , Ñ3 B D5 D4 दिव्यैस्ते , V2 दिव्यैश्च ; D6 G2 धर्मौघैर् ; T2 G1 3–5 M कर्मौघैर् ( for दिव्यैस्तैर् ) — b ) Ś1 विक्रमैर्भुवि पुष्कलैः , K3, 4 Ñ1 2 3 ( marg ) V1 Dn D1–3 5 T1 देवैरसुकरं भु( T1 °रैर्भु )वि , D4 विक्रान्तैर्दुष्करैर्भुवि ; D6 T2 G M दिव्यैरसुकरैर्भुवि ( G2 4 °रपि ) — c ) T1 G3 M4 बान्धवाच् ( for बोद्धव्याच् ) — d ) Ñ2 च ; D1 व ( for न ).

6 a ) S1 बाल्येन ( for बलेन ) G(ed) परार्थ्येन ( for °ध्र्येन ) — b ) Ñ3 ( marg ) V1 विजयेन ( for विक्रमेण ). — c ) Ñ3 हि मर्त्येषु , Dn मनुष्येषु ( for च मर्त्येषु ). — d ) Ś1 M3 च ( for [इ]व ). T2 दिवाकर ( for पुरंदरः ). D3 ज्योतिष्विव निशाकर — After 6, K Ñ2 3 V B D ( except D3 ) T1 3 4 G M4 ins. :

उत्तमस्त्वं च मर्त्येषु देवेष्विव पुरंदरः ॥ ६
कान्त्या लक्ष्म्या प्रसादेन वदनेन स्मितेन च ।
उत्तमस्त्वं च मर्त्येषु देवेष्विव निशाकरः ॥ ७
वेषेण वपुषा चैव बाल्येन चरितेन च ।
स्यात्ते शक्तिधरस्तुल्यो न तु कश्चन मानुषः ॥ ८
यत्त्वयाभिहितं वाक्यं गिरियज्ञं प्रति प्रभो ।
कस्तल्लङ्घयितुं शक्तो वेलामिव महोदधेः ॥ ९
स्थितः शक्रमहस्तात श्रीमान्गिरिमहस्त्वयम् ।
त्वत्प्रणीतोऽद्य गोपानां गवां हेतोः प्रवर्तताम् ॥ १०
भोजनान्युपकल्प्यन्तां पयसः पेशलानि च ।
कुम्भाश्च विनिवेश्यन्तामुदपानेषु शोभनाः ।
लेह्यस्य पायसस्यार्थे द्रोण्यश्च विपुलायताः ॥ ११
भक्ष्यं भोज्यं च पेयं च तत्सर्वमुपनीयताम् ।
भाजनानि च मांसस्य न्यस्यन्तामोदनस्य च ।
त्रिरात्रं चैव संदोहः सर्वघोषस्य गृह्यताम् ॥ १२
विशस्यन्तां च पशवो भोज्या ये महिषादयः ।
प्रवर्ततां च यज्ञोऽयं सर्वगोपसुसंकुलः ॥ १३
आनन्दजननो घोषो महान्मुदितगोकुलः ।

700* प्रतापेन च तीक्ष्णेन दीप्त्या पूर्णतयापि च ।
उत्तमस्त्वं च मर्त्येषु देवेष्विव दिवाकर ॥

[ (L 1) $K_2$ [इ]व, $T_1$ $M_4$ [अ]ति- (for च) $G_2$ दिव्य- (for दीप्त्या) — $\tilde{N}_3$ om line 2 — (L 2) Cf $7^{cd}$ $V_2$ मनुष्येषु (for च मर्त्येषु) $V_2$ हुताशन, $D_2$ निशाकर (for दिवा°) ]

7 $K_3$ $\tilde{N}_2$ $D_{2\,3}$ $T_1$ om (hapl) 7 $D_5$ reads 7 on marg — $^{a}$) $Ds_1$ कोट्या (for कान्त्या) $D_6$ प्रदानेन (for प्रसादेन) — $^{b}$) $K_1$ वचनेन, $D_4$ वपुषा च (for वदनेन) — $G_3$ om $7^{cd}$ — $^{c}$) $M_3$ तु (for च) — $^{d}$) $S_1$ च (for [इ]व) $G_1$ दिवाकर (for निशा°)

8 $^{a}$) K $\tilde{N}$ V B Dn Ds $D_{1\,2\,5}$ $T_{3\,4}$ बलेन, $D_4$ अनेन (for वेषेण) $D_3$ बलेन वपुषश्चैव — $^{b}$) $G_4$ बलेन (for बाल्येन) — $^{c}$) $K_2$ शक्त्या, $K_4$ स्यात्त्वं, $D_1$ स्यात्तु, $T_{3\,4}$ कान्त्या, $M_{1-3}$ तव (for स्यात्ते) — $^{d}$) Ś$_1$ $K_1$ $V_3$ च (for तु) $D_3$ ननु कश्चिदमानुषः, $D_5$ न तु कश्चिन्नरर्षभ

9 $^{a}$) $D_1$ स, $G_3$ यस् (for यत्) $S_1$ $V_1$ $D_2$ वि- (for [अ]भि-) — $^{c}$) $D_3$ $M_4$ ते (for तल्) $D_6$ $T_1$ $G_{2-5}$ $M_{1-3}$ चालयितुं (for लङ्घ°) $K_2$ क उल्लङ्घयितुं शक्तो, $T_2$ $G_1$ कश्च वारयितु शक्तो — $^{d}$) $K_{3\,4}$ $\tilde{N}_3$ $V_{2\,3}$ $B_{2\,2}$ Dn Ds $D_{3\,5\,6}$ S महोदधिः (for °धे)

10 $^{a}$) $B_3$ स्थिति (for स्थितः) Ś$_1$ शक्रमहं, $K_2$ शक्ति- (also °क्र)मयस्, $D_6$ $T_{1\,3}$ $G_{1\,3}$ शक्रमखस् (for °महस्). — $^{b}$) $K_2$ गिरिमयस्, $T_{1\,3}$ $G_{1\,3}$ °मखस् (for °महस्) $Ds_1$ $M_4$ त्वया (for त्वयम्) — $^{c}$) $K_4$ $V_2$ ऽथ गोपाना, $\tilde{N}_3$ (marg) $V_1$ यथान्याय (ऽद्य गोपानां) — $^{d}$) $\tilde{N}_1$ यज्ञः (for हेतो) $G_2$ प्रकीर्त्यताम्, some Mss प्रवर्त्य° (for प्रवर्त°)

11 $D_6$ $T_{1\,2}$ $G_{1-3}$ $M_{1-3}$ read $11^{ab}$ after $12^{ab}$ — $^{a}$) $K_3$ V $B_1$ $Ds_1$ भाजनानि (for भो°) Ś$_1$ $K_{1\,2\,4}$ $Ds_2$ $D_{3\,5}$ $G_2$ $M_4$ -कल्पन्तां (for कल्प्यन्तां) $D_2$ भोजनान्यनुकल्पन्तां, $M_3$ भाजनान्युपनीयन्तां — $^{b}$) $\tilde{N}_2$ कलशानि (for पेशलानि) — $^{c}$) $T_2$ $G_1$ [अ]भि-, $G_{3-5}$ [अ]पि (for वि-) — $^{d}$) $D_6$ $G_2$ भाजनाः, $T_3$ शोभिताः (for शोभना) $K_1$ उदपाने च शोभना, $T_1$ $G_3$ उदपाने ($G_3$ °ना) सुशो°; $T_2$ $G_{1\,5}$ $M_4$ मृदुपाना सुशो°, $G_4$ उदपात्रा सुशो° — $^{e}$) $D_6$ $G_2$ लेह्याश्च (for लेह्यस्य) $M_4$ [अ]र्थ (for [अ]र्थे) K $\tilde{N}_{2\,3}$ V B Dn Ds $D_{1-5}$ $T_{3\,4}$ पूर्यन्तां पयसा नद्यो ($K_{1\,4}$ $D_{2\,3}$ वाप्यो, $K_2$ सद्यो) — $^{f}$) $\tilde{N}_1$ द्रोण्यश्च परिकल्प्यताम्, $T_{1\,2}$ $G_{1\,3-6}$ °श्च विपुलाः शुभा

12 $^{a}$) Ś$_1$ विविधं, $K_1$ लेह्य च (for पेयं च) $\tilde{N}_1$ भक्ष्यभोज्यश्च पेयश्च — $^{b}$) $M_3$ -कल्प्यताम् (for -नीयताम्) $G_4$ तत्सर्वं परिकल्प्यताम् — After $12^{ab}$, $D_6$ $T_{1\,2}$ $G_{1-3}$ $M_{1-3}$ read $11^{ab}$ $G_4$ om $12^{c}$–$13^{b}$ — $^{c}$) $K_{1\,2}$ $\tilde{N}_3$ (marg as in text) $B_3$ $T_{1\,3\,4}$ भोजनानि (for भाज°) Ś$_1$ मासानि (for मांसस्य) $K_4$ भोजनानि च मासानि — $^{d}$) Ś$_1$ $K_1$ पायसस्य, $D_3$ युज्यताम् (for न्यस्यन्ताम्) $D_6$ $T_{1\,2}$ $G_{1\,3-5}$ $M_4$ मोदकानि, $M_{1-3}$ मोदकस्य (for ओदनस्य) $K_4$ ह (for च) — $^{e}$) $V_1$ त्रिवारं (for त्रिरात्रं)

13 $G_4$ om $13^{ab}$ (cf v l 12) Ś$_1$ om $13^{ab}$ — $^{a}$) G(ed) विहन्यन्तां (for विशस्यन्ता) — $^{b}$) $D_4$ भक्षाय, G(ed) भेद्या वै (for भोज्या ये) $T_3$ भोज्या ये चाप्यजादयः, $G_3$ गोपैश्च महिषा दश — After $13^{ab}$, $T_3$ reads $16^{ab}$, repeating it in its proper place, and $G_3$ reads $15^{ab}$ followed by $16^{abcd}$ — $^{c}$) $D_2$ तु (for च) $G_4$ भोजनानि प्रवर्तन्तां — $^{d}$) $D_2$ सर्वगोपै (for °गोप-) Ś$_1$ $K_{1\,4}$ -समाकुल, $D_1$ -सुसकुलम्, G(ed) -समाकुलै (for -सुसकुल) $\tilde{N}_2$ सर्वगोपश्च गोकुल, $D_6$ $T_{1\,2}$ $G_{1-3\,5}$ M सर्वत पशुसकुल ($T_2$ $G_2$ °लम्), $G_4$ यज्ञोऽयं पशुसकुल

14 $K_3$ $V_2$ $T_{3\,4}$ om (hapl) $14^{ab}$ — $^{a}$) $G_3$ -जनको (for °नो) $D_{3\,4}$ $M_{1\,2}$ घोषे (for घोषो) — $^{b}$) Ds -मानस (for -गोकुल). — $M_2$ om (hapl) $14^{c}$–$15^{d}$ — $^{d}$) Ś$_1$ शिञ्जितै (for गर्जितैः).

तूर्यप्रणादघोषैश्च वृषभाणां च गर्जितैः ॥ १४
हम्भारवैश्च वत्सानां गोपानां हर्षवर्धनः ।
दधिह्रदो घृतावर्तः पयःकुल्यासमाकुलः ॥ १५
मांसराशिप्रकृष्टाढ्यः प्रकाशौदनपर्वतः ।
संप्रावर्तत यज्ञः स गिरेर्गोभिः समाकुलः ।
तुष्टगोपजनाकीर्णो गोपनारीमनोहरः ॥ १६
अथाधिश्रितपर्यन्ते पर्याप्ते यज्ञसंविधौ ।
यज्ञं गिरेस्तिथौ सौम्ये चक्रुर्गोपा द्विजैः सह ॥ १७
यजनान्ते तदन्नं तु तत्पयो दधि चोत्तमम् ।
मांसं च मायया कृष्णो गिरिर्भूत्वा समश्नुते ॥ १८
तर्पिताश्चापि विप्राग्र्यास्तुष्टाः संपूर्णभोजनाः ।
उत्तस्थुः प्रीतमनसः स्वस्ति वाच्य यथासुखम् ॥ १९
भुक्त्वा चावभृथे कृष्णः पयः पीत्वा च कामतः ।
संतृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै ॥ २०
तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम् ।
गिरिमूर्ध्नि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः ॥ २१
भगवानपि तेनैव रूपेणाच्छादितः प्रभुः ।
सह तैः प्रणतो गोपैर्वन्दात्मानमात्मना ॥ २२ C 3878 B 2.17 25 P 2.17 25

15 M2 om 15 ( cf v l 14 ) G3 reads $15^{ab}$ after $13^{ab}$ — $^{a}$ ) S1 हम्भारवश्च, T1 2 G1 3 M1 3 4 हुम्भारवैश्च; G2 हुम्बा°, G5 हुम्फा° ( for हम्भा° ) D3 हम्बारवैश्चैव वत्सानां ( hypermetric ) — $^{b}$ ) S1 गोमतां ( for गोपानां ) D5 -वर्धनै ( for °न ) — After $15^{ab}$, G3 reads $16^{abcd}$. — $^{c}$ ) K3 Dn D5 T1 दध्नो ( for दधि- ). K2 Ñ1 Ds2 ( *sup. lin* ) T2–4 G1 3–5 M4 शतावर्त , Ñ2 3 V B1 ( *inf lin* ) 2 3 Ds D1 शरा°, D2–4 M1 3 समा°, D6 सदा° ( for घृता° ). K4 दधिहृद्घृतावर्ति. — $^{d}$ ) V3 B1 3 Ds D5 T3 4 -समावृतः, B2 समन्वित ( for -समाकुल. ) Ñ1 पयस स्थानसकुल

16 T3 reads $16^{ab}$ for the first time after $13^{ab}$ G3 reads $16^{abcd}$ after $15^{ab}$ — $^{a}$ ) Ñ2 3 B1 3 T1 G1 4 5 M मासराशि ( for °शि- ) K1 4 -प्रकृष्टाढ्य ( K4 °ज्य ), K3 Ds2 -प्रभूताज्य , Ñ1 ( marg ) -प्रकृताढ्य , D2 प्रभूताढ्य-, D3 -प्रकृष्टौघ ( for प्रकृष्टाढ्य ) Ñ1 B2 Dn D4 5 मांसराशि प्रभूताढ्य ( D4 °ज्य ), D1 °शि प्रकृष्टाढ्य , T2 G3 °शि प्रतप्ताढ्य , T3 ( both times ) 4 °शि प्रकृताज्य , G2 °शि प्रलिप्ताढ्य — $^{c}$ ) K3 D6 G M3 4 यज्ञश्च, Dn D4 5 T2 यज्ञोऽस्य, T1 यज्ञस्तु , T3 4 गोयज्ञो ( for यज्ञ स ) B3 सप्रावर्धत यज्ञ स. — $^{d}$ ) T4 च संकुल- ( for समा° ) — $^{e}$ ) K4 Ñ3 V1 D1 -समाकीर्णो; Ñ1 2 V3 D2–5 T3 4 -गणा°, V2 -शता° ( for -जना° ) K2 तुष्टो गोपगणाकीर्णो, D6 T1 2 G M तुष्टगोपैः समाकीर्णो — $^{f}$ ) K1 ( *sup lin* as in text ) नानानारी-; M4 गोपानीक ( for गोपनारी- ) T4 समाकुल ( for -मनोहर. ) — After 16, K3 Dn D2 5 ( marg ) ins .

701* भक्ष्याणां राशयस्तत्र शतशश्चोपकल्पिता ।
गन्धमाल्यैश्च विविधैर्धूपैरुच्चावचैस्तथा ॥

17 $^{a}$ ) D6 T2 तथा ( for अथ ) K4 [अ]धिसृत्य ( for °श्रित ) — $^{b}$ ) D2 प्रजाते, D5 T1 G( ed ) संप्राप्ते, M3 पर्याये ( for °प्ते ) — $^{c}$ ) K2 गिरियज्ञस्, V2 गिरेर्यज्ञं ( by transp ) Ś1 तदा सौम्यं , V3 Ds1 तिथौ सौम्य , Dn1 तथा सौम्ये , D2 तथा सौम्य ; D6 T2 G1 2 4 5 M4 स्थिता ( G2 °ते ) सम्यक्, T1 M1–3 तिथौ सम्यक ( for तिथौ सौम्ये ) K4 यज्ञे गिरौ तिथौ रम्ये , G3 यज्ञ गिरौ स्थिता सम्यक्.

18 $^{a}$ ) Dn1 यजन्तस्तत ( for °नान्ते ) B3 तत्; G4 च ( for तु ) K2 गोपानां यजता सर्वं — $^{c}$ ) K4 सर्वं ( for मांसं ). T4 पयसा ( for मायया ) — After 18, D2 ins

702* ईदृशं ह्यभवत्तत्र गोपाना भरतर्षभ ।

19 $^{a}$ ) Dn1 [ए]व ; T2 [अ]त्र ( for [अ]पि ) D6 विप्रास्तु; M1–3 विप्रेन्द्रास् ( for विप्राग्र्यास् ) — $^{b}$ ) K Ñ2 3 V1 3 B1 Dn D2–5 T3 4 G3 M4 -मानसा ( for -भोजनाः ) D1. 2 पुष्टाः संपूर्णमानसा — $^{c}$ ) Ś1 V1 2 B1 Ds1 प्रीति- ( for प्रीत- ). K1 उत्तस्थुः प्रीतिमन्तश्च ; Ñ1 तुष्टुवुः प्रीतिमनसः — $^{d}$ ) V1 G5 स्वस्ति K4 Ds2 T1 4 M2 वाच्यं ( for वाच्य ). — After 19, K2 reads $22^{c}$–$23^{b}$

20 $^{a}$ ) Ś1 [उ]दाहृतं , Ñ1 ( marg ) D6 T1 G3 [अ]पहृत , T2 [उ]पहृत , G1 2 4 5 M4 [उ]पहृतं ; M1–3 च सकलं ( for [अ]वभृथे ) D2 भुक्त्वा चापहृत कृत्स्नं — $^{b}$ ) T4 तु ( for च ) — $^{c}$ ) Ś1 K4 D6 G1. 2 4. 5 स, D4 T3 4 सु- ( for सं- ) K1 V1 -तुष्टो ( for तृप्तो ) K1 सोऽस्ति- ( for ऽस्मीति ). Ś1 T1 रूपेण , D6 T2 G M4 दीप्तेन ( for दिव्येन ). — $^{d}$ ) T1 दीप्तेन ( for रूपेण ) D4 वि- ( for प्र- ) T3 रूपेण प्रहसन्निव — After 20, T3 ins. :

703* प्रजहास गिरेर्मूर्ध्नि स्थित कमललोचन ।

21 $^{b}$ ) V1 3 -स्रग्गन्ध- ( for स्रगनु ) — $^{d}$ ) K2 हृष्टा ( for कृष्णं )

22 $^{b}$ ) T1 चोदित-, G3 चोत्थितः ( for [आ]च्छादित- ) Ś1 कृष्णरूपेण छादित , D6 T2 G1 2 4 5 M4 कृष्णरूपेण चोत्थि( D6 G2 °दि )त ; M1–3 रूपेणातीव शोभितः — K2 reads $22^{c}$–$23^{b}$ after 19, T2 G5 M4 read $22^{cd}$ twice,

तमूचुर्विस्मिता गोपा देवं गिरिवरे स्थितम् ।
भगवंस्त्वद्वशे युक्ता दासाः किं कुर्म किंकराः ॥ २३
स उवाच ततो गोपान्गिरिः सुप्रभया गिरा ।
अद्यप्रभृति याज्योऽहं गोषु यद्यस्ति वो दया ॥ २४
अहं वः प्रथमो देवः सर्वकामकरः शिवः ।
मम प्रभावाच्च गवामयुतान्येव भोक्ष्यथ ॥ २५
शिवश्च वो भविष्यामि मद्भक्तानां वने वने ।
रंस्ये च सह युष्माभिर्यथा दिविगतस्तथा ॥ २६
ये चेमे प्रथिता गोपा नन्दगोपादयः स्थिताः ।
एषां प्रीतः प्रयच्छामि गोपानां विपुलं धनम् ॥ २७
पर्याप्नुवन्तु मां क्षिप्रं गावो वत्ससमाकुलाः ।
एवं मम परा प्रीतिर्भविष्यति न संशयः ॥ २८
ततो नीराजनार्थं वै वृन्दशो गोकुलानि च ।
परिवव्रुर्गिरिवरं सवृषाणि सहस्रशः ॥ २९
ता गावः प्रस्रुता वत्सैः सापीडस्तबकाङ्गदाः ।
सस्रगापीडशृङ्गाग्राः शतशोऽथ सहस्रशः ॥ ३०
अनुजग्मुश्च गोपालाः कालयन्तो धनानि च ।
भक्तिच्छेदानुलिप्ताङ्गा रक्तपीतासिताम्बराः ॥ ३१

— $^{c}$) $B_2$ $D_{4\,5}$ $G_2$ सहितै (for सह तै) $K_4$ Ñ $V_{1\,2}$ $D_S$ $T_1$ सहितो (for प्रणतो) $K_2$ $V_3$ $D_{2\,3\,6}$ $T_2$ (both times). $_{3\,4}$ $G_{1\,3\,5}$ $M_4$ (last two first time) स($D_2$ सं)हितै. सहितो गोपैर्, $G_{2\,4\,5}$ $M_4$ (last two second time) स तदा सहि($M_4$ सेवि)तो गोपैर्, $M_{1-3}$ कृष्णस्तै. सह गोपालैर् — $^{d}$) $G_{2,5}$ $M_4$ (last two second time) ददर्श, $M_{1-3}$ ववन्दे (for °न्द)

23 For the sequence in $K_2$, cf v l 22. — $^{c}$) $G_2$ $M_4$ त्वद्धिते (for त्वद्वशे)

24 $^{a}$) $Ś_1$ यत्रोवाच; $K_1$ $D_{2\,3}$ स प्रो°, $K_4$ $T_1$ स चो°; $Ñ_1$ उवाच च (for स उवाच) — $^{b}$) $K_1$ $D_2$ सप्रभया, $Ñ_1$ $D_S$ $T_{3\,4}$ सप्रणयं, $D_6$ $T_2$ $G_{1\,3-5}$ स शुभया (for सुप्रभया) $K_{2,4}$ $Ñ_{2\,3}$ V B Dn $D_{4\,5}$ गिरिप्रभवया गिरा — $^{c}$) $K_2$ आप्यो, $K_{3\,4}$ $Ñ_3$ $V_{1\,2}$ $B_{2\,3}$ Dn $D_{2-5}$ $G_{1\,4}$ चेज्यो, $Ñ_2$ $V_3$ पूज्यो; $D_1$ (before corr) वेद्यो, $T_1$ $M_4$ यज्ञो, $T_2$ $G_{3\,5}$ वन्द्यो, $M_3$ युज्यो (for याज्यो) — $^{d}$) $D_1$ $G_{1\,2\,5}$ [अ]स्तु (for [अ]स्ति) $V_1$ $T_1$ वै; $D_6$ वा (for वो)

25 $^{a}$) $Ñ_3$ (marg) $V_1$ वै, $D_2$ च (*sup lin* as in text); $G_4$ य (for व) — $^{b}$) K Ñ $V_{1\,3}$ B Dn $D_S$ $D_{1,3\,5}$ $T_{3\,4}$ शुभः; $D_{2\,4}$ प्रभु (for शिव) $V_2$ सर्वकामप्रदः शुभ. — $^{c}$) $K_1$ $T_{3\,4}$ प्रसादाच् (for प्रभावाच्) $M_{1-3}$ मत्प्रभावाच्च सर्वं वै — $^{d}$) $K_1$ च, $Ñ_3$ (marg) $V_{2\,3}$ $B_{2\,3}$ $D_{S1}$ $G_4$ $M_4$ [उ]प- (for [ए]व) $K_2$ $D_6$ $T_2$ $G_{1-3,5}$ अमृतान्युपभोक्ष्यथ ($T_2$ $G_1$ °भुङ्क्ष्यत) $D_1$ प्रयुतान्युपभोक्ष्यथ, $M_{1-3}$ यथेष्टमुपभो°.

26 $^{a}$) $K_2$ शिवः श्रेयो, $D_6$ $T_{1\,2}$ $G_{1\,3-5}$ $M_4$ शिवाय वो, $G_2$ शिवभावो; $M_{1-3}$ शिवस्तु वो (for °श्च वो) — $^{b}$) $Ś_1$ मद्गतानां, $V_3$ मम भक्तानां (hypermetric) (for मद्भक्तानां) $K_4$ स्थितो वने, $G_2$ दिने दिने (for वने वने) — $^{c}$) $Ś_1$ वत्स्यामि, $K_1$ $B_{1\,3}$ $D_S$ $D_1$ $T_4$ रंस्येऽहं, $D_3$ रमेऽहं (for रंस्ये च) $K_4$ अह चरिष्ये युष्माभिर् — $^{d}$) $Ś_1$ स्वर्गगतस् (for दिवि°)

27 $^{a}$) $Ś_1$ $K_2$ $V_2$ $M_3$ मे (for [इ]मे) $K_4$ कथिता (for प्र°) — $^{b}$) N (except $Ś_1$ $D_6$) $T_{3\,4}$ नन्दगोपपुरोगमा — $^{c}$) $D_{4\,6}$ $T_{2-4}$ $G_{1-3\,5}$ $M_{1\,4}$ तेषां (for एषां). $T_1$ $M_4$ प्रीति (for प्रीत.).

28 $^{a}$) $Ś_1$ $K_4$ $M_2$ मां क्षिप्रं (by transp), $T_1$ $M_{1\,3\,4}$ क्षिप्रं च $D_3$ पर्यागच्छन्तु क्षिप्र मां, $D_6$ $T_2$ G °भ्रुवन्ति क्षिप्रं च — $^{b}$) $D_3$ वत्सा (for वत्स-). — $^{c}$) $Ś_1$ $T_{3\,4}$ मे परमा (for मम परा) — $^{d}$) $Ś_1$ जगद्धितम् (for न संशय).

29 $^{a}$) $M_4$ Bom Poona eds G(ed) हि (for वै) $M_{1\,2}$ ततो नीराजनार्थं वै — $^{b}$) $K_{2-4}$ Ñ V $D_{1\,3-5}$ $T_{3\,4}$ वै, Dn तत्, $T_1$ $M_{1\,3\,4}$ तु (for च) — $^{c}$) $D_2$ -चक्रे (for -वव्रुर्) — $^{d}$) $T_1$ सकृष्णेन, $G_2$ lacuna (for सवृषाणि). N (except $Ś_1$ $D_6$) समन्ततः (for सहस्रश) $T_{3\,4}$ सवृषास्ते समन्तत

30 $^{a}$) $Ś_1$ तावन्त प्रद्रुता दृष्ट्वा, $K_1$ $T_4$ ता गावः प्रद्रुता दृष्टा ($K_1$ [*sup lin*] °ष्ट्वा), $K_2$ ता गाव. प्रहृतं दृष्ट्वा, $K_3$ तं गावः प्रद्रुता दृष्टा, $K_4$ Ñ V B Dn $D_S$ $D_{1\,2\,4\,5}$ $T_3$ ता गाव प्रद्रुता हृष्टा, $D_3$ ता गाव प्रहिता दृष्टा, $D_6$ $T_{1\,2}$ G $M_4$ ता गाव प्रद्रु($T_3$ $G_{1\,4}$ °सृ-, $G_5$ °हृ)ता दीप्ता — $^{b}$) $D_3$ सापीडस्रग्वराङ्गदाः $G_{4\,5}$ °स्तबकाङ्कका, $M_4$ °स्तबकाङ्कुशाः. — $D_3$ om $30^{cd}$ — $^{c}$) $Ś_1$ ससृजोत्पीडशृङ्गाग्राञ् (sic), $K_2$ सहस्रगोपीशृङ्गाग्रा; $K_4$ $T_3$ स्रगापीडित°, $V_1$ समग्रापीड°; $V_2$ $B_1$ Dn $T_4$ $M_2$ सस्रजा°, $D_6$ $T_{1\,2}$ G $M_4$ स($G_4$ सु)निष्का°

31 $^{a}$) $K_2$ तु (for च). — $^{b}$) $M_4$ पालयन्तो, G(ed) गाल° (for काल°) $K_4$ $Ñ_2$ $V_{1\,3}$ $T_4$ वनानि (for ध°) $D_6$ $G_{1,2\,4,5}$ $M_3$ पा($M_3$ का)लयन्गोधनानि च — $^{c}$) $V_3$

मयूरचित्राङ्गदिनो भुजैः प्रहरणावृतैः ।
मयूरपत्रवृन्तानां केशबन्धैः सुयोजितैः ।
बभ्राजुरधिकं गोपाः समवाये तदाद्भुते ॥ ३२
अन्ये वृषानारुरुहुर्नृत्यन्ति स्मापरे मुदा ।
गोपालास्त्वपरे गाश्च जगृहुर्वेगगामिनः ॥ ३३

तस्मिन्पर्यायनिर्वृत्ते गवां नीराजनोत्सवे ।
अन्तर्धानं जगामाशु तेन देहेन सो गिरिः ॥ ३४
कृष्णोऽपि गोपसहितो विवेश व्रजमेव ह ।
गिरियज्ञप्रवृत्तेन तेनाश्चर्येण विस्मितः ॥ ३५

इति श्रीहरिवंशे षष्टितमोऽध्यायः ॥ ६० ॥

# ६१

वैशंपायन उवाच ।
महे प्रतिहते शक्रः सक्रोधस्त्रिदशेश्वरः ।
संवर्तकं नाम गणं तोयदानामथाब्रवीत् ॥ १

भो बलाहकमातङ्गाः श्रूयतां मम भाषितम् ।
यदि वो मत्प्रियं कार्यं राजभक्तिपुरस्कृतम् ॥ २
एते वृन्दावनगता दामोदरपरायणाः । C 3895 B 2. 18 3 P 2. 18 3

---

भुक्ति-, B2 शक्ति- (for भक्ति-) — d) Ñ3 V1 B3 Ds D4 6 T1 3 4 G1–3 5 M2 4 रक्तपीतसिताम्बरा, V3 B1 रक्तापीडा°, M3 रक्तपीताम्बरासिताः

32 a) M4 मायूर- (for म°) D2 (*sup lin* as in text) मयूरचित्राङ्गदितैर् — b) D2 6 T2 4 G1 भुजै प्रहरणायु(T2 G1 °न्वि)तै, D3 T3 भुजै प्रहरणोद्यतै, D4 भुजै प्रहरणैर्वृतै. — T4 om 32cd — c) K2 Ñ3 V1 2 B2 3 Dn Ds D2–4 -चित्रैश्च, K3 4 Ñ1 2 D1 5 -चित्राणां, V3 चित्रैस्तु, D6 G2 -वृत्तान्तै., T1 -प्रततै, T2 G1 3–5 M4 -प्रवृत्तै; T3 चित्राश्च (for -वृन्ताना) Cal ed मयूरचित्र पत्रैस्तु — d) V1 M4 सुपूजितै, G2 ततोर्जितै (for सुयोजितै·). — e) Ñ3 V1 बभ्राजिरे, V2 3 विभ्राजुर् (for ब°) — f) D6 T2 G2–4 M1–3 तथाद्भुते, G1 तदाद्भुतम् (for °ते). D3 समवायतयाद्भुतम्

33 b) K1 तथा परे; K3 4 Ñ3 Dn D1 2 5 T3 4 M4 परे मुदा, D6 G1 5 [अ]परे जना, T1 G3 4 परे जना; M1 2 परे तथा, M3 [अ]परे तथा (for °रे मुदा) D3 नृत्यन्ति परया मुदा, G2 °न्गायन्परे जना — c) T1 4 च (for तु) Ś1 गावो, K Ñ V B1 2 D (except D5 6) T4 गा वै, T3 गोपान् (for गाश्च). — d) D3 वेश्म- (for वेग-)

34 a) Cal ed अस्मिन् (for त°). K3 -निर्वृत्तेर् (for °त्ते) — b) Ñ1 (marg as in text) गोपा (for गवा) K2 3 गवां नीराजनोत्सवै.. — d) Ś1 वै गिरि, K1. 3 4 Ñ2 3 V B D (except D6) T3 4 G5 सोऽचल. (D3 °लात्) (for सो गिरि.)

35 a) T3 गोपै. (for गोप-). — b) D3 जगाम (for विवेश) Ñ2 V1 D5 T4 हि, Ds2 च (for ह) D6 T2 G M4 व्रजमेव विवेश स (D6 G3 M4 ह) — c) Ś1 -यज्ञे (for -यज्ञ-) V2 प्रवर्तेन (for -प्रवृत्तेन) T3 4 गिरियज्ञेन महता. — After 35, N (except Ñ1) S (except M1–3) G(ed.) ins :

704* गोपा. सबालवृद्धा वै तुष्टुवुर्मधुसूदनम् ।

[ G(ed) स्व (for स-) K1 D2 ते, D3 G4 5 च, T2 G1 तु (for वै) ]

K4 cont

705* नृत्यं गीतं प्रकुर्वाणा सहकृष्णा व्रजं ययु. ।

Colophon — *Mention of the Epic* K3 Ñ2 Ds2 G3. — *Mention of Khila* All Mss (except Ñ1). — *Subparvan* T4 आश्चर्यपर्व — *Adhy name* Ś1 K2 D6 G2 3 M4 गिरियज्ञ, K1 3 Ñ V B Dn Ds D1 3 5 गिरियज्ञप्रवर्तनम् — *Adhy no.* (figures, words or both) · K3 G2. 4 70, Ñ3 V1 T1 G3 5 M4 73; V2 B2 74; V3 Dn Ds D4 T2 G1 72, D3 78; T3 79, T4 68, M1–3 69 — *Śloka no* Dn1 39; Ds2 38, D1 70, D4 50.

## 61

1 D5 om. the ref. — a) K4 (by corr.) B3 D6 T3 G2 4. 5 M4 मखे (for महे) — b) D6 स क्रोधात् (for सक्रोधस्). V1 सक्रोधस्त्रिदिवेश्वर; G2 शक्रेशस्त्रिदिवे°. — c) D5 T1. 3 4 M4 सांवर्तकं (for सं°) — d) T1 तथा (for अथ). Ñ1 तोयदानिदमब्रवीत्; M4 तोयानामथ सोऽब्रवीत्.

2 a) T2 G1 4 हे (for भो). — c) G3 वा (for वो).

नन्दगोपादयो गोपा विद्विषन्ति ममोत्सवम् ॥ ३
आजीवो यः परस्तेषां गोपत्वं च यतः स्मृतम् ।
ता गावः सप्तरात्रेण पीड्यन्तां वृष्टिमारुतैः ॥ ४
ऐरावतगतश्चाहं स्वयमेवाम्बु दारुणम् ।
स्रक्ष्यामि वृष्टिं वातं च वज्राशनिसमप्रभम् ॥ ५
भवद्भिश्चण्डवर्षेण चरता मारुतेन च ।
हतास्ताः सव्रजा गावस्त्यक्ष्यन्ति भुवि जीवितम् ॥ ६
एवमाज्ञापयामास स सर्वाञ्जलदान्प्रभुः ।
प्रत्याहते वै कृष्णेन शासने पाकशासनः ॥ ७
ततस्ते जलदाः कृष्णा घोरनादा भयावहाः ।
आकाशं छादयामासुः सर्वतः पर्वतोपमाः ॥ ८
विद्युत्संपातजननाः शक्रचापविभूषिताः ।
तिमिरावृतमाकाशं चक्रुस्ते जलदास्तदा ॥ ९
गजा इवान्ये संसक्ताः केचिन्मकरवर्चसः ।
नागा इवान्ये गगने चेरुर्जलदपुंगवाः ॥ १०
तेऽन्योन्यवपुषा बद्धा नागयूथायुतोपमाः ।
दुर्दिनं विपुलं चक्रुश्छादयन्तो नभस्तलम् ॥ ११
नृहस्तनागहस्तानां वेणूनां चैव सर्वशः ।
धाराभिस्तुल्यरूपाभिर्ववृषुस्ते बलाहकाः ॥ १२
समुद्रं मेनिरे तं हि खमारूढं नृचक्षुषः ।

— $^{d}$ ) D3 -शक्ति ( for -भक्ति- ) Ś1 K1. 3 Dn -पुरस्कृतै ( for °स्कृतम् )

3 $^{a}$ ) K2 एवं ( for एते ) — $^{d}$ ) K2 3 महोत्सवम् ( for ममो° )

4 $^{a}$ ) T3 4 जीवा गाव , G3 आजीवं च ( for °वो यः ) K1 Ds G1 स्वेषां ( for तेषां ) — $^{b}$ ) T3 4 श्रुतम् ( for स्मृतम् ) G1 गोपास्ते नु यत स्मृता , G4 गोगोवत्सादय स्मृता — $^{d}$ ) T4 पात्यन्ता ( for पीड्यन्ता ) D5 वर्ष- ( for वृष्टि- ) Ś1 पीड्यन्तो भयमारुतै ( sic ), M1–3 °न्ता वृष्टिभि सदा

5 $^{a}$ ) Ś1 K1 ऐरावण ( for °वत- ) K1 ( marg as in text ) [अ]यं ( for [अ]हं ). — $^{b}$ ) M1 2 सु- ( for [अ]म्बु ) M3 सायमेव सुदारुण — $^{c}$ ) D3 मोक्ष्यामि ( for स्र° ) K V3 T2 G1 वृष्टिवा( T2 °पा )तं , T4 वात वृष्टिं ( by transp ) Ś1 वृष्टिं वात च स्रक्ष्यामि , T3 स्रक्ष्याम्यनारतं वृष्टिं — $^{d}$ ) Ñ V B Ds D3–5 T3 4 -स्वनम् ( for -प्रभम् )

6 $^{a}$ ) Ś1 तत्र ( for चण्ड- ) — $^{b}$ ) Ñ1 सृजता , D3 T3 महता ; G4 भवता ( for चरता ) — $^{c}$ ) Ś1 K3 Ñ1 B1 Ds D2 3 6 T4 G1 सप्रजा ( for सव्रजा ) — $^{d}$ ) D6 त्यजन्ति ( for त्यक्ष्यन्ति ).

7 Before 7, K1 ins वैशंपायन उवाच — $^{b}$ ) K2 Ñ1 3 V B1 D4–6 T1 2 G M4 सर्वान्स ( by transp ) T2 G1 विभु. ( for प्रभु· ) K3 4 Ñ2 Dn D1 T3 4 सर्वाञ्जलधरान्प्र- ( Ñ2 °गत प्र )भु — $^{c}$ ) Ś1 K1 तु ( for वै ). — $^{d}$ ) D6 मखे वै ( for शासने ) — For $7^{cd}$, M1–3 subst

706* मखे प्रतिहते विष्णोः शासनात्पाकशासन· ।

8 $^{a}$ ) T4 partly damaged V दृष्टा ( for कृष्णा ). — $^{b}$ ) K3 घोरा नाद- ; M3 घोरं नाद- ( for घोरनादा ) D4 महाबला ( for भयावहाः ) — $^{d}$ ) G2 समन्तात् ( for सर्वत. )

9 K2 om ( hapl ) $9^{a}$–$11^{b}$ M4 om 9–12 — $^{a}$ ) V1 वियत्संपातजनना· , V3 T4 विद्युत्संघात° — $^{b}$ ) T1 -वात- ( for -चाप- ) — $^{d}$ ) K1 2 4 Ñ2 V3 D1 ( *sup lin* as in text ) M1–3 तथा , V2 मुदा , B1 3 Ds तत ( for तदा ). — After 9, G4 reads $11^{cd}$ for the first time, repeating it in its proper place

10 K2 M4 om 10 ( cf v 1 9 ) — $^{a}$ ) T1 इभा ( for गजा ) Ñ1 Ds [अ]न्य- ( for [अ]न्ये ) K4 सव्यक्ता , D5 Bom Poona eds G( ed ) सयुक्ता ( for ससक्ता ) G3 गजा इवान्यान्यसक्ता — $^{b}$ ) D3 शकट- ( for मकर ) — $^{c}$ ) D6 T2 G1 M3 नगा ( for नागा ) V2 गमने ( for गगने ). T4 नागाकारा इवान्योन्यौ

11 K2 om $11^{ab}$, M4 om 11 ( for both, cf v. 1 9). — $^{a}$ ) Ś1 K3 4 Ñ V2 3 B2 Dn D1 3–5 M2 तेऽन्योन्यं ; D6 T G अन्योन्यं ( D6 G2 °न्य- ) ( for तेऽन्योन्य- ) M1–3 दिग्धा ( for बद्धा ) — G4 reads $11^{cd}$ for the first time after 9 — $^{d}$ ) B2 दारयन्तो ( for छाद° )

12 M4 om 12 ( cf v 1 9 ) T3 om $12^{ab}$ — $^{a}$ ) K4 बृहत्तं , T4 स्वहस्ते , G3 नृहस्ति- ( for °स्त- ) Dn D1 T2 G4 -हस्ताभ्यां ( for -हस्ताना ) — $^{b}$ ) K1 om वेणूनां Ś1 वेणूना च समन्तत: , K2–4 N2 3 V Dn Ds D1 5 T4 G4 °नां चैव ( K4 खे च ) सर्वतः — For $12^{ab}$, M1–3 subst .

707* स्थूलनागोरुहस्तानां सततं सर्वतोदिशम् ।

— G3 repeats $12^{cd}$ after $14^{ab}$ — $^{c}$ ) T3 बहु- ( for तुल्य- ) Ś1 धाराभिरक्षमात्राभिर् — $^{d}$ ) Ś1 बबन्धुस् , T2 G1 ववर्षुस ( for ववृषुस् )

13 $^{a}$ ) Ñ3 V1 T1 M4 ते , B1. 2 Ds D4 तद् ( for तं ). D1 वै ( for हि ). Ś1 समुद्र इव तं मेने — $^{b}$ ) K2 Ñ1 क्षमा-

दुर्विगाह्यमपर्यन्तमगाधं दुर्दिनं महत् ॥ १३
न संपतन्ति खगमा दुद्रुवुर्मृगजातयः ।
पर्वताभेषु मेघेषु खे नदत्सु समन्ततः ॥ १४
सुप्तसूर्येन्दुसदृशे मेघैर्नभसि दारुणैः ।
अतिवृष्टेन लोकस्य विरूपमभवद्वपुः ॥ १५
मेघौघैर्निष्प्रभाकारमदृश्यग्रहतारकम् ।
चन्द्रसूर्यांशुरहितं खं बभूवातिनिष्प्रभम् ॥ १६
वारिणा मेघमुक्तेन मुच्यमानेन चासकृत् ।
आबभौ सर्वतस्तत्र भूमिस्तोयमयी यथा ॥ १७
विनेदुर्बर्हिणस्तत्र स्तोककाल्परुताः खगाः ।
विवृद्धिं निम्नगा याताः प्लवगाः संप्लवं गताः ॥ १८
गर्जितेन च मेघानां पर्जन्यनिनदेन च ।
तर्जितानीव कम्पन्ते तृणानि तरुभिः सह ॥ १९
प्राप्तोऽन्तकालो लोकानां प्राप्ता चैकार्णवा मही ।
इति गोपगणा वाक्यं व्याहरन्ति भयार्दिताः ॥ २०
हम्भारवैः क्रन्दमाना न चेलुः स्तम्भितोपमाः ।
निष्कम्पसक्थिश्रवणा निष्प्रयत्नखुराननाः ।
हृष्टलोमार्द्रतनवः क्षामकुक्षिपयोधराः ॥ २१ C 3914 B 2 18 22 P 2. 18 22

रूढं, G2 M4 समा° (for खमा°) — c) M1–3 दुर्विगाहम् (for °गाह्यम्)

14 a) K Ñ2 3 V B1 2 Dn Ds D1–5 T3 4 G4 नैवापतन्वै खगमा, D6 corrupt — After $14^{ab}$, G3 repeats $12^{cd}$ — c) M4 पर्वाभेषु च मेघेषु — d) Ś1 विनदत्सु, D2 नदत्सु सु- G5 खेऽनदन्सु- (for खे नदत्सु)

15 Ś1 repeats $15^{ab}$ after 33 — a) All Mss (except Ś1 M1–3) नष्ट-; Ś1 (second time) सस- (for सुप्त-) Ś1 (both times) K1 3 4 Ñ1 2 Dn D1 5 -सदृशैर्, K2 Ñ3 V B Ds D2–4 T G1 3–5 M4 -नक्षत्रैर्, D6 G2 -सहितैर् (G2 °ते) (for -सदृशे) — b) D4 6 वारुणै ; M1–3 दारुणे (for °णैः) — c) Ś1 अभि- (for अति) K4 वर्षेण, Ñ3 V1 -वृष्ट्या तु; D6 T1 2 G M4 -वृष्ट्या च, M1–3 -प्रवृष्टे (for -वृष्टेन) K2 अदृष्टेन बलाक्रम्यद्, K3 अतिवृष्टयैव लोकाना — d) G3 अगमद् (for अभवद्) T2 G1 विद्युद्रूपं भवद्वपु (sic)

16 a) Ś1 मेघाभैर्निष्प्रतीकारम्; V2 Ds2 मेघौघैर्निःप्रभाकारैर्; D6 T1 2 G M4 मेघैर्निबद्ध(T1 M4 °बिद्ध)माकाशम्, M1–3 मेघौघविततं विश्वम् — b) V2 -तारकैः (for °कम्). — c) M1–3 -सूर्याभ- (M2 °भि-) (for सूर्यांशु-) Ñ1 सचन्द्रसूर्यान्तर्हितं, T1 चन्द्रसूर्यान्तर्हित च, G2 °र्यान्तरहितं. — d) Ś1 T1 M सुनिष्प्रभम्, K2 [अ]तिदारुणम्; D3 T2 G1 3 4 [अ]थ निष्प्रभम् (for [अ]तिनि°)

17 a) M4 हरिणा (for वा°). B Ds T2 G5 युक्तेन (for -मुक्तेन) D3 वारिणाशनियुक्तेन — After $17^{ab}$, D6 T1 2 G M ins

708* मेघयुक्तेन वातेन घूर्णितं विश्वतोमुखम् ।

— c) T1 सर्वशस् (for °तस्). — d) T2 भूयस् (for भूमिस्) D3 जलमयी (for तोय°). D5 M4 तथा (for यथा)

18 a) K1 (marg as in text) विजहुर्; V3 विरेजुर् (for विनेदुर्) — b) Ś1 D4 स्तोकका विरुता खगाः, K1 2 4 Ñ2 V1 3 D1–3 5 M4 तोयकाल(M4 °कल्प)रु(Ñ2 V1, 3 °र)ता खगा. K3 स्तोकका विरता गताः, Ñ1 3 तोयकल्प(Ñ3 °काल)रुना. खगा., B1 Dn Ds D6 T G1 4 स्तोककल्परु(D6 °र-, T1 °म)ता खगा B2 स्तोककालरुताः स्वगा, G2 स्तोकाल्परुदिता खगा, G3 5 तोककल्पतरा (G5 °भृता) खगाः. — c) K2 विवृद्धौ, G5 °त्ति, M4 प्रवृद्धा (for विवृद्धिं) — d) K2 अबला (for प्लवगाः) Ś1 सतनं, T2 G4 M1–3 संहतिं (for संप्लवं). K4 निर्झरप्लवसगता, D5 प्लवंगास्तु प्लव गताः; D6 G1–3 5 M4 प्लवंगा संह(G5 °ग)तिं गता.

19 a) T2 G1 4 मेघेन (for मेघानां) — b) K4 Ñ2 V3 पयसां (for पर्जन्य) — c) Ś1 [ए]व, T3 च (for [इ]व) K4 Ñ1 कम्पति, D6 कल्पन्ते (for कम्पन्ते)

20 b) N (except Ś1 D6) T1 3. 4 व्यक्तम् (for प्राप्ता च) G2 M4 [ए]कार्णवी (for °वा) — c) M4 वै गो (for गोप-). — d) Ś1 व्याहरन्तो, T2 G1 °रन्त (for °रन्ति). — After 20, all Mss (except Ś1 Ñ1 M1–3) ins

709* तेनोत्पाताम्बुवर्षेण गावो विप्रहता भृशम् ।

[ D6 G1 -वातेन; T1, 2 G2 3 5 M4 -पातेन (for -वर्षेण). K4 ऽपि (for वि-) K1 G1 -हृता (for -हता) ]

21 a) Ś1 D3 हम्बारवै., K1 भम्भारावैः, D1 रम्भारवै.; D6 G5 हुम्फा°; T1, 2 G1–3 M1–3 हुम्भा°; G4 हम्फा° (for हम्भा°) — b) D6 न चेरु; T2 G1, 3 निश्चला; G5 न शेकुः (for न चेलुः) M1–3 न शेकुश्चलितुं पदैः — c) K4 नि.क्रम्य; some Mss निःकम्प- (for निष्कम्प-). K Ñ V B D1–5 G4 निष्कम्पसक्थि(K [marg as in text] °सर्व-, K2 V1 °शक्ति-; D5 °संधि-, G4 साक्षि)चरणा; D6 T2 G1–3 5 °म्पसाक्षिश्रवणा (T2 °सो) — d) Ś1 निष्प्रयत्ना; K2 °यत्नं; V3 °कम्प-;

काश्चित्प्राणाञ्जहुः श्रान्ता निपेतुः काश्चिदातुराः ।
काश्चित्सवत्साः पतिता गावः शीकरवेजिताः ॥ २२
काश्चिदाक्रम्य क्रोडेन वत्सांस्तिष्ठन्ति मातरः ।
विमुखाः श्रान्तसक्थ्यश्च निराहाराः कृशोदराः ॥ २३
पेतुरार्ता वेपमाना गावो वर्षपराजिताः ।
वत्साश्चोन्मुखका बाला दामोदरमुखाः स्थिताः ।
त्राहीति वदनैर्दीनैः कृष्णमूचुरिवार्तवत् ॥ २४
गवां तत्कदनं दृष्ट्वा दुर्दिनागमजं भयम् ।
गोपांश्चासन्नवदनान्कोपं कृष्णः समादधे ॥ २५
स चिन्तयित्वा संरब्धो दृष्टो योगो गवामिति ।
आत्मानमात्मना वाक्यमिदमाह प्रियंवदः ॥ २६
अद्याहमिममुत्पाट्य सकाननवनं गिरिम् ।
कल्पयेयं गवां स्थानं वर्षत्राणाय दुर्धरम् ॥ २७
अयं धृतो मया शैलो भूमीगृहनिभोपमः ।
त्रास्यन्ते सव्रजा गावो मद्वश्यश्च भविष्यति ॥ २८
एवं स चिन्तयित्वा तु विष्णुः सत्यपराक्रमः ।

---

some Mss नि प्रयत्न- ( for निष्प्र° ) —$^e$) Ś$_1$ K$_1$ हृष्टा; V$_1$ कृष्ण- ( for हृष्ट- )

22 $^a$) K$_3$ V$_3$ D$_5$ D$_{1\ 4}$ शान्ता ( for श्रान्ता ). T$_4$ काश्चित्प्राणांश्च सम्भ्रान्ता —$^b$) S$_1$ B$_{1\ 3}$ D$_6$ T$_1$ G$_{1\ 2\ 5}$ निषेदुः, K$_1$ Ñ$_{2\ 3}$ V$_3$ T$_3$ निष्पेतुः, K$_2$ D$_1$ नि पेतु, M$_2$ विषेदु. ( for निपेतु ) —$^c$) M$_3$ om पतिता. —$^d$) G$_1$ शकट- ( for शीकर- ) D$_5$ G$_2$ -वीजिता, D$_1$ corrupt, D$_2$ G$_4$ वेपिताः, T$_{2\ 3}$ वेदिता, T$_4$ M$_{1-3}$ पीडिता ( for -वेजिता. ) K$_1$ गाव. शीतेन पीडिता, M$_4$ काश्चिच्छिरसि वेजिता·

23 T$_3$ repeats 23$^{ab}$ after 710* —$^a$) K$_4$ कायेन; M$_4$ क्रोधेन ( for क्रोडेन ) T$_3$ ( second time ) आक्रम्य गावः क्रोधेन M$_{1-3}$ क्रोधे( M$_3$ °डे )न काश्चिदाक्रम्य —$^b$) K$_3$ वशास् ( for वत्सास् ) —$^c$) G$_5$ विदु खाः ( for विमुखा ) K$_1$ T$_3$ श्रान्तसक्थिश्, K$_2$ V D$_1$ शा( V$_3$ D$_1$ श्रा )न्तशक्त्यश्, D$_4$ शान्तसंध्यश्, T$_3$ श्रान्तवक्त्राश् ( for °सक्थ्यश् ) T$_4$ श्रान्तवक्त्राश्च नीहारा —$^d$) K$_4$ निराहार-, T$_4$ स्तम्भिताश्च ( for निराहाराः ) Ś$_1$ M$_{1-3}$ कृशा परा·, D$_6$ T$_{1\ 2}$ G M$_4$ कृशास्तथा ( for कृशोदरा· )

24 $^a$) D$_1$ सर्वा ( for आर्ता ) —$^c$) M$_{1-3}$ [ए]वोन्मुखा ( for [उ]न्मुखका ) Ś$_1$ तत्र ( for बाला ) V$_1$ B$_3$ वत्साश्चोन्मुख्यकाका( V$_1$ om का )रा, D$_6$ T$_{1\ 2}$ G M$_4$ सवत्साश्चोन्मुखा गावो ( D$_6$ बाला ) —$^d$) K$_1$ -मुखे, K$_3$ -पर ( for -मुखा· ) D$_6$ T$_{1\ 2}$ G M दामोदरमुपस्थिता —$^e$) S$_1$ पाहि पाहीति वचनं, D$_6$ त्राहीति देवं वदनै, T$_2$ G$_{1\ 3\ 4}$ M °ति दीनैर्वद( G$_4$ °च )नै.; G$_2$ °ति देहैर्वदनै. —$^f$) K Ñ$_{2\ 3}$ V B$_{1\ 2}$ Dn D$_5$ D$_{1-5}$ T$_{1\ 4}$ G$_5$ इवार्दिता, Ñ$_1$ T$_3$ जला( T$_3$ अथा )र्दिताः, B$_3$ इवार्जिता; D$_6$ T$_2$ G$_{1-4}$ इवार्तका ( G$_3$ °तुराः ) ( for °र्तवत् ) —After 24, T$_3$ ins.

710* गवां पश्य महाबाहो वेदनां परमातुराः
—After the above, T$_3$ repeats 23$^{ab}$.

25 T$_3$ om 25$^{ab}$ —$^a$) K$_{3\ 4}$ Dn D$_1$ तु ( for तत् ). G$_4$ क्रन्दनं ( for कदनं ) —$^b$) Ś$_1$ K Ñ$_{2-3}$ V B Dn D$_{1-5}$ महत् ( for भयम् ) T$_2$ G$_1$ दृष्ट्वा दुर्दिन( G$_1$ °र्जन )जं भयम्. —$^c$) T$_{1,\ 2}$ G$_{1\ 3}$ M$_4$ सन्न- ( for [आ]सन्न- ) K$_{1\ 2\ 4}$ Ñ V B Dn D$_5$ D$_{1-5}$ T$_4$ G$_5$ M$_4$ निधनान् ( for -वद° ). Ś$_1$ K$_3$ D$_6$ गोपा( K$_3$ °पा )श्च सन्नवदना ( D$_6$ °नान् ) —After 25$^c$, T$_3$ ins

711* गाश्चापि परमातुरा ।
रोषताम्रेक्षण श्रीमान्

—$^d$) D$_6$ समाददे ( for °धे ) —After 25, D$_6$ T$_{1\ 3\ 4}$ G$_{1-3}$ M$_4$ ins

712* अहो धार्ष्ट्यं सुरपतेर्मामनादृत्य संप्रति ।
गवा वध कृतस्तस्य गोपानां च तथा कृत ॥

26 $^a$) K$_4$ Ñ$_3$ V$_2$ M$_4$ सं- ( for स ) V$_3$ संहृष्टो; D$_6$ T$_{1\ 2}$ G$_{1\ 2\ 4}$ सक्रुद्धो ( for संरब्धो ) —$^b$) K$_3$ Dn T$_1$ G$_5$ मयेति च ( for गवामिति ). K$_{1\ 2\ 4}$ Ñ V B D$_5$ D$_{1-5}$ T$_{2-4}$ G$_{1-4}$ M$_4$ दृष्टोपायो मये( T$_3$ °मे )ति च, D$_6$ दृष्ट्वा प्रायो ममेति च —$^d$) K Ñ$_{2\ 3}$ V B Dn D$_5$ D$_{1\ 3\ 4}$ T$_4$ G$_5$ ऊचे ( for आह ) D$_6$ T$_{2\ 4}$ G$_{1\ 4}$ M$_4$ प्रियं वच. ( for प्रियंवदः ) T$_3$ इदमूचे जनार्दन

27 $^a$) Ś$_1$ K$_4$ Ñ V$_3$ B$_{1\ 3}$ D$_5$ D$_{1\ 4}$ अथ, T$_1$ G$_{2-4}$ M$_4$ यथा, T$_2$ यदि ( for अद्य ) K$_{1\ 2}$ V$_2$ एनम् ( for इमम् ). D$_3$ यथाहमेनमुद्यम्य —$^b$) Ñ$_1$ D$_4$ -गिरि वनम् ( for -वनं गिरिम् ). D$_1$ सकाननमिमं गिरिम् —D$_6$ om 27$^{cd}$ —$^c$) Ś$_1$ कर्षयेय, V$_2$ कार°, M$_3$ कल्ल° ( for कल्प° ) —$^d$) Ś$_1$ गवां ( for वर्ष- )

28 $^a$) D$_1$ अयं वृत्तो, M$_4$ अयत्नतो ( for अयं धृतो ) D$_6$ T$_{1\ 2}$ G$_{1\ 3}$ M$_{1-3}$ महा ( for मया ) D$_3$ अयं ध्रुवो महाशैल. —$^b$) K Dn D$_{1\ 2}$ T$_4$ G$_5$ पृथ्वी-, D$_6$ G$_2$ व्रजे ( for भूमी- ) Ś$_1$ -निभो महान् ( for -निभोपम ) Ñ V B D$_5$ D$_{3-5}$ T$_3$ पृथ्वीगृहमिवापरम्, T$_{1\ 2}$ G$_{1,\ 3\ 4}$ M$_4$ व्रजे गृहनिभो मया· —$^c$) D$_6$ T$_2$ G$_{2\ 4}$ M$_4$ त्रायन्ते ( for त्रास्यन्ते ) M$_{1-3}$ जलदाद् ( for सव्रजा ) K$_3$ Ñ$_{1\ 2}$ B$_2$ Dn D$_{51}$ D$_{4\ 5}$ T$_3$ G$_{1\ 5}$ गा वै ( for गावो ) K$_{1\ 2}$ V$_2$ B$_{1\ 3}$ D$_{52}$ D$_1$ त्रास्यते सप्रजा गा ( K$_1$ °व्रजो गा; K$_1$ [ marg. ]. $_2$ °भयाद्गा, V$_2$ °कलाद्गा ) वै·

बाह्वोर्बलं दर्शयिष्यन्समीपं तं महीधरम् ।
दोर्भ्यामुत्पाटयामास कृष्णो गिरिरिवापरः ॥ २९
स धृतः संगतो मेघैर्गिरिः सव्येन पाणिना ।
गृहभावं गतस्तत्र गृहाकारेण वर्चसा ॥ ३०
भूमेरुत्पाट्यमानस्य तस्य शैलस्य सानुषु ।
शिलाः प्रशिथिलाश्चेलुर्निष्पेतुश्च सपादपाः ॥ ३१
शिखरैर्घूर्णमानैश्च सीदमानैश्च सर्वतः ।
विधूतैश्चोच्छ्रितैः शृङ्गैरगमः खगमोऽभवत् ॥ ३२
चलत्प्रस्रवणैः पार्श्वैर्मेघौघैरेकतां गतैः ।
भिद्यमानाश्मनिचयश्चचाल धरणीधरः ॥ ३३
न मेघानां प्रवृष्टानां न शैलस्याश्मवर्षिणः ।
विविदुस्ते जना रूपं वायोस्तस्य च गर्जतः ॥ ३४ C 3928 B 2. 18. 35 P 2. 18. 35

— d) Ś1 D3 मद्वशश्, D6 मद्वाक्यं (for मद्वश्यश्) V2 गोपाश्चैव **शय

29 a) K3. 4 V1. 3 B1 D1. 4. 6 T2. 4 G1. 3. 4 M स (for स) D3 च (for तु) — b) All Mss (except Ś1 G1. 2 M1–3) कृष्ण (for विष्णु·) — After 29ab, K4 ins

713* इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम् ।
दधार लीलया कृष्णश्छत्राकमिव बालक ॥
[ = Bhāgavata P, 10 25 19 ]

— c) V1. 3 D6 बाहोर् (for बाह्वोर्) Ñ1 दर्शयिष्येऽह (hypermetric), D2 दर्शयन्स (for °यिष्यन्) — d) Ś1 K1. 3 Dn D1 समूलं त, K4 समीपस्थं, Ñ2 V B Ds1 D2. 4. 6 T G M4 °पे त, M1–3 समैक्षत (for समीपं तं) Ñ1 गोपानां हर्षवर्धन, D3 समीपे त महागिरिम् — f) Ś1 K3 Dn [अ]चलः (for [अ]परः) — After 29, D6 S ins

714* समूलविटपस्कन्धश्चचाल स महागिरि· ।
घणाघणकृत· शैल सप्राण इव नि श्वसन् ॥

[ (L 1) D6 -विद्रुम- (for -विटप-) D6 T4 G2. 4. 5 M4 च (for स) D6 महागिरिम्, M4 महीधर (for महागिरि) — (L 2) D6 खणापर्णकृत. शैल, T3. 4 घणावाणि( T4 °णा )कृत शैल, M1–3 खणाखणीकृत शैल (for a) ]

30 a) G4 संहतो (for संगतो) D6 T1 G1–3. 5 M स धृत सह तोयौघैर् — b) V2 दिवि (for गिरि·). — c) D6 G2 -भागगतस् (for -भावं गतस्) M4 तात (for तत्र) Ś1 गृहैकत्वं गतः सर्वो — d) D2 गृह्याकारेण, D3. 6 T4 G1–3 गुहा° (for गृहा°) B2. 3 वर्ष्मणा (for वर्चसा)

31 a) Ś1 भूमाव् (for भूमेर्) — b) Ś1 D6 T1. 2 G1. 2. 4. 5 सानुजा, M4 °गा (for °षु). K4 शैलस्य स्वेषु सानुषु, D3 शैलस्यास्य च सा°. — M3 reads 31cd and M1. 2 repeat it after 715* — c) D3 च शिथिलाश्, T1 प्रमुदिताश्, T2 G1. 4. 5 M1 (both times) 2 (first time) प्रमथिताश् (for प्रशिथिलाश्) Ś1 Ñ1 पेतुर्, K1 B3 चेरुर् (for चेलुर्) G2 M4 शि( M4 शै )ला· प्रमथिताश्चैव — d) Ś1 M1. 2 निपे- (last two both times )तुश्चैव पादपा, K1 D2. 3 विनिष्पे तुश्च पा°; K4 निष्पेतुस्तत्र पा°, V1 निपेतुश्चलपा°, M4 निपेतुश्च सदा वराः — After 31, D6 S ins.

715* रक्षिष्यन्गोधन विष्णुर्गोपानां गोपतिर्हरि. ।
गोमध्यस्थितगोविन्दो गोपान्रक्षन्स्वगोकुलान् ॥
दधार गोधन विष्णुर्गोधर च विलम्बयन् ।
गोपान्विस्मापयन्गोपो गोमार्गे सुस्थितो हरिः ।
आद्य वपुश्च गृह्णानो लोकानामीश्वरेश्वर. ॥ [5]
व्यर्थ चकार गोविन्दो गोधरस्य समीहितम् ।
गोवर्धनस्यास्य गिरे खे खणायितविग्रह. ॥

[ (L 1) M4 निरीक्षन (for रक्षिष्यन्) T1 M4 गोधनो; G2 M3 गोजन, M1. 2 गोधर (for गोपाना) — (L 2) M1. 2 -मध्यस्थ स (for °स्थित) — (L 3) D6 दधार विष्णुर्गोवर्धं (for a) D6 गोकुल (for गोधर) G4 विडम्बयन् (for विल°). — (L 4) D6 गिरि (for हरि) — (L 5) M1–3 लोकानामीश्वर स्थित (for b) — (L 6) T4 यत्न (for व्यर्थ) — (L 7) T1 खगत्वगितविग्रह, T2 G1 खे वनायित°, G4 खे गणाधिप°; M3 खगणायित°, M4 क्षणखण्डित° (for b) ]

— After the above, M1. 2 repeat 31cd and M3 reads 31cd

32 a) Ñ2 शिथिलैर् (for शिखरैर्) Ś1 घूर्ण्यमानैश्; D1. 4 चूर्ण°; M4 सीद° (for घूर्ण°) — b) M4 घूर्णमानैश् (for सीद°) Ś1 T2 G1. 4 सर्वशः, K3 Ñ2. 3 (marg) V Dn2 D1. 5 T4 पादपै (for सर्वत) K1. 2 D2. 3 शतशाखैश्च (D3 °शश्चैव) पादपै ; K4 Ñ3 B Dn1 Ds D4 T3 शीर्यमाणैश्च पादपै (B Ds सर्वश ) — c) K2 Ñ3 V1 B2. 3 Ds2 विवृतैश्, Ñ2 Dn T3. 4 विधू°, D2 निविष्टैश्, D6 T1. 2 G1–4 M विकृतैश्, G5 विक्ष° (for विधू°) K3. 4 D1. 5 [उ]त्कृतैश्, D2 T3. 4 G3 M2 [उ]च्छ्रित (for °तैः) D3 विधूतैश्चाद्भुतै शृङ्गैर् — d) K4 अगम्य (for °म·) Ñ1 खमयो (for खगमो).

33 a) K1 D1 बलप्र-, K4 जलप्र-, D2 M4 चलप्र-, D4 चरत्प्र (for चलत्प्र-) Dn D6 पार्श्वे (for पार्श्वैर्) — b) G4 रेणुतां (for एकतां). D4. 5 गत (for गतै) — Ds1 om. 33cd — c) D6 T1. 2 G M भिद्यमानो( G3. 4 °ना )शनिश- (T2 M4 °शि )तैश् — d) चचार (for °ल). K2 स मही- (for धरणी-) — After 33, Ś1 repeats 15ab

34 a) D3 मेघानां वि- (for न मेघानां). K3. 4 Ñ1 प्रवि-

मेघैः शिखरसंधानैर्जलप्रस्रवणान्वितैः ।
मिश्रीकृत इवाभाति गिरिरुद्दामबर्हिणः ॥ ३५
आप्लुतोऽयं गिरिः पक्षैरिति विद्याधरोरगाः ।
गन्धर्वऋषयश्चैव वाचो मुञ्चन्ति सुस्वराः ॥ ३६
स कृष्णतलविन्यस्तो मुक्तमूलः क्षितेस्तलात् ।
रीतीर्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥ ३७
कानिचिच्छादितानीव संकीर्णार्धानि कानिचित् ।
गिरेर्मेघं प्रविष्टानि तस्य शृङ्गाणि चाभवन् ॥ ३८
गिरिणा कम्प्यमानेन कम्पितानां तु शाखिनाम् ।
पुष्पमुच्चावचं भूमौ व्यशीर्यत समन्ततः ॥ ३९
निःसृताः पृथुमूर्धानः स्वस्तिकार्धविभूषिताः ।
द्विजिह्वपतयः क्रुद्धाः खेचराः खे समन्ततः ॥ ४०
आर्तिं जग्मुः खगगणा वर्षेण च भयेन च ।
उत्पत्योत्पत्य गगनात्पुनः पेतुरवाङ्मुखाः ॥ ४१
रेजुश्चारोषिताः सिंहाः सजला इव तोयदाः ।
गर्गरा इव मथ्यन्तो नेदुः शार्दूलपुंगवाः ॥ ४२

ष्टाना, Dn प्रवृद्धानां, D1 प्रवृत्तानां, D4 G2 प्रहृष्टाना, T1 प्रसृ॰; M3 विवृ॰ (for प्रवृ॰) — b) K2 4 T3 4 [आ]त्म-, D2 च (for [अ]श्म-) Ñ1 स शैलस्याश्मवर्षिणाम् (sic), D6 T1 2 G M4 शैलाना चाश्मवर्षिणाम् — After 34[ab], M1–3 ins

716* वायोश्च घूर्णमानस्य विद्युतां भ्रमतामपि ।
विष्णुतेजोभिभूतानामदृश्यन्त वपूषि च ॥
[ (L 1) M3 [आ]पूर्ण- (for घूर्ण-) ]

— c) Ñ1 2 V2 B1 3 Dn Ds T3 न विदुस्, M1–3 विदुस्तत् (for विविदुस्) D6 T1 G2–5 M4 विदुस्तत्तेजसा रूपं — d) Ñ1 तेषां (for वायोस्) K4 Ñ3 V गर्जितैः, D6 T1–3 G M4 गर्जितम्, M1–3 गर्जनम् (for ॰त)

35 a) K1 2 4 N V B Dn Ds D1–5 मेघैः सशै(Ñ3 V1 B2 3 Dn Ds D2 3 च शै)लसस्थानैर्, T3 4 मेघोघैः शै(T4 ॰घैः सशै)लसंछन्नैर् — b) B2 Dn D5 T1 नीलै, M1–2 गिरि- (for जल-) Ś1 जलप्रस्रवणार्दितै, K1 3 4 Ñ V2 3 B1 3 Ds D1 4 6 T3 4 G ॰र्पितैः — c) K4 छन्नीकृत (for मिश्री॰) — d) K1 (marg as in text) 3 B2 Dn D1 5 बर्हिवान्, K4 T3 -बर्ह-ईवान्, Ñ2 V B1 3 D4 T4 -बर्हिमान्, D3 -बर्हिभि, T1 G3 4 M4 -वर्षिभि, T2 G1 -वर्षिण (for -बर्हिण)

36 a) K2 अप्लवो (for आप्लुतो) D6 T1 2 G वर्षैर्, M4 वाक्यैर् (for पक्षैर्) — c) M1 2 मुनयश् (for -ऋष॰) N (except Ś1 D6) गन्धर्वाप्सरसश्चैव — d) K1 B Ds2 D1 4 ऽमुञ्चन्त (for मुञ्चन्ति) K Ñ V B Dn Ds D1 3–5 T3 सर्वश, T2 सुस्वरम्, T4 सर्वतः, G1 3 सस्वरम् (G3 ॰रा) (for सुस्वरा)

37 a) K Ñ2 3 V1 3 B Dn D2–4 T3 हस्ततल-, Ñ1 Ds बाहुबल-, V2 कृष्णकर- (for कृष्णतल-) Ś1 -सन्यस्तो (for -वि॰) — b) M3 -मूलं (for -मूल) Ś1 तल, D3 बलात्, G2 M4 स्थलात् (for तलात्) — c) Ś1 रीतिं, K4 D3 भित्तीर्; V2 वीथीर्, D6 गिरिर्; G4 इति (for रीतीर्). — d) Ś1 -राजतीम्; K2 ॰सा, K3 ॰नी (for ॰तीः)

38 a) K1 2. 4 Ñ V B Dn Ds D1–5 T1 3 4 शिथिलानि, K3 M1 3 शोधितानि, D6 छालि॰, T2 G1–3 5 छेदि॰, M4 लोलि॰ (for छादि॰) — b) K1 2 4 Ñ V B Dn Ds D1–5 T3. 4 संछिन्नार्धानि कानिचित्, K3 छिन्नार्धानीव का॰ — c) K4 Ñ2 3 V1 B1 3 Dn2 D1 3 4 T3 G4 गिरेर्मेघ-; Dn1 गिरिमध्ये (for गिरेर्मेघं) K1–3 Ñ1 V2 3 B2 Ds D2. 5 T1 2 4 G1–3 5 M गिरेर्मेघप्रवृष्टानि — d) Ś1 शृङ्गाणि विबभुस्तदा

39 a) Ś1 गिरिणा कम्प्यमानानि, K2–4 Ñ V B D (except D6) T3 4 G2 ॰णा कम्पमानेन — b) B Ds2 D2 T3 G4 च, D3 सु- (for तु) — c) D6 T2 G1–3 M4 पुष्पाणि (for पुष्पम्) K2 भूयो (for भूमौ) — d) D1 T2 G2 4 व्यशीर्यन्त; M4 व्यकीर्यन्त (for व्यशीर्यत) Ś1 शीर्यतानिलजीवितम् (sic).

40 a) K2 D6 निःस्वनाः, G2 निर्वाता (for निःसृताः) D3 पञ्च- (for पृथु-) — b) K3 स्वस्तिकाङ्क-, D2 ॰कार्धैर् (for ॰कार्ध-) D6 T2 G2–5 M4 -विभूषणाः (for ॰षिता) — c) Ś1 बद्धाः (for क्रुद्धाः) — d) Ñ2 V1 D6 T1 G2–5 M1–3 खचराः (for खे॰) Ñ2 V3 D3 ते, G2 खं (for खे) Ś1 Ds1 (by corr) ससृजुः क्रोधजं विषम्

41 c) T2 उत्प्लुत्योत्प्लुत्य गगनात्

42 a) K3 B2. 3 Ds D4 5 T3 4 G2 रेसुश्च; K4 Ñ3 V1 D1 G3 M4 नेदुश्च, Ñ1 गुहासु, Ñ2 B1 रेमुश्च; V2 3 वेमुश्च; Dn चेलुश्च, D6 चेरुश्च, T1 सेदुश्च (for रेजुश्च) K2–4 Ñ1 3 V3 Dn D1. 3. 6 T1 3 4 G2 3 M1 2 4 रोषिताः (for [आ]रो॰) Ś1 रुषिता रुरुदुः सिंहाः, T2 G1 4 5 नेदुश्च रोहिताः सिंहाः, M3 रेसुश्च शोषिताः सिंहाः. — b) G1 सु- (for स-) — c) V3 गह्वरा; T2 G1. 3 घर्घरा (for गर्गरा). Ñ1 G3 मथ्यन्ते, T1 मध्यस्था; M4 नर्तन्तो (for मथ्यन्तो) K4 निर्भरा इव नश्यन्ते — d) D3 -विक्रमाः (for -पुंगवाः)

43 a) K4 समुद्भूतैः, Ñ1 महीभूतैः, T2 G3 समैर्भूतैः (for समीभूतै) — b) B3 [अ]त्यति- (for ॰न्त-) Ś1 समैश्चात्यन्त-

विषमैश्च समीभूतैः समैश्चात्यन्तदुर्गमैः ।
व्यावृत्तदेहः स गिरी रम्य एवोपलक्ष्यते ॥ ४३
अभिवृष्टस्य तैर्मेघैस्तस्य रूपं बभूव ह ।
स्तम्भितस्येव रुद्रेण त्रिपुरस्य विहायसि ॥ ४४
बाहुदण्डेन कृष्णस्य विधृतं सुमहत्तदा ।
नीलाभ्रपटलच्छन्नं तद्गिरिच्छत्रमाबभौ ॥ ४५
स्वप्नायमानो जलदैर्निमीलितगुहामुखः ।
बाहूपधाने कृष्णस्य प्रसुप्त इव खे गिरिः ॥ ४६
निर्विहंगरुतैर्वृक्षैर्निर्मयूररुतैर्वनैः ।
निरालम्ब इवाभाति गिरिः स शिखरैर्वृतः ॥ ४७
पर्यस्तैर्घूर्णमानैश्च प्रचलद्भिश्च सानुभिः ।
मज्जगणीव शैलस्य वनानि शिखराणि च ॥ ४८
उत्तमाङ्गगतास्तस्य मेघाः पवनवाहनाः ।
त्वर्यमाणा महेन्द्रेण तोयं मुमुचुरक्षयम् ॥ ४९
स लम्बमानः कृष्णस्य भुजाग्रे सघनो गिरिः ।
चक्रारूढ इवाभाति देशो नृपतिपीडितः ॥ ५०
स मेघनिचयस्तस्थौ गिरिं तं परिवार्य ह ।
पुरं पुरस्कृत्य यथा स्फीतो जनपदो महान् ॥ ५१
निवेश्य तं करे शैलं तुलयित्वा च सस्मितम् ।
प्रोवाच गोपान् गोपानां प्रजापतिरिव स्थितः ॥ ५२
एतद्देवैरसंभाव्यं दिव्येन विधिना मया ।
कृतं गिरिगृहं गोपा निवातशरणं गवाम् ॥ ५३

C 3947
B 2. 18 54
P 2. 18. 54

---

मुत्तमै —$^{c}$) $D_{3}$ व्यावृत्तदेहशृङ्गैस्तैर् —$^{d}$) K Ñ $V_{2}$ B Dn Ds $D_{1\;3-5}$ $T_{1\;3\;4}$ $G_{1}$ अन्य (for रम्य) $T_{1}$ $M_{4}$ लभ्यते (for लक्ष्यते)

44 $^{a}$) $K_{4}$ -वृष्ट्यास्य, $T_{1}$ मृष्ट स (for वृष्टस्य) —$^{b}$) $K_{3\;4}$ $D_{1}$ तथा (for तस्य) $Ñ_{1}$ तु (for ह) —$^{c}$) $V_{3}$ रोषेण, $T_{3}$ वज्रेण (for रुद्रेण)

45 $^{a}$) $Ś_{1}$ दण्डं तु (for -दण्डेन) —$^{b}$) $Ñ_{1}$ सुमहांस् (for °हत्) $S_{1}$ सर्वाश्चर्यमयं शुभम्, $D_{6}$ व्यायतं गिरिपञ्जरम्; $T_{1\;2}$ G $M_{4}$ व्यायताङ्गुलिपञ्जर($G_{4}$ °ञ्चक)म् —$^{c}$) $M_{4}$ नीलाभ्रपटसंछन्न —$^{d}$) $Ñ_{1}$ गिरिच्छत्रमिवाबभौ

46 $^{a}$) $T_{4}$ शय्यायमानो जलदैर् —$^{b}$) $B_{3}$ -गुहाम्बरः; $Ds_{1}$ °मुखम्, $D_{3}$ महासुख (for -गुहामुख.) —$^{c}$) $K_{1\;2}$ $G_{1}$ बाहूपधानं कृष्णस्य, $D_{2\;6}$ $T_{2}$ $G_{2\;3}$ M °पधान कृ($D_{2}$ °नात्कृ)ष्णस्य —$^{d}$) $V_{2}$ संसुप्त (for प्र°)

47 $^{a}$) $T_{1}$ निर्विहंगै (for °हग-) —$^{b}$) $Ñ_{3}$ वनम्; $V_{1}$ घनम्, $Dn_{2}$ $D_{1\;4}$ घनै; $M_{4}$ खगै. (for वनै) —$^{d}$) $Ñ_{2\;3}$ $D_{4\;5}$ $T_{1}$ $G_{1\;3\;5}$ स्व-, $M_{4}$ च (for स) $V_{2}$ $B_{1}$ ख($B_{1}$ खे)-चरैर् (for शिखरैर्) $Ś_{1}$ वरै, $D_{6}$ $T_{2}$ G $M_{3\;4}$ स्वकै, $M_{1\;2}$ घनै (for वृत) $Ñ_{1}$ $B_{2\;3}$ Ds स गिरि खेचरैर्वृत.

48 $^{a}$) $S_{1}$ पूर्णैस्तैर् (for पर्य°) $D_{4}$ पूर्यमाणैश् (for घूर्णमानैश्) —$^{b}$) $S_{1}$ प्रलम्बद्भिश्, $D_{6}$ $T_{2}$ $G_{1\;4}$ प्रस्फुर°, $G_{3\;5}$ $M_{4}$ प्रस्खल° (for प्रचल°) $K_{1\;2}$ साधुभि (for सानुभि). $G_{2}$ प्रस्फुरद्भिश्च बाहुभि —$^{c}$) $G_{1}$ च (for [इ]व)

49 $^{a}$) $K_{2}$ -युतास् (for गतास्) —$^{c}$) $Ś_{1}$ चोद्यमाना; $D_{2\;3}$ $T_{2}$ $G_{1\;4\;5}$ $M_{4}$ प्रेर्यमाणा, $D_{6}$ $G_{2}$ वार्य° (for त्वर्य°) —$^{d}$) $D_{3}$ अञ्जसा (for अक्षयम्)

50 $^{a}$) $Ñ_{1}$ लम्बमानस्तु कृष्णस्य —$^{b}$) $K_{3}$ $D_{4}$ संहतो, $T_{2}$ $G_{1}$ दधतो, $G_{4}$ सहितो, $M_{4}$ स महा (for सघनो). $D_{2}$ भुजाग्रशयने गिरि —$^{c}$) $D_{5}$ $T_{1\;2}$ $G_{1\;3\;5}$ $M_{4}$ दुर्गारूढ; $T_{3}$ चक्ररूप (for चक्रारूढ) —$^{d}$) $V_{1}$ -पालित., $G_{4}$ -पीडनात् (for -पीडित).

51 $^{b}$) $V_{1}$ तु (for तं) $V_{2}$ प्रविगाह्य (for परिवार्य). $T_{4}$ $G_{5}$ $M_{4}$ च (for ह) $T_{2}$ गिरि तु परिपाल्य च. —$^{c}$) $M_{4}$ पुर (for पुरं) —$^{d}$) $K_{1\;2}$ $D_{2}$ स्फीतं, $D_{6}$ $T_{2}$ $G_{1\;2\;4\;5}$ भीतो, $T_{1}$ स्थितो (for स्फीतो) — After 51, $Ñ_{1}$ reads $54^{ab}$, repeating it in its proper place.

52 $^{a}$) $D_{6}$ $T_{1\;2}$ $G_{1\;2\;4}$ तत् (for तं) —$^{b}$) $K_{3}$ $D_{4\;5}$ $T_{4}$ तोलयित्वा, $T_{3}$ धार° (for तुल°) $M_{1\;3}$ तु (for च) $Ś_{1}$ Ds तोलयित्वा च संमितम्, $K_{1\;2}$ Dn $D_{2\;3\;6}$ $T_{2}$ G $M_{2}$ तोलयित्वा तु सस्मि($K_{1}$ Dn स्मि-, $K_{2}$ $D_{3}$ संम)तम्; $T_{1}$ $M_{4}$ तोलयित्वा स ($M_{4}$ तु) विस्मितः —$^{c}$) $M_{1-3}$ लोकानां (for गोपानां) —$^{d}$) $Ś_{1}$ प्रभुः, $V_{1}$ $D_{3}$ [आ]स्थित; $T_{2}$ स्थितम्, $G_{3}$ [अ]पर (for स्थित)

53 $^{a}$) $D_{3}$ असंसाध्यं (for °भाव्यं) $G_{4}$ एतद्देवेशसंभाव्यं —$^{d}$) $Ñ_{3}$ $B_{1}$ Dn $Ds_{2}$ $D_{3\;5}$ निर्वातं; V $D_{6}$ $G_{5}$ निवार्तं; $B_{2}$ निवास-; $Ds_{1}$ $T_{1}$ विवात- (for नि°) $Ñ_{1}$ निवातकवचं भवान — After 53, $K_{4}$ ins

717* न त्रास इह व कार्यो मद्धस्ताद्रि निपातने ।
वातवर्षभयेनालं तत्त्राणं विहितं हि वः ॥
[ = Bhāgavata P., 10. 25. 21).]

54 $Ñ_{1}$ reads $54^{ab}$ for the first time after 51. —$^{a}$) $K_{4}$ क्षितिं (for क्षिप्रं). —$^{b}$) $K_{4}$ हि हिम-; $Ñ_{2}$ $V_{3}$ एव हि; $D_{6}$ $T_{1\;2}$ $G_{1-3,\;5}$ $M_{3}$ इह वि-, $G_{4}$ इव वि- (for इह हि). —$^{c}$) $T_{3}$ विवातेषु, some Mss. निर्वातेषु (for निवा°).

क्षिप्रं विशन्तु यूथानि गवामिह हि शान्तये ।
निवातेषु च देशेषु निवसन्तु यथासुखम् ।
यथाव्रजं यथायूथं यथासारं च वै सुखम् ॥ ५४
विभज्यतामयं देशः कृतो वर्षनिवारणः ।
शैलोत्पाटनभूरेषा महती निर्मिता मया ।
त्रैलोक्यमप्युत्सहते ग्रसितुं किं पुनर्व्रजम् ॥ ५५
ततः किलकिलाशब्दो गवां हम्भारवाश्रितः ।
गोपानां तुमुलो जज्ञे मेघनादश्च बाह्यतः ॥ ५६
प्रविशन्ति ततो गावो गोपैर्यूथप्रकल्पिताः ।
तस्य शैलस्य विपुलं प्रदरं गह्वरोदरम् ॥ ५७

कृष्णोऽपि मूले शैलस्य शैलस्तम्भ इवोच्छ्रितः ।
दधारैकेन हस्तेन शैलं प्रियमिवातिथिम् ॥ ५८
ततो व्रजस्य भाण्डानि युक्तानि शकटानि च ।
विविशुर्वर्षभीतानि तद्गृहं गिरिनिर्मितम् ॥ ५९
अतिदैवं तु कृष्णस्य दृष्ट्वा तत्कर्म वज्रभृत् ।
मिथ्याप्रतिज्ञो जलदान्वारयामास वै विभुः ॥ ६०
सप्तरात्रे तु निर्वृत्ते धरण्यां विगतोत्सवे ।
जगाम संवृतो मेघैर्वृत्रहा स्वर्गमुत्तमम् ॥ ६१
निवृत्ते सप्तरात्रे तु तिष्ये स्कन्ने शतक्रतौ ।
गताभ्रे विमले व्योम्नि दिवसे दीप्तभास्करे ॥ ६२

— d) V3 G3 निविशन्तु (for निवसन्तु) — V3 reads $54^{ef}$ on marg — e) K1 3 Ñ V B Dn Ds D1–5 यथाश्रेष्ठं, K4 °स्वेच्छ (for °व्रजं) K2 यथाश्रेष्ठं यथारूप — f) K Ñ2 3 V B Dn Ds D1–5 T4 यथा, Ñ1 च तै (for च वै) T3 यथास्थानं यथासुखम्

55 a) Ś1 अयं घोष., Ñ1 यथोद्देशं (for अयं देश) — b) G4 M4 -निवारणम् (for °रण.) K Ñ V B D (except D6) T1 4 G3 कृतं वर्षनिवारणम्, T3 कृतं वर्षेण वारणम् — After $55^{cd}$, Ds D5 Bom Poona eds ins

718* यूथशश्च विभज्याथ वसध्वं गोपसत्तमाः ।
पञ्चक्रोशप्रमाणेन क्रौशैक विस्तरो महान् ॥

[ Bom Poona eds om line 1 — (L 2) Bom Poona eds क्रौशैक- (for °कं) ]

— e) M3 [उ]त्सहेत (for °हते) — f) K Ñ V B D (except D6) T1 3 4 G3 रक्षितु (for ग्रसितुं)

56 a) D1 T1 G2–5 M1 3 4 किलिकिला-, D3 किलकला- (for °किला-) — b) T1 2 G1 2 M हुम्भा- (for हम्भा-) Ś1 D6 G3 5 गवां हुम्फा(Ś1 हम्बा, G3 हुम्बा)रमिश्रित., K Ñ V B Dn Ds D1–5 T3 4 गवां ह(K1 भ)म्भारवै सह, G4 गवां हुम्फारव श्रुत. — d) M3 -नादं (for -नादश्च) T3 वैद्युत (for बाह्यतः)

57 a) K Ñ V1 3 B2 D1 2 4 5 T1 4 M4 प्राविशन्त (for प्रविशन्ति) D6 T2 G M1–3 प्राविशन्त यथा (M1–3 तदा) गावो — b) D1 यूथे, D3 वत्स- (for यूथ-) Ś1 -प्रकल्पितैः; T4 -प्रकीर्तिता (for -प्रकल्पिता) B1 गोपैर्यूथोपकल्पिता — c) Ñ1 शिखरं, T3 4 विवरं (for विपुलं) — d) Ś1 उदरं, K2 प्रचरं, K4 कन्दरं; Ñ1 T3 4 विपुल; Ñ2 उदारं, Ñ3 V1 Dn Ds D4 5 विवरं, V3 B विमल, D1–3 प्रवर (for प्रदरं) V2 रुचिरं गर्गरोदरम्, G2 प्रदरं गहनो°.

58 a) Ñ1 हि (for ऽपि) Ś1 D6 T2 G2 3 5 M4 मूलं (for मूले) G(ed) ऽस्य गिरे (for शैलस्य) K1 D2 3 कृष्णोऽपि शैलमूलस्य — b) D3 नील-, M4 मूल- (for शैल-) Ñ1 [उ]च्छ्रितम्, T2 स्थित (for [उ]च्छ्रित)

59 b) B1 मुक्तानि (for यु°) — c) D6 G2 -भूतानि T2 G1 3–5 M4 -रुग्णानि (for -भीतानि) — d) G5 तं (for तद्) Ś1 T4 गृहं गृह-, Ñ1 गिरिं गृह- (for गृहं गिरि-)

60 a) D3 आतिदेवं, G2 एवमेतत्, G5 आतिदैवं (for अ°) V2 तत्कार्यं, B1 M1–3 तत्कर्म, T4 तत्सर्वं (for कृष्णस्य) — b) V2 B1 T3 4 M1–3 कृष्णस्य (for तत्कर्म) — c) D6 T1 2 G1–3 5 -प्रयत्नो (for -प्रतिज्ञो) D3 बलवान् (for जलदान्) — d) Ñ1 धारयामास (for वा°) Ś1 स प्रभु, V3 T3 4 वै प्रभु, D6 T1 2 G1 3–5 M वीर्यवान्, G2 देवराट् (for वै विभु)

61 T2 om (hapl) $61^{a}$–$64^{b}$ D6 G om 61 — a) K1 2 ऽतिनिर्वृत्ते, Ñ2 V3 D4 निवृत्ते तु, M1–3 त्रिनिर्वृत्ते (for तु नि°) Ś1 स सप्तरात्रे निर्वृत्ते — b) B3 M4 धरण्या विगतोत्सवै (M4 °व), T1 °ण्या विकलोत्सवै — c) K4 Ds1 D1 स (for स) — d) B Ds एव च (for उत्तमम्)

62 T2 om 62 (cf v l 61) Ñ1 om $62^{a}$ G1 reads $62^{a}$–$64^{a}$ on marg — a) K1 3 4 V1 T3 निर्वृत्ते (for निवृत्ते) — b) K Ñ3 V1 2 B1 Dn Ds D1–5 T1 M4 नि प्रयत्ने; D6 G2–5 निर्गते च (G4 तु), M1–3 वृष्टिस्कन्ने (for तिष्ये स्कन्ने) — c) K2 V3 गताभ्र- (for °भ्रे) D4 6 T1 G2 5 M निर्मले (for विमले)

63 T2 om 63 (cf v l 61) — b) D6 T3 4 G2 4 5 M प्रति- (for परि-) K3 Dn2 Ds यथागतम्, V3 कृतश्रमा. (for गत°) Ś1 Dn1 प्रतिजग्मुर्यथागतम् — c) K2 V2 3 B2 3 D2 3 G3 5 स्थानं गतो, Ñ1 2 स्थानगतो, T3 4 स्थानं

गावस्तेनैव मार्गेण परिजग्मुर्गतश्रमाः ।
स्वं च स्थानं ततो घोषः प्रत्ययात्पुनरेव सः ॥ ६३
कृष्णोऽपि तं गिरिश्रेष्ठं स्वस्थाने स्थावरात्मवान् ।
प्रीतो निवेशयामास ध्रुवाय वरदो विभुः ॥ ६४

इति श्रीहरिवंशे एकषष्टितमोऽध्यायः ॥ ६१ ॥

## ६२

वैशंपायन उवाच ।
धृतं गोवर्धनं दृष्ट्वा परित्रातं च गोकुलम् ।
कृष्णस्य दर्शनं शक्रो रोचयामास विस्मितः ॥ १
स निर्जलाम्बुदाकारं मत्तं मदजलोक्षितम् ।
आरुह्यैरावतं नागमाजगाम महीतलम् ॥ २
स ददर्शोपविष्टं वै गोवर्धनशिलातले ।
कृष्णमक्लिष्टकर्माणं पुरुहूतः पुरंदरः ॥ ३
तं दृश्य बालं महता तेजसा दीप्तमव्ययम् ।
गोपवेषधरं विष्णुं परिजज्ञे पुरंदरः ॥ ४
तालस्तम्भवनश्यामं स तं श्रीवत्सलक्षणम् ।
पर्याप्तनयनः शक्रः सर्वैर्नेत्रैरुदैक्षत ॥ ५
दृष्ट्वा चैनं श्रिया जुष्टं मर्त्यलोकेऽमरोपमम् । C 3965 B 2. 19. 6 P 2 19 6

---

पुनर् ( for स्थानं ततो ) D5 जग्मु , D6 घोष ( for घोष ) G4 स्वयं च स्थानतो घोष — d ) S1 हि , Ñ1 D4 ह ( for स ) D6 नन्दे व्रजनिवासिन

64 T2 om 64ab ( cf v l 61 ) — a ) D1 गिरिं ( for गिरि- ) — G1 om 64b — b ) S1 K4 Ñ2 3 V1 2 B2 3 Ds2 T3 स्वे ( for स्व- ) K3 D1 स्वे स्थाने स्थाप्य चात्मवान्, Ñ1 G3 स्वस्थाने स्थाप्य वीर्यवान्, D5 6 T1 G 4 5 °ने स्थाप्य चात्मन , M1 2 ( inf lin as in text ) °ने पूर्ववद्विभु — c ) M4 प्रीत्या ( for प्रीतो ) — d ) K3 Dn Ds G5 M1–3 शिवाय , D3 वासाय ( for ध्रुवाय )

COLOPHON — *Mention of the Epic* K3 Ñ2 Ds2 T3 — *Mention of Khila* S1 K3 Ñ2 3 V B Dn Ds D1 — *Sub-parvan* D4 पारिजात , T4 आश्चर्यपर्व — *Adhy name* Ś1 K2–4 Ñ1 3 D1 3 G3 गोवर्धनोद्धरणम् , K1 Ñ3 V B Dn Ds D2 4–6 T1 2 G1 2 M4 गोवर्धनधारणम् — *Adhy no* ( figures, words or both ) K3 D1 G2 4 71 · Ñ3 V1 T1 G3 5 M4 74 ; V2 B2 75 , V3 Dn Ds2 T2 G1 73 , D3 79 , D4 72 , T3 80 , T4 69 , M1–3 70 — *Śloka no* Dn 66 , Ds2 D3 4 67

### 62

1 a ) G3 चैव ( for दृष्ट्वा ) — d ) B1 सस्मित , D3 वृत्रहा ( for विस्मितः )

2 G2 om 2ab — a ) D6 स निर्जलाम्बुकारं च — b ) M3 मुक्तं ( for मत्तं ) D2 -जलोच्छ्रितम् ( for °क्षितम् ) — c ) Ś1 [ऐ]रावणं , Dn1 °वते ( for °वत ) K2 Ñ2 Ds नाम ( for नागम् ) — d ) K2 जगाम महतीतलम्

3 a ) Dn1 [अ]थ ( for [उ]प- ) T1 हि , M4 तद् ( for वै ) — B3 om 3c–5b — c ) K3 अकृष्ट- , D5 T2 G M वैकृत- ( for अक्लिष्ट- )

4 B1 om 4 ( cf v l 3 ) T1 om ( hapl ) 4 — a ) S1 D6 T2 G2 5 M4 संदृश्य , K Ñ V2 3 B1 2 Dn Ds D1. 3–5 T3 4 G1 3 4 तं वीक्ष्य ( for तं दृश्य ) V1 D2 तं वीक्ष्यमाण महता — b ) M3 तपसा ( for तेजसा ) D6 T2 G3–5 M4 युक्तम् ( for दीप्तम् ) — c ) S1 वेश- ( for -वेष- ) Ñ1 दृष्ट्वा ( for विष्णु ) — d ) K Ñ V B1 2 Dn Ds D1–5 T3 4 प्रीतिं लेभे , D6 T2 G M परिजह्रे ( for °जज्ञे )

5 B3 om 5ab ( cf. v l 3 ). — a ) Ñ1 ( marg ) -जल- , M1 2 -तल- , M3 -तल ( for -वन- ) K1 3 Ñ2 Ds1 D1 2 4 6 तं साम्बुजलदश्याम , K2. 4 Dn तं साम्बुदज( Dn1 °त )ल° , Ñ3 V B1. 2 Ds2 D3 5 तं साम्बु( B2 D3 सोऽम्बु )-जदलश्या( V1 3 °लं श्या )म , T1 2 G1–3 M4 तमम्बुजद( T2 G1 M4 °दज )ल° , T3. 4 जलदश्यामलं कृष्णं ; G4 तं नीलजलदश्यामं ; G5 तमम्बुजवल° — b ) K Ñ2 V2. 3 B1 2 Dn Ds D2 4 5 T1 G3 4 कृष्ण , D1 शुभ ( for स तं ). Ñ3 V1 कृष्णं राजीवलोचनम् , D3 कृष्णं श्रीवत्सभूषणम् , D6 T2–4 G1 2 5 M4 श्रीवत्सकृतलक्षणम् — c ) D3 T4 कृष्णं ; T2 G1 2. 5 M1–3 श्रीमान् ( for शक्र. ) D6 G3. 4 पर्याप्तनयनै. श्रीमान् ; T1 M4 °दर्शन. श्रीमान् , T3 सहस्रनयन. कृष्णं — d ) S1 सर्व- ( for सर्वैर् ) T2 G1 अक्षैर् ( for नेत्रैर् ). K1 D5 उदैक्षित° , K3 उदीक्ष्यते ( for उदैक्षत ) D3 सर्वनेत्रैरवैक्षत

6 a ) D6 T1 2 G M4 युक्तं ( for जुष्टं ). — b ) K2 मृत्यु- ( for मर्त्य- ) Dn1 नरोपमम् ; D2 नरोत्तमम् ( for ऽमरोपमम् ). G2 मर्त्यलोकेन्द्रमव्ययम् —After 6ab, D6 T1. 2 G M4 ins. :

सूपविष्टं शिलापृष्ठे शक्रः स व्रीडितोऽभवत् ॥ ६
तस्योपविष्टस्य सुखं पक्षाभ्यां पक्षिपुंगवः ।
अन्तर्धानगतश्छायां चकारोरगभोजनः ॥ ७
तं विविक्ते नगगतं लोकवृत्तान्ततत्परम् ।
उपतस्थे गजं हित्वा कृष्णं बलनिषूदनः ॥ ८

स समीपगतस्तस्य दिव्यस्रगनुलेपनः ।
रराज देवराजो वै वज्रपूर्णकरः प्रभुः ॥ ९
किरीटेनार्कवर्णेन विद्युद्विद्योतकारिणा ।
अथ दिव्येन मधुरं व्याजहार स्वरेण तम् ॥ १०
कृष्ण कृष्ण महाबाहो ज्ञातीनां नन्दिवर्धन ।

---

719* सुराणां कार्यसिद्ध्यर्थं नित्यं कर्मसु निष्ठितम् ।
[ T1 G3 निल- ( for नित्य ) ]

— $^{c}$ ) T3 4 उपविष्ट ( for सू° ) V1 शैल- ( for शिला- ) — $^{d}$ ) Ś1 K1. 2 D4 सु , K4 om , D2 3 M4 स- ( for स ) Some Mss व्रीळितो ( for व्रीडितो )

7 $^{a}$ ) Ś1 K1 2 Ñ2 3 V1 3 B2 Ds D2 T4 मुखं , M1–3 मुखे ( for सुख ) — $^{c}$ ) K1 Ñ Ds D5 6 T1 G2 3 अन्तर्धान , G4 °य ( for °न- ) V3 -गतश्चायं ( for °श्छाया ) T4 अन्तर्धाय गतश्चायं — After 7, D6 S ( except T3 4 ) ins .

720* छायया च तया युक्त केशव यज्ञरूपिणम् ।
[ G1 छायाया ( for छायया ) M 3 सहमा ( for च तया ) T1 छायया च समायुक्त ( for $^{a}$ ). D6 -पूरुषम् ( for -रूपिणम् ) ]

8 $^{a}$ ) D2 विविक्तं ( for °क्ते ) S1 गिरि- , K Ñ V B D ( except D3 ) T2–4 G वन- ( for नग- ) K1 2 -गते ( for -गतं ) T1 M4 तं विविक्तेष्वनुग( M4 °वन )तं — $^{b}$ ) Ñ2 -कारकम् ( for -तत्परम् ) — $^{c}$ ) T3 रुषं ( for गजं ) D6 T1 2 G M4 त्यक्त्वा ( for हित्वा ) — After 8, G4 ins 721*

9 G4 om $9^{a}$–$10^{b}$ B1 repeats $9^{a}$ $10^{b}$, and line 1 of 721* after $18^{c}$ — $^{a}$ ) M2 3 श्रीमान् ( for तस्य ) M1 समीपमागत श्रीमान् — $^{b}$ ) V1 3 स्रगन्ध- ( for -स्रगनु- ) — $^{d}$ ) D3 विभु ( for प्रभु )

10 For the repetition in B1, cf v 1 9 G4 om $10^{ab}$ ( cf v 1 9 ) — $^{a}$ ) K Ñ V1 2 B2 3 D ( except D3 ) T3. 4 -तुल्येन ( for -वर्णेन ) — $^{b}$ ) K Ñ V1 3 B1 ( both times ) 2 3 Dn Ds D1 3–5 T1 3 4 G3 M4 विद्युद्द्योतकारिणा — N ( except Ś1 ) T G1–3 5 M4 ins after $10^{ab}$. G4 after 8

721* कुण्डलाभ्यां स दिव्याभ्यां सततं शोभिताननः ।
पञ्चस्तबकलम्बेन देवभूषणभूषित ॥
सहस्रपत्रकान्तेन देहभूषणकारिणा ।
ईक्षमाणः सहस्रेण नेत्राणां कामरूपिणाम् ।
त्रिदशाज्ञापनार्थेन मेघनिर्घोषकारिणा ॥ [ 5 ]

[ D3 om ( hapl ) lines 1–3 G4 om lines 1–2 B1 repeats line 1 after the repetition of $10^{ab}$ — ( L 1 ) V2 वज्राभ्या , G3 दीप्ताभ्या ( for दिव्याभ्यां ) K1 2 D2 सततं द्योतिताननं ( for $^{b}$ ). — D2 6 T2 G1–3 5 M4 om line 2. Ñ2. 3 B1 T1. 3 4 transp lines 2 and 3. — ( L 2 ) Ñ2 -लम्बेन , V3 -वर्णेन , B3 -युक्तेन ( for -लम्बेन ) Ñ2 V2 B Dn Ds T1 3 4 हारेणोरसि भूषित ( for $^{b}$ ) — K V1 3 B2 3 D1 om. ( hapl ) line 3 — ( L. 4 ) K1 2 प्रेक्षमाण , K3 V1 3 ईक्ष्य° , K4 प्रेक्ष° , Ds1 वीक्ष्य° , Ds2 वीक्ष° ( for ईक्ष° ). T3 वीक्षमाण सहस्रैस्तैर् ( for $^{a}$ ) K1 नेत्राभ्या , T3 4 नेत्रैस्तं ( for नेत्राणां ) K3 V3 -रूपिणम् , D3 -रूपिणा ( for °णाम् ). K2 नेत्राभ्या कामरूपिणा ( for $^{b}$ ) — D6 T G M4 ins after line 4 M1–3 after $10^{ab}$

721 A* प्रणाममकरोच्छक्र क्षन्तव्यामिति चाब्रवीत् ।
तुष्टाव च हरिं विष्णुं गोपवेषविभूषितम् ॥
नमस्ते देवदेवेश भूतभावनभावन ।
हिरण्यरेतसे तुभ्य नम सोमप्रदायिने ॥
नमो वेदैकतत्त्वार्थ तन्निबोधन बोधन । [ 5 ]
नम प्रणववाच्याय वाचकाय नमो नम ॥
नमस्ते विश्वरूपाय नमो लोकहिताय ते ।
नमो गोपविरूपाय नमो गोधरधारिणे ॥
नम पुराणरूपाय नमस्ते मधुसूदन ॥
किं वानेन जगन्नाथ नमस्कारेण केशव । [ 10 ]
या यास्तु देवदेवस्य मूर्तयो मूर्तिमत्तर ।
नमस्ताभ्यस्तथा विष्णो सर्वाभ्य सर्वकामद ॥
क्षन्तव्य मम देवेश कृत गोपालनन्दन ।
अज्ञानादथ वा ज्ञानाद्रोषाद्वा यदुनन्दन ॥
समर्थेष्वसमर्थेषु रोष प्रस्फुरति प्रभो । [ 15 ]
न केनचिद्भवान्शास्य शास्ता सर्वस्य वै प्रभो ॥
त्वन्निमित्तमिद सर्वमैन्द्र मम सुदुर्लभम् ।
त्वत्प्रसादाज्जगन्नाथ देवानामीश्वरो यत ॥
ततश्च देवदेवेश क्षन्तव्य दास इत्यहम् ।
इत्युक्त्वाथ पुनर्वाक्य व्याजहार शचीपति ॥ [ 20 ]
कृष्ण कमलपत्राक्षमबाल बालरूपिणम् ।
अतसीपुष्पसंकाश श्रीवत्सकृतलक्षणम् ।
उपविष्ट शिलापृष्ठे कृत्वा कर्मातिमानुषम् ॥
न हि दासेषु कोपोऽस्ति स्वामिना स्वामिसत्तम ।

Colophon

[ Before line 1, G1 reads lines 9–10 — ( L 2 ) D6 विभु , M3 हरिर् ( for हरिं ) — ( L 5 ) M3 -तत्त्वार्थ ( for °र्थ ) T3 नमस्ते देवतत्त्वार्थ ( for $^{a}$ ) G1. 2 तन्निबोधति वो( G2 °ध तपो )धन , M3 °बाधन बाधन ( for $^{b}$ ) — ( L 6 ) D6 -वाक्याय ( for -वाच्याय ) — M1–3 om ( hapl ) lines

अतिदैवं कृतं कर्म त्वया प्रीतिमता गवाम् ।। ११
मया सृष्टेषु मेघेषु युगान्तावर्तकारिषु ।
यत्त्वया रक्षिता गावस्तेनास्मि परितोषितः ।। १२
स्वायंभुवेन योगेन यच्चायं पर्वतोत्तमः ।
धृतो वेश्म इवाकाशे को ह्येतेन न विस्मयेत् ।। १३
प्रतिषिद्धे मम महे मयेयं रुषितेन वै ।
अतिवृष्टिः कृता कृष्ण गवां वै सप्तरात्रिकी ।। १४
सा त्वया प्रतिषिद्धेयं मेघवृष्टिर्दुरासदा ।
देवैः सदानवगणैर्दुर्निवार्या मयि स्थिते ।। १५
अहो मे सुप्रियं कृष्ण यत्त्वं मानुषदेहवान् ।
समग्रं वैष्णवं तेजो विनिगूहसि गोपितः ।। १६
साधितं देवतानां हि मन्येऽहं कार्यमव्ययम् ।
त्वयि मानुष्यमापन्ने युक्तेनैवं स्वतेजसा ।। १७
सेत्स्यते वीर कार्यार्थो न किंचित्परिहास्यते । C 3979 B 2 19. 20 P 2. 19 20

$7^{b}$–$8^{a}$. — (L 8) M4 -विरूपाय (for °पाद) T2 G1 3 गोवह्न-, T4 भूतर- (for गोनर-) D3 नमो गोपदराय च (for $^{b}$) — (L 9) G2 नमस्ते विश्वमालिणे (for $^{b}$) — (L 10) T3 नपना वाय केशव (for $^{b}$) — (L 11) M1-3 देवेश (for -देवस्य) T3 4 या यान्तु तव देवेश (for $^{a}$) G2 मूर्त्या तु (for मूर्तये) T3 मूर्तय परमात्मन (for $^{b}$) — (L 12) M2 सदा (for तथा) — (L 13) T3 कृतघ्नो गोपनन्दन (for $^{b}$) — (L 14) G2 यदि (for अथ) M2 दोषाद् (for रोषाद्) — (L 15) T2 G2 समर्थेनासमर्थेषु (for $^{a}$) T2 प्रस्फुटति ; M4 °रित (for °रति) T3 प्रभु (for प्रभो) — T3 4 G4 om (hapl) line 16 — (L 16) D6 शस्य, M4 शक्त (for शास्य) M3 हि, M4 च (for वै) — (L 17) D6 T1 नन्निमित्तम् (for त्व°) G2 च (for मु-) — (L 19) G1 2 तु (for च) T2 क्षन्तव्यो (for °व्य) D6 ईश (for दास) — T3 4 M1-3 om lines 20–23 Before line 20, T1 ins वैशंपायन· — (L 20) M4 स (for [अ]थ) — (L 21) G2 बाल बालकरूपिणम् (for $^{b}$) — (L 22) T2 G2 -सदृशं (for -सकाश) T1 -वक्षसम् (for -लक्षणम्) — (L 23) T1 कर्म कृत्वा (by transp) — (L 24) T3 स्वामिन (for °ना) — Colophon om in T3 4 — *Adhy name* D6 G2 3 M4 महेन्द्राभिगमनम् — *Adhy no* T1 G3 5 M4 75, T3 G1 74, G2 4 72, M1-3 71 ]

— Before line 5, D6 T1 2 4 G1 3 4 M ins वैशंपायन T4 om line 5 — (L 5) K2 त्रिदशाधिपति सोऽथ, Ñ1 °ज्ञापितो वीरो, Ñ2 V2 B Ds D4 6 T2 G1 2 5 °ज्ञापनोत्थेन (T2 G1 5 °त्थान), G4 त्रिदशाज्ञापनोऽर्थाना (for $^{a}$) B Ds -घोषिणा, G4 -कारिणम् (for °णा) K2 मेघाना घोषकारिण· (for $^{b}$) ]

— Before $10^{cd}$, some Mss ins वैशंपायन उवाच — $^{c}$) T4 G2 भूय स (G2 सु-) (for दिव्येन) Ñ3 वै सन्तो (for मधुरं) — $^{d}$) D6 T1 2 G1 2 4 5 M स्वरेण स· (M1-3 वै), T4 सुरेश्वर ; G3 स्वतेजस (for स्वरेण तम्) Ds2 मधुरेण स्वरेण च

11 Before 11, D4 ins इन्द्र उवाच — $^{a}$) M1-3 जगन्नाथ (for महाबाहो) — $^{b}$) M1-3 जगता भूषणाच्युत — $^{c}$) T1 अभिविल, T· आदिदेव, B m. Poona eds अतिदिव्य (for °दैव) K2 अप्यनदैवतं कर्म — $^{d}$) V1 2 G2 प्रीतिमता (for °ता) T1 M4 त्वया प्रीतिम( M4 °ति ग ना वयम्

12 $^{a}$) S1 यथा (for मया) K Ñ V B D T [उ]त्सृष्टेषु (for सृष्टेषु) — $^{b}$) Ñ1 V1 T1 2 G3-5 M4 युगान्तावर्तकादिषु·

13 K2 om 13–23 — $^{a}$) G. M· स्वयंभुवेन S1 रूपेण (for योगेन) T1 M4 त्वया भुवि नियोगेन — $^{b}$) Ś1 K3 Ñ V B D T G1 3-5 M4 यश्चायं, K4 यथायं (for यच्चायं) — $^{c}$) K1 3 4 Ñ2 3 V B D (except D6) T3 4 G4 M4 वेश्मवद् (for वेश्म इव) — $^{d}$) S1 K3 D3 T1 G4 [अ]नेन (for [ए]तेन)

14 K2 om 14 (cf v 1 13) — $^{a}$) K3 Ñ1 B3 D6 T2 G M3 4 मखे, K4 हते, T1 महीं (for महे) T3 स्वयं तु प्रतिषिद्धेन — $^{b}$) K4 मयोक्ते, D3 मया च ; T1 मयैव (for मयेय) M3 मयेद रक्षितेन वै (sic) — $^{c}$) G5 अद्य (for अति-) — $^{d}$) G1 4 गता (for गवा) K3 4 B1 Dn2 Ds2 D5 6 T3 G3 5 M1 सास- (for सप्त-) Dn1 -रात्रिका (for °की)

15 K2 om 15 (cf v 1 13) — $^{a}$) G2 4 या (for सा) Ñ2 प्रतिविद्धा (for °पिद्धा) S1 [अ]पि ; M1-3 [इ]ह (for [इ]यं) — $^{b}$) K4 (marg as in text) दुराकृता (for °सदा)

16 K2 om 16 (cf v 1 13) — $^{a}$) T3 यत्त्वं (for कृष्ण) — $^{b}$) Ñ1 V3 यस्त्व, T1 त्वं च ; M1-3 त्व हि (for यत्त्वं) D4 (marg as in text) देहभृत्, T4 -रूपवान् (for -देह°) B T3 मानुषेषु च देहवान् — $^{d}$) Ñ2 विनिगृह्णासि रोषित, D6 S (except T3 4) त्व( M4 ह्य )सृजस्त्वं हि रोषितः (G2 माधव).

17 K2 om 17 (cf v 1 13) — $^{a}$) K1 साधितं कृष्ण देवाना — Ds1 reads $17^{d}$–$18^{b}$ after $21^{c}$. — $^{d}$) K1, 2 Ñ3 V1 B2 Dn Ds D1-3 5 T1 2 M1 युक्ते चैव ; K4 युक्तेनेदं, Ñ1 °न च, V2 3 B1 3 D4 T3 M2. 3 युक्ते चैवं ; D5 G M4 युक्तेनैव ; T4 युक्तं चैवं (for युक्तेनैवं).

देवानां यद्भवान्नेता सर्वकार्यपुरोगमः ॥ १८
एकस्त्वमसि लोकानां देवानां च सनातनः ।
द्वितीयं नानुपश्यामि धुरं यस्ते समुद्वहेत् ॥ १९
यथा हि पुंगवः श्रेष्ठो मग्ने धुरि नियुज्यते ।
एवं त्वमसि देवानां मग्नानां द्विजवाहन ॥ २०
त्वच्छरीरगतं कृष्ण जगत्प्रहरणं त्विदम् ।
ब्रह्मणा साधु निर्दिष्टं धातुभ्य इव काञ्चनम् ॥ २१
स्वयं स्वयंभूर्भगवान्बुद्ध्याथ वयसापि वा ।
न त्वानुगन्तुं शक्तो वै पङ्गुर्द्रुतगतिं यथा ॥ २२
स्थाणुभ्यो हिमवाञ्श्रेष्ठो ह्रदानां वरुणालयः ।
गरुत्मान्पक्षिणां श्रेष्ठो देवतानां भवान्वरः ॥ २३
अपामधस्ताल्लोको वै तस्योपरि महीधराः ।
नागानामुपरिष्टाद्भूः पृथिव्युपरि मानुषाः ॥ २४
मनुष्यलोकादूर्ध्वं तु खगानां गतिरुच्यते ।
आकाशस्योपरि रविर्द्वारं स्वर्गस्य भानुमान् ॥ २५
देवलोकः परस्तस्माद्विमानगहनो महान् ।

---

18 For the sequence in Ds1, cf v 1 17 K2 om 18 ( cf v 1 13 ) Ñ1 reads 18-20 on marg — $^{a}$) K3 D4 देव, Ñ1 Dn2 D1 5 सर्व, D3 चैव, G5 M2 3 वीर्य (for वीर) Ñ2 कार्यं वै (for कार्यार्थी) — $^{c}$) K4 M4 एव (for नेता) — After 18$^{c}$, B1 repeats 9$^{a}$-10$^{b}$ and line 1 of 721* — $^{d}$) K1 3 Dn2 कार्ये, T4 -काम- (for कार्य-)

19 K2 om 19 (cf v 1 13) — $^{ab}$) M3 अपि (for असि) K1 3 4 Ñ V B Dn Ds D1-5 T3 M4 transp लोकानां and देवानां — K1 reads 19$^{c}$-20$^{d}$ twice — $^{c}$) Ñ3 V1 2 B2 Dn D4 5 नात्र, T3 न तु, T4 तु न (for नानु-) D2 -पश्याम, D3 °मो (for °मि) — $^{d}$) Ñ1 स सेवित, V1 समुद्धरेत्, M3 °द्वहन् (for °द्वहेत्) Bom Poona eds G(ed) यस्तेषां च धुरं वहेत्

20 For the repetition in K1, cf v 1 19 K2 om 20 (cf v 1 13) M4 om 20$^{ab}$ — $^{a}$) Ñ3 (marg as in text) G2 तथा (for यथा) — $^{b}$) V2 T1 G4 ह्यग्रे, B1 भग्ने, D3 भूमेर्, D6 T2 G1-3 5 लग्ने, M1 3 जनैर् (for मग्ने) K3 V1 2 B2 3 D1 T4 नियोज्यते (for नियु°) Ñ1 3 Dn D5 T3 भग्ने (Dn T3 ह्यग्रे) धुरि नियोज्यते, D2 मग्नायां धुरि युज्यते — $^{c}$) Ś1 तेषां; M1-3 तथा (for एवं) Ñ2 V1 M1-3 अपि, T2 G2 3 5 M4 इह (for असि) K1 (both times) D2 भूतानां (for देवानां) — $^{d}$) K4 पक्षि- (for द्विज-) K3 Ñ1 2 B2 D1 2. 4 -वाहन (for °न) S1 मग्नानां सत्रवाहन, K1 (both times) लोकानां च सनातन.; D3 भूतानां द्विजवाहन, D6 T1 2 G M आर्ता(T2 G1 मर्त्या)नां कार्यवाहन (D6 M4 °नम्).

21 K2 om 21 (cf v 1 13) — $^{a}$) D1 त्वच्छरीरमिदं कृष्ण — $^{b}$) K1 4 D2 3 प्रवहण, K3 Ñ3 V1 2 B Dn Ds D4 T3 4 प्रकरणं, D6 T1 2 G1 3-5 M प्रभवते; G2 प्रवर्त्तते (for प्रहरणं). D5 लोकानां प्रवणं त्विदम् — $^{c}$) G4 धातृ- (for साधु) G1 ब्राह्मणान्साधु निर्दिष्टान् (sic) — After 21$^{c}$, Ds1 reads 17$^{d}$-18$^{b}$.

22 K2 om 22 (cf v 1 13) — $^{a}$) M4 भूतानां (for भगवान्) D4 स्वयंभूर्भगवानेव, G(ed) स्वयंभूर्भगवाञ्श्रेष्ठो — $^{b}$) Ś1 वा, K1 D2-4 T2 [अ]पि, Ñ3 (marg) V1 D6 T1 G च (for [अ]थ) Ñ2 V3 वचसा (for वयसा) T2 G1 च, T3 इ (for वा) — $^{c}$) K1 पारं न (for न त्वानु-) K3 4 Ñ V B D (except D6) T3 4 शक्नोति, T1 शक्तो वा (for शक्तो वै) — $^{d}$) G2-5 दूर- (for द्रुत-) T2 -गतो (for गतिं)

23 K2 om 23 (cf v 1 13) — $^{a}$) D6 S (except T3 4) शैलानां (for स्थाणुभ्यो) G2 शैलो (for श्रेष्ठो) — $^{c}$) M3 गरुड (for गरुत्मान्) — $^{d}$) K1 3 4 Ñ1 3 V B Dn Ds D1-3 5 M4 देवानां च (K1 हि, M4 त्वं) (for देवतानां). Ñ2 देवानां च भगवान्वर (hypermetric), D4 देवानां भगवान्वर, D6 T1 2 G देवानां हि भवान्प्रभु (G4 °भो), T3 4 देवानां (T4 स देवो) भगवान्हरि.

24 $^{a}$) K3 V1 B2 M3 लोका वै, D3 लोकोऽस्ति; M4 लोकानां (for लोको वै) K1 अपोऽधस्ताल्लोकोऽयं (submetric) — $^{b}$) K4 महीरुहाः, D2 °धरान्, T3 °धर (for °धराः) — $^{c}$) K3 Dn1 D2 3 G2 M3 नगानाम् (for ना°) K2 V2 उपरिष्टाच्च, B5 °नां (for °द्भू°) — $^{d}$) K1 पृथिव्योपरि, T2 G1 3 भूमेरु° (for पृथिव्यु°) V1 M1 3 मानवा; T4 मानुष (for °षाः) D6 G2 4 5 M4 भूमेरुपरि मानुष (M4 °षम्).

25 $^{a}$) K4 G4 मानुष्य- (for मनुष्य-) Dn1 -लोकादूर्ध्वं; D3 -लोकस्योर्ध्वं (for लोकादूर्ध्वं) K1 च; K4 हि, T1 वै (for तु) — $^{b}$) M1 2 स्वर्गिणां (for खगानां) — $^{c}$) M4 द्वारं (for रविर्).

26 $^{b}$) K1-3 Ñ V B D (except D6) T G4 M3 -गमनो (for -गहनो) — $^{c}$) M3 [अ]यं (for [अ]हं), K1 (sup lin as in text) V3 देव (for कृष्ण) K2 वचनाद् (for देवानाम्) — $^{d}$) K4 V2 इन्द्रो (for ऐन्द्रे). K1 2 Ñ1 D6 G1 2 4 5 M प्रणिहित (for विनि°). B1 परे (for पदे). G3 ऐन्द्रेण प्रहित. पदे — After 26, D6 T1 2

यत्राहं कृष्ण देवानामैन्द्रे विनिहितः पदे ॥ २६
स्वर्गादूर्ध्वं ब्रह्मलोको ब्रह्मर्षिगणसेवितः ।
तत्र सोमगतिश्चैव ज्योतिषां च महात्मनाम् ॥ २७
तस्योपरि गवां लोकः साध्यास्तं पालयन्ति हि ।
स हि सर्वगतः कृष्ण महाकाशगतो महान् ॥ २८
उपर्युपरि तत्रापि गतिस्तव तपोमयी ।
यां न विद्मो वयं सर्वे पृच्छन्तोऽपि पितामहम् ॥ २९
लोकस्त्वर्वाग्दुष्कृतिनां नागलोकस्तु दारुणः ।
पृथिवी कर्मशीलानां क्षेत्रं सर्वस्य कर्मणः ॥ ३०
खमस्थिराणां विषयो वायुना तुल्यवृत्तिनाम् ।
गतिः शमदमाढ्यानां स्वर्गः सुकृतकर्मणाम् ॥ ३१
ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परा गतिः ।
गवामेव हि गोलोको दुरारोहा हि सा गतिः ॥ ३२
स तु लोकस्त्वया कृष्ण सीदमानः कृतात्मना ।
धृतो धृतिमता वीर निघ्नतोपद्रवं गवाम् ॥ ३३
तदहं समनुप्राप्तो गवां वाक्येन चोदितः ।
ब्रह्मणश्च महाभाग गौरवात्तव चागतः ॥ ३४
अहं भूतपतिः कृष्ण देवराजः पुरंदरः ।
अदितेर्गर्भपर्याये पूर्वजस्ते पुरातनः ॥ ३५
तेजस्तेजस्विनश्चैव यत्ते दर्शितवानहम् । C 3997 B 2. 19 38 P 2. 19 38

---

G M ins .

722* त्वया हि लोकनाथेन विष्णुना प्रभविष्णुना ।

27 $^{a}$) Ś1 G2 ब्रह्मलोक (for °को) — $^{b}$) D6 T2 G1–3 5 महर्षि (for ब्रह्मर्षि-) K4 -लोक- (for -गण-) Ś1 T3 G2 -सेवितम्, B1 -पूजित (for -सेवित)

28 G4 om 28 — $^{a}$) Ś1 लोका (for लोक) — $^{b}$) M3 तत् (for तं) K1 Ñ V1. 2 B D4–6 T3 M1–3 ह, D2 वै, D3 T1 M4 च (for हि) — $^{c}$) T3 4 त्व (for स) M3 -गति (for -गत) Ś1 K2 3 कृष्णो (for कृष्ण) G2 बहि सर्वगते कृष्ण — $^{d}$) D1 गतिर् (for -गतो)

29 $^{a}$) Ś1 D1 तस्य (for तत्र) — $^{b}$) Ś1 तस्य, K2 D4 तत्र, D6 त्वयि (for तव) K1 गति· प्रोक्ता ह्यपोमयी — $^{c}$) V1 यं (for या) Ś1 K3 D1 2 6 न विद्म, T1 विद्मो न (by transp) D3 यां न कृष्ण वयं विद्म — $^{d}$) G2 प्रयच्छन्तां (for पृच्छन्तोऽपि) — After 29, D6 S (except T4) ins .

723* पितामहोऽपि भगवांस्त्वत्प्रसादाद्यदृच्छया ।
या योगनिरता विष्णो भजन्ते ब्रह्मवादिन ॥

[(L. 1) D6 G2 M1–3 यदिच्छति, T3 प्रयच्छति (for यदृच्छया) — (L. 2) D6 ता (for या) T1 तथैव गतिमा विष्णोर्, M4 तवैव गमिता विष्णो (sic) (for $^{a}$) T1 भजन्ति (for °न्ते).]

30 Ñ2 om 30–32. — $^{a}$) K3 4 V1 3 B1 3 Dn Ds D4 T4 लोकास् (for लोकस्) K Ñ1 3 V B D T3 4 G1. 3 4 M1 2 त्वधो, G2 त्वया ; M3 तथा (for त्ववाग्). — $^{b}$) Ś1 D3 सु- (for तु) Ds नागलोकेषु दारुणा· — $^{c}$) K1 (*sup lin* as in text) पृथिवी कर्मत स्निद्धा — $^{d}$) G(ed) स्वर्गस्य (for सर्वस्य)

31 Ñ2 om 31 (cf v. l. 30). — $^{b}$) Ś1 D2 -शीलिनाम्, Ds T2 G3 4 वर्ति°, G M4 वृत्तिना (for °नाम्) G2 वायुना वृत्तिजीविनाम् — $^{c}$) K5 Dn -दमाद्यानाम्, K4 D4 °दीनाम्, T2 G1 °ख्यानाम् (for °ढ्यानाम्) — $^{d}$) Ś1 स्वर्गे (for स्वर्ग) D1 M4 सुकृति-, T1 सुश्रुत (for सुकृत-).

32 Ñ2 om 32 (cf v l 30) M4 om $32^{a}$–$33^{b}$ — $^{b}$) T3 G4 ब्रह्मलोक (for °क) — $^{c}$) T3 4 एकम् (for एव) K3 4 Ñ3 V B Dn Ds D5–6 T G1–4 तु, D1 नु (for हि) V1 गोलोका, B3 लोको वै (for गोलोको). — $^{d}$) K2 M2 तु ; D3 च (for हि)

33 M4 om $33^{ab}$ (cf. v l 32). B1 not collated. — $^{a}$) M1 2 विष्णो (for कृष्ण) — $^{c}$) Ś1 V1 D3 6 G1 4 धृतिमता, M4 गतिमतां (for धृतिमता) T1 G2 3. 5 धृतो धृतिमता श्रेष्ठ (G2 वापि). — $^{d}$) K1 2 4 Ñ3 V2 3 D1–3 G4 5 M4 निघ्नतोपद्रवान्गवाम् (K° °द्रु°), K3 Ñ1 Dn निघ्नतोपद्रवान्बहून्, T3 4 यदूना यदुपुंगव .

34 $^{a}$) K3 समव-, D1 त्वामनु (for समनु). M3 -प्राप्तं (for -प्राप्तो) — $^{b}$) M4 भवान् (for गवां) K3 D4 नोदितः, Ñ3 V1 देशित (for चोदित) K4 गवा वाक्यै प्रणोदितः. — T3 4 om (hapl ?) $34^{cd}$ — $^{d}$) Ś1 B Ds D5 [अ]नघ (for [आ]गत.)

35 $^{a}$) K2 -पते (for -पति) — K2 om (hapl) $35^{b}$–$37^{a}$ — $^{b}$) Ś1 भूत- (for देव-) — $^{c}$) Dn अदित्या (for °तेर्) T5 पर्याय (for °ये) Ś1 अदित्या गर्भसमये — $^{d}$) B3 पुरदर, D6 S (except T3 4) पुरा कृत (for पुरातन)

36 K2 om 36 (cf v l 35). — $^{a}$) Ś1 [ए]वं (for [ए]व) K4 Ñ V1 3 Dn D3 4 T2–4 स्वते(Ñ2 V1. 3 स्वं ते)-जस्तेजसा चैव (Ñ3 [marg] तेन), D6 T1 G M तेजस्ते तेजसा चैव — $^{b}$) Ñ1 स ते ; M4 यतो (for यत्ते) — $^{c}$)

समाजवाटान्निष्क्रम्य विवेश स्वं निवेशनम् ॥ १२
आह्वानं तत्र संचक्रे तस्य मल्लद्वयस्य वै ।
चाणूरस्याप्रमेयस्य मुष्टिकस्य तथैव च ॥ १३
तौ तु मल्लौ महावीर्यौ बलिनौ युद्धशालिनौ ।
कंसस्याज्ञां पुरस्कृत्य हृष्टौ विविशतुस्तदा ॥ १४
तौ समीपगतौ मल्लौ दृष्ट्वा जगति विश्रुतौ ।
उवाच कंसो नृपतिः सोपन्यासमिदं वचः ॥ १५
भवन्तौ मम विख्यातौ मल्लौ वीरध्वजोचितौ ।
पूजितौ च यथान्यायं सत्काराहौं विशेषतः ॥ १६
तन्मत्तो यदि सत्कारः स्मर्यते सुकृतानि वा ।
कर्तव्यं मे महत्कर्म भवद्भ्यां स्वेन तेजसा ॥ १७
यावेतौ मम संवृद्धौ व्रजे गोपालकावुभौ ।
संकर्षणश्च कृष्णश्च बालावपि जितश्रमौ ॥ १८
एतौ रङ्गगतौ युद्धे युध्यमानौ वनेचरौ ।
निपातानन्तरं शीघ्रं हन्तव्यौ नात्र संशयः ॥ १९
बालाविमौ चपलकाविक्रियाविति सर्वथा ।
नावज्ञा तत्र कर्तव्या कर्तव्यो यत्न एव हि ॥ २०
ताभ्यां युधि निरस्ताभ्यां गोपाभ्यां रङ्गसंनिधौ ।
आयत्यां च तदात्वे च श्रेयो मम भविष्यति ॥ २१
नृपतेः स्नेहसंयुक्तैर्वचोभिर्हृष्टमानसौ ।
ऊचतुर्युद्धसंमत्तौ मल्लौ चाणूरमुष्टिकौ ॥ २२
यद्यावयास्तौ प्रमुखे स्थास्येते गोपकिल्बिषौ ।

---

$V_2$ $D_4$ समाजे ( for °ज ) $D_6$ -वशम् ( for विधिम् ) — $^c$ ) $D_3$ -मध्यान् ( for -वाटान् ) — $^d$ ) $D_{1\ 5}$ विवेशान्य-, $G_1$ विविशे स्वं ( for विवेश स्व ). $T_1$ विवेश स्वनिकेतनम्

13 $K_2$ om $13^a$ ( cf v l 11 ) $T_1$ om $13^{ab}$ — $^b$ ) $T_2$ $G_1$ तत्र ( for तस्य ) $D_6$ $T_2$ G M च ( for वै ) — $^c$ ) $D_3$ चाणूरमुष्टिकस्याथ — $^d$ ) $D_5$ प्रलम्बस्य ( for मुष्टिकस्य )

14 $^a$ ) $S_1$ ततो मल्लौ ; $K_4$ तौ तु वीरौ , $B_1$ तौ मल्लौ सु- ; $D_5$ $M_4$ तौ च मल्लौ ( for तौ तु मल्लौ ) $Ś_1$ -वीरौ ( for वीर्यौ ) — $^b$ ) N ( except $S_1$ $D_6$ ) $T_{3\ 4}$ $M_1$ बाहु- ( for युद्ध- )

15 $^a$ ) $T_3$ तौ तौ समागतौ दृष्ट्वा , $T_4$ मल्लौ समीपगौ दृष्ट्वा

16 $^a$ ) $D_{2\ 3}$ लोक- ( for मम ). $K_4$ विज्ञातौ ( for विख्यातौ ) — $G_5$ om $16^b$–$18^a$ — $^b$ ) $G_1$ मल्लवीर-, $G_3$ मल्लौ मल्ल ( for मल्लौ वीर ) $K_3$ $V_1$ Dn $T_{1\ 3\ 4}$ -ध्वजोच्छ्रितौ ; $Ñ_1$ $D_2$ -ध्वजाविव ; $V_1$ $G_2$ ध्वजाचितौ , $D_3$ द्विजोत्तमौ , $D_5$ -ध्वजाङ्कितौ ( for -ध्वजोचितौ ) $Ś_1$ वीरौ मल्लध्वजोच्छ्रितौ — $^d$ ) $D_5$ सत्कार्यार्हौ ( for सत्काराहौं ) $S_1$ सुसत्कृतौ ( for विशेषतः ).

17 $G_5$ om 17 ( cf v l 16 ) — $^a$ ) $Ś_1$ अस्मत्तो ( for तन्मत्तो ) K Ñ V $B_{2\ 3}$ Dn Ds $D_{1-5}$ $T_{3\ 4}$ $M_3$ सत्कारा ; $G_2$ °रं ( for °र ) — $^b$ ) K Ñ V $B_{1\ 3}$ D ( except $D_6$ ) $T_{3\ 4}$ $M_{1-3}$ स्मर्यन्ते ( for °ते ) $K_2$ Dn $Ds_1$ $D_{4\ 6}$ $T_2$ $G_{3\ 4}$ च , $K_{3\ 4}$ $V_2$ $B_1$ $D_{3\ 5}$ $T_{3\ 4}$ वै , $G_1$ ह ( for वा ) $T_1$ $M_4$ स्मर्यते सुकृत हि व , $G_2$ °ते सुकृतमिव — $^c$ ) $K_{3\ 4}$ Dn $D_1$ कर्तव्यं च , $D_{3\ 5}$ °व्यं सु- , $M_{1-3}$ तत्कर्तव्यं , $M_4$ कर्तव्यं यन् ( for °व्यं मे ). — $^d$ ) $Ñ_2$ कर्मणा ( for तेजसा )

18 $G_5$ om. $18^a$ ( cf. v. l. 16 ). — $^a$ ) Ds $D_1$ द्वाव् ( for याव् ) $G_1$ सवृत्तौ ( for °द्धौ ) $T_2$ यावन्तौ मम संवृत्तौ $G_2$ यावेतौ मत्पुरीं प्राप्तौ — $^b$ ) $D_6$ $T_2$ G $M_4$ व्रजे गो( $G_2$ °जगो )पालदारकौ ( $T_2$ °का ), $T_1$ $M_{1-3}$ व्रजे गोपकदारकौ — $^c$ ) $D_6$ $T_1$ $G_{1-3\ 5}$ M बलभद्रश् ( for संकर्षणश् ) — $^d$ ) $Ñ_2$ एव ( for अपि ) $S_1$ $K_4$ कृतश्रमौ , $V_3$ विरेजतु , $B_3$ $D_5$ जितक्रमौ ( for °श्रमौ ) $D_6$ $G_{2\ 4\ 5}$ बालाववितश्रमौ , $T_1$ M °मितविक्रमौ

19 $^a$ ) $V_2$ रङ्गं ( for रङ्ग- ) — $^c$ ) $G_2$ $M_3$ निर्घातानन्तरं शीघ्रं

20 $^a$ ) $K_2$ ( also as in text ) $_3$ उभौ ( for इमौ ). K Ñ V $B_1$ Dn $D_{1-5}$ $T_{1\ 3\ 4}$ सुच( $Ñ_{1\ 3}$ $V_1$ $D_{3\ 4}$ च च )पलाव् $T_2$ $G_1$ अबलकाव् ( for चप° ) — $^b$ ) $V_1$ $D_6$ $T_{1\ 2}$ $G_{1-3\ 5}$ M सर्वदा ( for °था ) — $^c$ ) $Ś_1$ कार्या वै ( for कर्तव्या ) — $^d$ ) $Ñ_2$ $V_3$ $D_6$ $T_1$ G $M_{1\ 4}$ तु , $T_2$ तत् , $M_{1-3}$ च ( for हि ) $Ś_1$ यत्त एवानुगम्यताम्.

21 $^a$ ) $Ś_1$ निहताभ्यां ( for निरस्ताभ्यां ) — $B_3$ om ( hapl ) $21^b$–$24^c$ — $^b$ ) $T_4$ मम ( for रङ्ग- ) — $^c$ ) $T_{3\ 4}$ तदन्ते ( for तदात्वे ) $Ñ_1$ निपातान्ते च हन्तव्यौ ; $M_{1-3}$ प्रीतिर्मे महती तत्र — $^d$ ) $M_{1-3}$ चैव ( for मम )

22 $B_3$ om 22 ( cf v l 21 ) Before 22, $T_4$ ins वैशंपायन — $^a$ ) $D_6$ $G_{2-5}$ नृपति ( for °ते ) $M_{1-3}$ तव ( for स्नेह- ) $K_4$ $D_1$ -सयुक्तौ ( for °क्तैर् ) — $^b$ ) $T_1$ $M_4$ वचनैर् ( for वचोभिर् ) $D_3$ हृत ( for हृष्ट- ). $M_{1-3}$ चेतसौ ( for -मानसौ ) — $^c$ ) $S_1$ संरब्धौ , $K_3$ -संपूर्णौ , $K_3$ ( also ) $D_2$ -सपक्षौ , $K_4$ $T_3$ $G_2$ -संसक्तौ , $B_3$ $T_{1\ 2}$ $G_3$ $M_4$ संयुक्तौ ; $D_6$ $G_{1\ 4\ 5}$ $M_{1-3}$ -संरक्तौ ( for -संमत्तौ ) — $^d$ ) $T_4$ मत्तौ ( for मल्लौ ).

हताविल्यवगन्तव्यौ प्रेतरूपौ तपस्विनौ ॥ २३
यदि वा प्रतियोत्स्येते तावरिष्टपरिप्लुतौ ।
आवाभ्यां रोषयुक्ताभ्यां प्रमुखस्थौ वनौकसौ ॥ २४
एवं वाग्विषमुत्सृज्य तावुभौ मल्लपुंगवौ ।
अनुज्ञातौ नरेन्द्रेण स्वगृहं प्रतिजग्मतुः ॥ २५

इति श्रीहरिवंशे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

# ७३

वैशंपायन उवाच ।
महामात्रं ततः कंसो बभाषे हस्तिजीविनम् ।
हस्ती कुवलयापीडः समाजद्वारि तिष्ठतु ॥ १
बलवान्मदलोलाक्षश्चपलः क्रोधनो नृपु ।
दानोत्कटकटश्चण्डः प्रतिवारणरोषणः ॥ २
स संचोदयितव्यस्ते तावुद्दिश्य वनौकसौ ।
वसुदेवसुतौ नीचौ यथा स्यातां गतायुषौ ॥ ३
त्वया चैव गजेन्द्रेण यदि तौ गोषु जीविनौ । C 4555 B 4.8 8 33 P 2.28 33

23 B3 om 23 (cf v l 21) — $^{a}$) K1 (marg) यथा, T4 अद्य (for यदि) M4 तु (for तौ) G2 प्रमुखौ — K1 transp $23^{cd}$ and $24^{ab}$ K2 4 repeat $23^{cd}$ after $24^{ab}$ — $^{c}$) K1 D1 5 G3 [ए]व, D2 च (for [अ]व-) V3 -मन्तव्यौ (for -गन्तव्यौ) Ñ3 (marg as in text) V2 B1 T1 4 हताविल्येव मन्तव्यौ — $^{d}$) Ś1 गोप- (for प्रेत-) D2 -भूतौ (for -रूपौ) K1 2 Ñ3 V T3 G2 3 तरस्विनौ, M4 वनेचरौ (for तपस्विनौ) K2 4 (both second time) भवता तौ नृपोत्तमौ

24 B3 om $24^{abc}$ (cf v l 21) K1 transp $23^{cd}$ and $24^{ab}$ — $^{a}$) K Ñ V B1. 2 D (except D6) T3 4 [आ]वा प्रति-, M1 2 चाप्यभि- (for वा प्रति-) — $^{b}$) G2 M1 2 तवारिष्ट- (for ताव°) K2 -पुरस्कृतौ (for -परिप्लुतौ) — After $24^{ab}$, K2 4 repeat $23^{cd}$ and om $24^{cd}$ — $^{d}$) K1. 3 Ñ3 V B Dn Ds D2 3 5 T3 प्रमुखे तौ; D4 °खं तौ (for °खस्थौ) T1 M4 वनेचरौ (for वनौकसौ) Ñ1 2 T4 प्रमुखे तौ वनेचरौ — After 24, D6 T1 2 G M G(ed) ins.

820* हत्वा तौ गोषु संवृद्धौ दास्यावस्तव भूतलम् ।
व्यपैतु ते भयं राजन्नावां मल्लोत्तमौ मृधे ॥
इत्युक्त्वास्फोटनं चक्रे मत्तमल्लद्वयं तथा ।
सिंहनादं च तच्चक्रे भूगोलकविदारकम् ॥

[(L 1) T1 G3 गोप- (for गोषु). T1 G3 दास्यामस् (for °वस्) — (L 2) T1 उभौ (for मृधे). — (L. 3) D6 G2 M1–3 [आ]स्फोटनक (for [उ]क्त्वा स्फोटन) — G5 G(ed) om (hapl) lines $3^{b}$–$4^{a}$ D6 मत्त (for मत्त-) T1 G2 3 M1–3 तदा (for तथा) — (L 4) G1 च चक्रतू, G2 ततश्चक्रे, G4 च तौ चक्रे (for च तच्चक्रे) G5 -विदारकौ, M3 °रितम् (for °रकम्) ]

25 $^{a}$) K1 2 वाग्वज्रम् (for वाग्विषम्) G1 उत्सृष्ट्वा (for उत्सृज्य) Ś1 एवं वाग्वज्रमुद्यम्य — $^{b}$) Dn2 बल- (for मल्ल) — $^{d}$) D1 स्वे- (for स्व-) D1 तौ प्र- (for प्रति-).

Colophon om in N (except V2 D6) T3 4 — *Mention of Khila* V2 — *Adhy name* V2 चाणूरमुष्टिकवाक्यम्, D6 G2 कंसमल्लसवाद.; G3 मल्लसंवाद — *Adhy no.* (figures, words or both) V2 G1 84, T1 G3 5 M4 85; T2 83, G2 4 M1–3 82 — *Śloka no* Dn Ds2 D3 29, G2 32

## 73

1 N (except V2 D6) T3 4 om the ref — $^{b}$) K4 Dn Ds1 D4 T3 G4 -जीवनम् (for -जीवि°) — $^{d}$) Ś1 D4 समाजे (for °ज) K1 2 Ñ1 2 3 (marg as in text) V1 3 D2 3 5 T3 M1–3 तिष्ठताम् (for °तु) T2 समाजे धुरि तिष्ठतु.

2 $^{b}$) D6 T1 2 G भृशम् (for नृपु) — $^{c}$) Ś1 Ñ2 मदोत्कट- (for दानो°) Ñ1 दन्तोत्कटतमश्चण्डः — $^{d}$) K2 Ñ1 D1 वारित- (for -वारण) B1 3 D2 3 -वारणः (for -रोषणः)

3 $^{a}$) T1 G3 5 तौ (for ते) Ñ1 V2 D3–5 स सनोदयितव्यस्ते — $^{b}$) G1 3 5 द्वाव् (for ताव्) Ñ1 2 V3 B1 2 D2–4 6 T1 2 G M4 व्रजौकसौ, Ñ3 (marg) V1 वने व्रजौ; M1–3 तु गोपकौ (for वनौकसौ). — $^{c}$) Ñ2 3 V1 3 B1 Ds1 D1 T3 4 वीरौ (for नीचौ)

4 $^{b}$) Ś1 यथा (for यदि) D2 ते (for तौ) K4 Ñ2 3 V Dn D1–5 T3 4 G4 गोप-; B1 गोष्ठ- (for गोषु) K1–3 B2 यदि तौ गोष्ठ(K3 B2 °प)जीवनौ, D6 T1. 2 G1–3 5 M यदि तौ गोपदारकौ — $^{c}$) D4 पातितौ (for भवेतां) K1 Dn D2 3 T3 4 पातितौ; K2 4 Ñ2. 3 V2 3 B2 पतितौ (for पा°).

भवेतां घातितौ रङ्गे पश्येयमहमुत्कटौ ॥ ४
ततस्तौ पतितौ दृष्ट्वा वसुदेवः सबान्धवः ।
छिन्नमूलो निरालम्बः सभार्यो विनशिष्यति ॥ ५
ये चेमे यादवा मूर्खाः सर्वे कृष्णपरायणाः ।
विनशिष्यन्ति छिन्नाशा दृष्ट्वा कृष्णं निपातितम् ॥ ६
एतौ हत्वा गजेन्द्रेण मल्लैर्वा स्वयमेव वा ।
पुरीं निर्यादवां कृत्वा विचरिष्याम्यहं सुखी ॥ ७
पितापि मे परित्यक्तो यो यादवकुलोद्वहः ।
शेषाश्च मे परित्यक्ता यादवाः कृष्णपक्षिणः ॥ ८
न चाहमुग्रसेनेन जातः किल सुतार्थिना ।
मानुषेणाल्पवीर्येण यथा मामाह नारदः ॥ ९

सुयामुनं नाम गिरिं मम माता रजस्वला ।
प्रेक्षितुं सह सा स्त्रीभिर्गता वनकुतूहलात् ॥ १०
सा तत्र रमणीयेषु रुचिरद्रुमसानुषु ।
चचार नगशृङ्गेषु कन्दरेषु नदीषु च ॥ ११
किंनरोद्गीतमधुराः प्रतिश्रुत्यानुनादिताः ।
शृण्वन्ती कामजननीर्वाचः श्रोत्रसुखावहाः ॥ १२
बर्हिणानां च विरुतं खगानां च विकूजितम् ।
अभीक्ष्णमभिशृण्वन्ती स्त्रीधर्मसभिरोचयत् ॥ १३
एतस्मिन्नन्तरे वायुर्वनराजिविनिःसृतः ।
हृद्यः कुसुमगन्धाढ्यो ववौ मन्मथबोधनः ॥ १४
द्विरेफाभरणाश्चैव कदम्बा वायुघट्टिताः ।

---

$M_{1.2}$ एतौ ( for रङ्गे ) $K_3$ घातितौ पतितौ रङ्गे, $Ñ_1$ जग्मतु पतितौ रङ्गे, $V_1$ भवेता पतितौ वीरौ ; $D_1$ पतेता पतितौ रङ्गे, $T_1$ $G_3$ भवेता पतितावेतौ, $T_2$ $G_{1.4.5}$ °ता खादितावेतौ, $G_2$ $M_{3.4}$ °ता घाति( $M_4$ साधि )तावेतौ — $^d$ ) $D_1$ पश्येऽहम्, ( for पश्येयम् ) $Ñ_1$ पश्येय सम शात्रवौ, $B_{1.2}$ Ds न पश्येयं मदोत्कटौ, $T_{1.2}$ G M रङ्गे पश्येयमुत्कटौ

5 $^a$ ) $Ñ_1$ $B_1$ Dn Ds $D_{3.4}$ पातितौ, $M_{1-3}$ निहतौ ( for पतितौ ) — $^c$ ) $K_3$ $Ñ_1$ छिन्नमूल ( for °लो ) $M_{1-3}$ निरानन्दः ( for °लम्ब ) — $^d$ ) $M_{1-3}$ चापि ( for -भार्यो ) $Ñ_2$ $V_3$ सभार्यश्च विनङ्क्ष्यति, $D_2$ °र्यो विलपिष्यति, $G_2$ °र्यो विनशिष्यते

6 $^a$ ) $Ś_1$ मूढा, $Ñ_3$ ( marg as in text ) मुग्धा ( for मूर्खाः ) — $^b$ ) $Ñ_1$ कृष्णपक्ष- ( for सर्वे कृष्ण- ) — $^c$ ) $B_3$ ते ( for वि ) $D_1$ ते छिन्ना, $D_6$ $T_{1.2}$ $G_{3-5}$ M भिन्नाशा ( for छि° ) $Ś_1$ विनङ्क्ष्यन्ति निराशास्ते, $T_3$ छिन्नाशा विनशिष्यन्ति — $^d$ ) $M_4$ कृष्णं दृष्ट्वा ( by transp )

7 $^a$ ) $T_3$ इह ( for एतौ ) — $^b$ ) $K_4$ $D_{1.2}$ च ( for the second वा ) — $M_4$ om $7^c$–$8^b$ — $^c$ ) $K_{1.3.4}$ $Ñ_{2.3}$ $V_2$ Dn $D_{2-5}$ $T_{1-3}$ $G_3$ निर्यादवीं ( for °वां ) — $^d$ ) $T_1$ वै ( for [अ]हं ) $K_{1.2}$ $D_2$ $M_{1-3}$ सुखम् ( for सुखी ) $Ñ_2$ $V_3$ निवसिष्याम्यहं सुखी

8 $M_4$ om $8^{ab}$ ( cf v 1 7 ) — $^a$ ) $Ś_1$ K $Ñ_{2.3}$ $V_1$ Dn $D_{1-5}$ T $G_3$ $M_1$ हि ( for [अ]पि ) — $^b$ ) $K_{3.4}$ $Ñ_3$ $V_{1.2}$ B Dn Ds $D_{1-5}$ $T_{1.3.4}$ यादवाना ( for यो यादव- ) $D_6$ -कुलोद्भव. ( for °द्वह ) — $^c$ ) $T_1$ $M_4$ [ए]व ; $T_2$ $G_{1.3-5}$ ये ( for मे ). — $^d$ ) $M_3$ यदवः ( for यादवाः )

9 $^b$ ) $D_5$ कुल- ( for किल ) — After 9, N ( except $Ś_1$ $Ñ_1$ ) S ( except $M_{1-3}$ ) ins a passage given in App I ( No 14 )

10 $^a$ ) $K_4$ $Ñ_3$ $V_1$ $B_3$ Ds $D_{1.3-5}$ $T_{3.4}$ $G_4$ नगं ( for गिरि ) — $^b$ ) All Mss ( except $Ś_1$ $M_{1-3}$ ) तव ( for मम ) — $^c$ ) K $Ñ_3$ $V_{1.2}$ B D $T_{1.3.4}$ $G_{1.5}$ $M_4$ सहिता, $Ñ_{1.2}$ च सह, $M_3$ सह या ( for सह सा ) — $^d$ ) $M_{1-3}$ याता ( for गता ) $K_{1-3}$ $Ñ_2$ $V_3$ $B_{2.3}$ Ds $D_{1.2.4}$ $T_{1-3}$ $G_{1-3.5}$ $M_4$ वै स-, $K_4$ $D_6$ वै सु-, $Ñ_3$ $V_1$ $Dn_1$ $T_4$ $G_4$ वै सा, $B_1$ चैका ; $Dn_2$ चै स्व-, $D_3$ चैव ( for वन- )

11 $^b$ ) $Ś_1$ विचित्र- ( for रुचिर- ) — $^c$ ) $Ś_1$ वन- ; $M_4$ गिरि- ( for नग- ) $B_3$ पृष्ठेषु ( for -शृङ्गेषु ) — $^d$ ) $B_1$ वनेषु ; $D_3$ नगेषु ( for नदीषु ) $Ś_1$ कन्दरासु गुहासु च, $Ds_1$ नदीषु कन्दरेषु च

12 $^b$ ) $K_4$ हि, $Ñ_3$ $V_1$ B Dn Ds $D_6$ $T_{3.4}$ [अ]भि-, $D_1$ नि- ( for [अ]नु- ) $V_2$ $D_4$ प्रतिश्रुत्याभिनन्दिता — $^c$ ) $Ś_1$ K $V_{1.3}$ $B_3$ $Dn_1$ $D_{1.2}$ $T_4$ $G_2$ $M_3$ शृण्वती, $B_1$ °तां ( for °न्ती )

13 $^a$ ) $Ñ_1$ रुदतां, $G_2$ मधुरं ( for विरुतं ) K $Ñ_{2.3}$ V B D ( except $D_6$ ) $T_{1.3.4}$ $G_4$ बर्हिणां चैव विरुतं — $^b$ ) $T_4$ [ए]व ( for वि- ) — $^c$ ) $Ñ_1$ $D_6$ $T_2$ $G_{1-3.5}$ $M_{1-3}$ उप- ( for अभि ) — $^d$ ) $K_{1.3}$ चाभ्यरोचयत्, $K_2$ $B_{1.3}$ साभ्य° ; $Ñ_2$ $V_3$ चाप्य° ; $V_2$ साभ्य°, $B_2$ $D_{2.4}$ $T_2$ $G_3$ अभ्य°, $D_1$ प्रति°, $D_5$ सम° ; $M_4$ चाप्य° ( for अभि° ) $K_4$ स्त्रीधर्मस्थाभ्यरोचयत्, $D_6$ $G_{2.5}$ $M_{1-3}$ °र्मिण्यभ्यरोचयत्, $T_1$ °र्मं चाभ्यचोदयत्

14 $Ś_1$ om $14^{cd}$ — $^c$ ) $K_1$ कुमुद- ( for कुसुम- ). — $^d$ ) $Dn_2$ बभौ ( for ववौ ) $T_4$ मदन- ( for मन्मथ- ). $Ñ_3$ $V_1$

सुमुचुर्गन्धमधिकं संततासारमूर्छिताः ॥ १५
केसराः पुष्पवर्षैश्च ववृषुर्मदबोधनाः ।
नीपा दीपा इवाभान्ति पुष्पकण्टकधारिणः ॥ १६
मही नवतृणच्छन्ना शक्रगोपविभूषिता ।
यौवनस्थेव वनिता स्वं दधारार्तवं वपुः ॥ १७
अथ सौभपतिः श्रीमान्द्रुमिलो नाम दानवः ।
उग्रसेनस्य रूपेण मातरं मे प्रधर्षयत् ॥ १८
सा पतिस्निग्धहृदया भावेनोपससर्प तम् ।
शङ्किता चाभवत्पश्चात्तस्य गौरवदर्शनात् ॥ १९
सा तमाहोत्थिता भीता न त्वं मम पतिर्ध्रुवम् ।
कश्च त्वं विकृताकारो येनास्मि मलिनीकृता ॥ २०
एकपत्नीव्रतमिदं मम संदूषितं त्वया ।
पत्युर्मे रूपमास्थाय नीच नीचेन कर्मणा ॥ २१
किं मां वक्ष्यन्ति रुषिता बान्धवाः कुलपांसनीम् ।
जुगुप्सिता च वत्स्यामि पतिपक्षैर्निराकृता ॥ २२
धिक्त्वामीदृशमक्षान्तं दौष्कुलं व्युत्थितेन्द्रियम् ।
अविश्वास्यमनायुष्यं परदाराभिमर्शनम् ॥ २३
स तामाह प्रसजन्तीं क्षिप्तः क्रोधेन दानवः ।
अहं वै द्रुमिलो नाम सौभस्य पतिरूर्जितः ॥ २४
किं मां क्षिपसि दोषेण मूढे पण्डितमानिनि । C 4622 B 2 28. 99 P 2 28 99

-बोधक , $D_1$ वर्धन , $T_1$ भेदनः ( for -बोधनः )

15 $G_2$ om ( hapl ) $15^a$–$16^b$ —$^b$) $\tilde{N}_3$ $V_1$ वात- ( for वायु ) $K_2$ -चोदिता , $K_3$ $B_3$ -मण्डिता ( for -घट्टिता ) —$^d$) $\tilde{N}_2$ संभृतासारमूर्छिता

16 $G_2$ om $16^{ab}$ ( cf v l 15 ) —$^a$) $\acute{S}_1$ $V_2$ $D_{2\ 3}$ पुष्पवर्ष , $\tilde{N}_1$ °बर्हैश्च ( for °वर्षैश्च ) —$^b$) $\tilde{N}_1$ $D_4$ ववर्षुर् ( for ववृषुर् ) $M_1$ बोधिता , $M_4$ -बोधिका ( for बोधना ) $\acute{S}_1$ मुमुचुर्मदबोधनात् , $D_6$ ववर्षुर्मदभोजना , $T_1$ $M_{2\ 3}$ ववृषुर्मन्दबोधि( $T_1$ °चोदि )ता , —$^c$) $M_4$ नीपार्जुन ( for नीपा दीपा ) $\acute{S}_1$ बभु ( for [आ]भान्ति ) —$^d$) $\acute{S}_1$ $T_1$ $M_4$ -स्तबक- , $\tilde{N}_2$ V $B_{2\ 3}$ $D_{2\ 3}$ कर्णिक ( for -कण्टक- )

17 $^a$) $T_4$ च बर्हिण- ( for नवतृण- ) $T_1$ $M_4$ मही च तृणसछन्ना —$^b$) $\acute{S}_1$ -गोपक- , $D_4$ गोपैर्वि , $D_6$ चापवि- ( for -गोपवि- ) —$^d$) $V_1$ $B_3$ $D_{4\ 6}$ $G_{2\ 4\ 5}$ सद्धार , $T_1$ संदधौ च , $T_{2-4}$ $G_3$ सा दधार ( for स्वं द° ). $D_2$ पुन. ( for वपु ) $\acute{S}_1$ सदधारान्तरं वपु .

18 $^b$) Some Mss द्रमिलो ( for द्रु° ) $\tilde{N}_2$ $D_6$ $T_2$ $G_{2\ 4\ 5}$ M नामतः ( $M_{1\ 2}$ °क ) ( for दानव ) — After $18^{ab}$, N ( except $\acute{S}_1$ $\tilde{N}_1$ ) S ( except $M_{1-3}$ ) ins a passage given in App I ( No 15 ). — $M_4$ om $18^c$ —$^d$) $K_{1\ 2\ 4}$ $\tilde{N}_{2\ 3}$ V $B_{2\ 3}$ $D_{2\ 3\ 6}$ $T_{1-3}$ $G_{1\ 3-5}$ ते ( for मे ). Dn Ds $D_5$ $T_1$ $G_2$ मातरं ते व्यधर्षयत्

19 $D_4$ om 19 —$^a$) K $Ds_1$ $D_{1\ 2}$ पतिं ( for पति- ). —$^b$) K $\tilde{N}$ $V_1$ $B_1$ Dn Ds $D_{3,\ 5}$ $T_{1\ 3\ 4}$ त भावेनोपसर्पंती , $V_2$ $D_6$ $T_2$ G M तद्भा( $T_2$ $G_{1\ 4}$ सद्भा , $G_3$ त भा )वेनोपसर्पिता ( $V_2$ °र्प्य तं , $M_{1-3}$ °र्पत , $M_4$ °र्पंती ) —$^c$) $D_{2\ 3}$ [इ]व , $D_5$ $T_1$ सा ( for च ) —$^d$) $K_4$ ततो ( for तस्य ) $\acute{S}_1$ -यन्त्रितात् ( for -दर्शनात् )

20 $^a$) $D_4$ $M_{1-3}$ स्थिता ( for [उ]त्थिता ) $D_6$ $T_2$ $G_{1-3\ 5}$ $M_4$ पुन( $D_6$ $G_3$ °त )माह स्थिता भीता —$^b$) $G_4$ पतिर्मम ( by transp ) $K_4$ तत्र सौभपतिं ध्रुवम् —$^c$) $D_1$ कश्चित्त्वं विधृताचारो —$^d$) $K_3$ [अ]ह ( for [अ]स्मि ). $V_3$ विमली- , $G_2$ विफली- ( for मलिनी )

21 $^a$) $K_{3\ 4}$ $\tilde{N}_{2\ 3}$ V $B_3$ Dn Ds $D_{1\ 4\ 5}$ $T_3$ $G_5$ एकभर्तृ- , $T_4$ एवं भर्तृ- ( for एकपत्नी- ) —$^b$) $D_1$ किं ( for सं ). $D_6$ $T_{1\ 2}$ $G_{1\ 2\ 5}$ M त्वया सदूषित मम —$^d$) $D_5$ नीता ( for नीच ) $D_1$ त्वं नीचेन च कर्मणा , $D_3$ निन्दनीयेन क°.

22 $^b$) $K_4$ $D_{2\ 4}$ $G_2$ -पांसिनीम् , $\tilde{N}_3$ $Dn_1$ -पांसनाम् $V_{1\ 2}$ -पाशुलाम् , $V_3$ पासुलीम् , $D_1$ -पाशुनीम् , $T_1$ -पायिनीम् , $T_{3\ 4}$ पांसुलाम् ( for -पासनीम् ) —$^c$) $V_1$ $T_{1\ 4}$ वक्ष्यामि , $V_3$ धक्ष्यामि , Cal ed वत्स्यामि ( for वत्स्यामि ) —$^d$) $\acute{S}_1$ पितृ- , $K_{1\ 2}$ प्राति- , $G_5$ पक्षे ( for पति- ) $M_{1-3}$ पतिक्षेमविना( $M_3$ °पनिरा )कृता

23 $^a$) $T_2$ धिग्धिक्त्वामीदृशं कान्तं , $T_{3\ 4}$ धिक्त्वामीदृशमर्यादं , $G_2$ धिक्च त्वामदिश क्षान्तं —$^b$) $\acute{S}_1$ दौष्कुल्य ; $K_3$ $\tilde{N}$ $V_2$ B Dn $Ds_2$ $D_{2\ 5}$ दुष्कुलं ( for दौ° ) $K_{1\ 2\ 4}$ $Ds_1$ $D_{1\ 3\ 4}$ $T_{3\ 4}$ दुष्कुल ( $T_4$ °ष्कृतं ) व्यथितेन्द्रियम् , $V_3$ $D_6$ $T_{1\ 2}$ दुष्कुल ( $D_6$ दौर्बुध्य ) व्याकुले° , G $M_4$ दौष्कुलं ( $G_{1\ 2}$ °ल्य ; $M_4$ °ल्या ) व्याकुले° —$^c$) $M_1$ अयशस्यम् ( for अविश्वा° ) $V_1$ अनाधृष्यं , Cal ed °र्यं च ( for °युष्यं ) —$^d$) $\acute{S}_1$ $V_{2,\ 3}$ $B_3$ $D_{1-3}$ -मर्षणम् , $\tilde{N}_{1\ 3}$ $V_1$ -मर्दनम् , Dn -मर्षिणम् , $D_6$ $T_2$ -मर्शकम् ( for मर्शनम् ) $T_4$ $G_4$ परदाराविमर्शन( $G_4$ °क )म् ; $G_{2\ 5}$ $M_{1-3}$ °वमर्शन( $G_{2\ 5}$ °क )म् )

24 $^a$) $B_1$ $T_1$ प्रज्वलन्तीं , $D_{4\ 5}$ $G_{3\ 5}$ $M_4$ प्रजल्पन्तीं ( for प्रसजन्ती ) —$^b$) $Ds_2$ $G_1$ क्षिप्र- , $D_4$ $T_2$ $G_2$ क्षिप्र ( for क्षिप्त ) —$^c$) $\tilde{N}_1$ द्रिविलो , $D_5$ द्रुमिनो ( for द्रुमिलो ). —$^d$) $\acute{S}_1$ सौभाग्य ( for सौभस्य )

25 $^a$) $K_{2\ 3}$ क्षपासि ( for क्षिपासि ) $K_4$ $\tilde{N}_{1,\ 3}$ $V_{1,\ 2}$

मानुषं पतिमाश्रित्य हीनवीर्यपराक्रमम् ।। २५
व्यभिचारान्न दुष्यन्ति स्त्रियः स्त्रीमानगर्विते ।
न ह्यासीन्नियता बुद्धिर्मानुषीणां विशेषतः ।। २६
श्रूयन्ते हि स्त्रियो बह्व्यो व्यभिचारव्यतिक्रमैः ।
प्रसूता देवसंकाशान्पुत्रानमितविक्रमान् ।। २७
अतीव त्वं हि लोकेऽस्मिन्पतिधर्मवती सती ।
शुद्धा केशान्विधुन्वन्ती भाषसे यद्यदिच्छसि ।। २८
कस्य त्वमिति यच्चाहं त्वयोक्तो मत्तकाशिनि ।
कंसो नाम रिपुध्वंसी तव पुत्रो भविष्यति ।। २९
सा सरोषा पुनर्भूत्वा निन्दती तस्य तं वरम् ।
उवाच व्यथिता देवी दानवं दुष्टवादिनम् ।। ३०
धिक्ते वृत्तं सुदुर्वृत्त यः सर्वा निन्दसे स्त्रियः ।
सन्ति स्त्रियो नीचवृत्ताः सन्ति चैव पतिव्रताः ।। ३१
यास्त्वेकपत्न्यः श्रूयन्तेऽरुन्धतीप्रमुखाः स्त्रियः ।
धृतास्ताभिस्त्रयो लोकाः सर्वे वै कुलपांसन ।। ३२
यस्त्वया मम पुत्रो वै दत्तो वृत्तविनाशनः ।
न मे बहुमतस्त्वेष शृणु चापि यदुच्यते ।। ३३
उत्पत्स्यति पुमान्नीच पतिवंशे महाव्ययः ।
भविष्यति स ते मृत्युर्यश्च दत्तस्त्वया सुतः ।। ३४
द्रुमिलस्त्वेवमुक्तस्तु जगामाकाशमेव तु ।

$B_{2\ 3}$ Ds $D_{1\ 3\ 4}$ $T_{1\ 3}$ $G_3$ रोषेण ( for दो° ) $\tilde{N}_2$ $V_3$ किं मां पश्यसि रोषेण —${}^{c}$) $M_2$ आस्थाय ( for आश्रित्य ) —${}^{d}$) N ( except $Ś_1$ $D_6$ ) $T_{3\ 4}$ नीचं मृत्युवशे ( $D_6$ °पथे ) स्थितम्

26 ${}^{b}$) $T_{3.\ 4}$ $M_1$ -मद- ( for -मान- ) Ds -गर्विता, $D_6$ -गर्हिते ( for -गर्विते ) — $T_4$ om $26^{c}$–$28^{b}$ —${}^{c}$) K $\tilde{N}_{2\ 3}$ V B D $T_{1\ 3}$ $M_4$ न ह्यासां, $T_2$ $G_1$ तामसी, $M_{1-3}$ नाप्यासीन् ( for न ह्यासीन् )

27 $T_4$ om 27 ( cf v l 26 ) —${}^{a}$) $K_2$ वै ( for हि ) $K_{2\ 3}$ बाह्या ( for बह्व्यो ) —${}^{b}$) $D_6$ $T_{1\ 2}$ G $M_4$ व्यभिचाराद् ( for °चार ) $M_3$ व्यभिचारो व्यतिक्रम —${}^{c}$) $\tilde{N}_1$ $M_{1-3}$ -सदृशान् ( for -सका° ). $B_3$ प्रसूतादित्यसदृशान् —${}^{d}$) $K_3$ om ( hapl ) from पुत्रान् up to केशा ( in $28^{c}$ ) $B_2$ निश्चल ( for अमित ) $M_{1-3}$ पुत्रानेवामितौजसः

28 $T_4$ om $28^{ab}$ ( cf v l 26 ) $K_3$ om up to केशा ( in $28^{c}$ ) ( cf v l 27 ). —${}^{a}$) $K_4$ हि त्वं ( by transp ) $V_2$ स्त्रीलोके ( for लोकेऽस्मिन् ) $K_{1\ 2}$ $\tilde{N}$ $V_{1\ 3}$ B D ( except $D_6$ ) $T_{1\ 3}$ अतीव हि त्वं स्त्रीलोके —${}^{b}$) $Ś_1$ -धर्मपरा ( for °वती ) —${}^{c}$) $Ś_1$ $K_{1\ 2\ 4}$ $\tilde{N}$ $V_2$ $B_{1\ 3}$ Dn $D_{1\ 2}$ T $G_{1\ 3\ 5}$ शुद्ध-, $V_{1\ 3}$ $D_5$ शुद्धान्, $G_4$ इत्थ, $M_4$ शुभ- ( for शुद्धा ). Ds शुद्धान्विधुन्वती केशान् —${}^{d}$) $G_3$ ऽद्य ( for the first यद् ) $V_3$ [इ]ष्यसि ( for [इ]च्छसि )

29 ${}^{a}$) $T_3$ मत्कोपात् ( for यच्चाहं ) —${}^{b}$) $T_2$ $G_1$ त्वयोक्तं; $M_{1-3}$ उक्तो वै ( for त्वयोक्तो ) $V_2$ -कामिनि ( for ( for -काशिनि ) $Ś_1$ त्वयोक्तो मन्दभाषिणि —${}^{c}$) $K_{1-3}$ $\tilde{N}$ V B Dn Ds $D_{1\ 3-6}$ T G $M_4$ तस्माद् ( for नाम ) $K_4$ कंसो तस्मात्कुलध्वंसी, $D_2$ कंसो तस्माद्द्विषद्ध्वंसी

30 ${}^{a}$) $M_{1-3}$ ततो ( for पुनर् ) —${}^{b}$) $V_3$ चास्य ( for तस्य ) $S_1$ $\tilde{N}_{1\ 3}$ $V_1$ $M_3$ तद्वरम् ( for तं वरम् ) $T_{3\ 4}$ निर्दहन्तीव तद्वनम्. —${}^{d}$) $K_{1,\ 3\ 4}$ $\tilde{N}$ $V_{1,\ 2}$ B Dn Ds $D_{1-4}$ धृष्ट- ( for दुष्ट- ) $Ś_1$ $G_2$ चारिणम्, $\tilde{N}_3$ ( marg as in text ) -दानवम् ( for -वादिनम् )

31 ${}^{a}$) $D_6$ किं ( for धिक् ) $B_1$ वृत्ति ( for वृत्त ) $V_{1\ 2}$ $Ds_1$ $D_{1.\ 4}$ $T_3$ $G_1$ सुदुर्वृत्त ( for °त्त ) —${}^{b}$) $Ś_1$ $K_3$ $B_2$ Dn $T_1$ निन्दसि ( for °से ) $K_4$ $\tilde{N}_1$ $D_1$ सर्वा निन्दयसे स्त्रियः —${}^{c}$) $T_{3\ 4}$ सन्ति चैव स्त्रियो नीचाः, $M_{1-3}$ सन्तीह दुःस्त्रियो नीच —${}^{d}$) $D_6$ $T_2$ $G_{2-5}$ [इ]ह च, $T_1$ चाथ ( for चैव ). $K_{1\ 2\ 4}$ $D_2$ दृढव्रता ( for पति° )

32 ${}^{b}$) $M_3$ ह्यरुन्धती ( for ऽरु° ) — $T_4$ om $32^{c}$–$34^{d}$. —${}^{c}$) $G_4$ धृता याभिस्, $M_{1-3}$ ताभिर्धृतास् ( by transp ) $K_{1\ 2}$ $\tilde{N}_1$ V Ds $D_3$ प्रजा सर्वा ( for त्रयो लोकाः ) $K_3$ $\tilde{N}_{2,\ 3}$ $B_2$ Dn $D_{1\ 2\ 4\ 5}$ $T_3$ धृता याभिः प्रजा ( $K_3$ $D_1$ स्त्रियः ) सर्वा; $K_4$ धृता याभिरिमे सर्वे, $B_{1\ 3}$ याभिर्धृता प्रजाः सर्वा —${}^{d}$) N ( except $Ś_1$ $D_6$ ) $T_3$ लोकाश्चैव ( $D_3$ °श्चापि ) कुलाधम

33 $T_4$ om 33 ( cf v l 32 ) —${}^{a}$) $G_2$ स ( for यस् ). —${}^{b}$) $M_4$ दत्तो ( for दत्तो ) $Ś_1$ $D_1$ मद्वृत्त-; $D_4$ वृत्तिवि-; $T_2$ $G_1$ वित्तवि- ( for वृत्तवि- )

34 $T_4$ om 34 ( cf v l 32 ) —${}^{a}$) $K_2$ $\tilde{N}$ $V_{1\ 3}$ $B_{2\ 3}$ $Ds_2$ $D_{4\ 6}$ $T_{1\ 2}$ $G_{1\ 4}$ नीच, $D_{1.\ 3}$ एव, $D_2$ ( by corr ) वीर ( for नीच ) —${}^{b}$) $Ś_1$ $K_{1\ 2}$ $\tilde{N}_2$ -पक्षे ( for -वंशे ) $Ś_1$ $V_2$ [अ]द्य य, $D_4$ [अ]धम ( for [अ]व्यय ). —${}^{c}$) $D_6$ S ( except $T_{3\ 4}$ ) स तस्य मृत्युर्दुर्वृत्त.

35 $D_2$ reads $35^{ab}$ on marg —${}^{a}$) $D_6$ ऽथ, $T_1$ G M हि, $T_2$ वै ( for the second तु ) —${}^{b}$) $Ś_1$ $K_{1.\ 2}$ हि; $\tilde{N}_1$ वा, $\tilde{N}_2$ $V_3$ $D_{2.\ 3\ 5}$ $T_{3\ 4}$ च ( for तु ) $D_6$ $T_{1\ 2}$ G M] स जगामाशुविक्रमः — After $35^{ab}$, N ( except $Ś_1$ $\tilde{N}_1$ ) S ( except $M_{1-3}$ ) ins

821* तेनैव रथमुख्येन दिव्येनाप्रतिगामिना ।

जगाम च पुरीं दीना माता तदहरेव मे ॥ ३५
क्षेत्रजोऽहं सुतस्त्वेवमुग्रसेनस्य हस्तिप ।
मातापितृभ्यां संत्यक्तः स्थापितः स्वेन तेजसा ॥ ३६
उभाभ्यां चापि विद्विष्टो बान्धवैश्च विशेषतः ।
एतानपि हनिष्यामि हत्वा गोपालकावुभौ ॥ ३७
तद्गच्छ गजमारुह्य साङ्कुशप्रासतोमरः ।
स्थिरो भव महामात्र समाजद्वारि माचिरम् ॥ ३८

इति श्रीहरिवंशे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

C 4641
B 2. 28. 118
P 2 28 118

[ Ñ2 V2 3 B [आ]काश- ( for [अ]प्रति- ) ]

— $^{c}$ ) G3 [औ]शु ( for च ) M1–3 पुनर् ( for पुरी ) D2 3 रम्यां ( for दीना ) — $^{d}$ ) K1 2 4 Ñ2 3 V B Dn Ds D6 T1–3 G M4 ते , D2 3 तु , T4 च ( for मे ) — After 35, N ( except Ś1 Ñ1 ) S ( except M1–3 ) ins

822* मामेवमुक्त्वा भगवान्नारदो मुनिसत्तमः ।
दीप्यमानस्तपोवीर्यात्साक्षादग्निरिव ज्वलन् ॥
वल्लकीं वाद्यमानस्तु सप्तस्वरविमूर्छिताम् ।
गायनो लक्ष्यवीथीं च जगाम ब्रह्मणोऽन्तिकम् ॥
शृणुष्वेदं महामात्र निबोध वचनं मम ।
तथ्यं चोक्तं नारदेन त्रैकालज्ञेन धीमता ॥
अहं बलेन वीर्येण नयेन विनयेन च ।
प्रभावेणैव शौर्येण तेजसा विक्रमेण च ॥
सत्येन चैव दानेन नान्योऽस्ति सदृशः पुमान् ।
विदित्वा सर्वमात्मानं वचनं श्रद्दधाम्यहम् ॥

[ ( L 1 ) B2 3 स , G1 नम् ( for माम् ) D5 देव- ( for मुनि- ) Ñ2 V3 नारद मुनिशारद ( for $^{b}$ ) — T2 reads lines 2–6 twice — ( L 2 ) K4 तथा , D1 G4 ततो ( for तपो- ). D1 -वीर्यै ( for -वीर्यात् ) — ( L 3 ) K3 4 Ñ3 ( marg ) V1 B1 Dn D1 4 5 T1 हि , T3 4 स्तौ ( for तु ) Ñ2 V3 वल्लकीं वादयानो हि , Ñ3 °कीं वाद्यमानस्तु , D6 T2 ( both times ) G M4 वल्लकीं ( D6 वल्वीं , M4 विपञ्ची ) वादयन्नेव ( for $^{a}$ ) K1 2 D3 -विभूषिताम् , K3 B1 Ds D1 G2 -विमूर्छनात् ( for °र्छिताम् ) — ( L 4 ) B2 स ( for च ) K1–3 गायनो लक्ष्मार्गेण ( K3 °वीर्यं च ), K4 Ñ2 3 V1 गायमानो लक्ष्म( K4 नभो- , V1 लक्ष्य )वीथीं , D3 गायन्नक्षनवीथ्या च , D5 गायन्नेव स्ववीथ्या च , D6 गायल्लॅक्षणवीथीश्च , T1 2 ( both times ) G1, 3–5 M4 गायमानो ( T1 °नस्य , G4 5 M4 °नोऽथ ) मुनि श्रीमान् ( for $^{a}$ ) — ( L 5 ) G3 [इ]ह , M4 [ए]व ( for [इ]द ) — ( L 6 ) T1 3 4 M4 तथा ( for तथ्यं ) Ñ3 V3 तत्तथ्य नारदेनोक्त ( for $^{a}$ ) K3 D1 2 5 6 T1 2 ( both times ) 3 4 G M4 त्रैलोक्यज्ञेन ; Ñ2 3 ( marg ) V1 3 Ds D3 त्रिकाल° ( for त्रै° ) — ( L 7 ) D1 अहो , D3 माया- ; D5 मह्य , D6 मह्य , T1 G3 अलं , T2 G1 मन्वा , G4 मत्तो ( for अहं ) K3 4 B3 D1 om ( hapl ) lines $7^{b}$–$8^{a}$ V2 B1 2 Ds मदेन ( for नयेन ) — ( L 8 ) K1 2 V3 D3 च ( for [ए]व ) T2 G1 वीर्येण ( for शौ° ) Dn प्रमाणैर्वीर्यशौर्येण , D5 भावेन चैव शौ° ( for $^{a}$ ) — ( L 9 ) K4 मत्सदृशः ( for ऽस्ति स° ) K1 ( marg as above ) 2 नान्य हि , गणयेऽविक्रम ( for $^{b}$ ) — ( L 10 ) D6 T2 G1 M4 चैवम् ; G2 4 5 चैनम् ( for सर्वम् ) T3 4 हित्वा सर्वज्ञमात्मानम् ( for $^{a}$ ) G2 श्रद्दधामि ( for श्रद्दधामि ) ]

36 $^{a}$ ) K Ñ2 3 V Dn D1–5 T3 4 तस्य , D6 T1 2 G M तात ( for त्वेवम् ) — $^{b}$ ) T4 हि स्थित ( for हस्तिप ). M1–3 नोग्रसेनस्य हस्तिप — K2 om $36^{c}$–$37^{b}$. — $^{c}$ ) Ñ1 2 V3 B स्थितोऽहं ( for स्थापित ) Ś1 कर्मणा ( for तेजसा )

37 K2 om $37^{ab}$ ( cf v 1 36 ) — $^{a}$ ) K1 Ñ2 3 V Dn Ds D2–5 T1 3 4 अपि , K3 4 इति , Ñ1 B1 चैव , D1 अति- ( for चापि ) — After $37^{ab}$, K1 2 Ñ2 3 Dn 3 ins

823* तदिमौ घातयित्वा तु हस्तिना गोपकिल्बिषौ ।
[ Ñ2 3 तदिमौ पातयित्वाहं ( for $^{a}$ ) ]

While D6 T1, 2 G M1–3 ins after $37^{ab}$

824* बध्वा च पितरं राज्ये स्थितोऽस्मि च बलीयसा ।
[ T2 स्थापितश्च ( for स्थितोऽस्मि ) M3 बलादहम् ( for बलीयसा ) ]

— $^{d}$ ) Ś1 गोवर्धनाद् , Ñ1 B वनचराव् ( for गोपालकाव् ). K1 2 Ñ2 V3 D2 3 यादवान्कृष्णपक्षिण , D6 T1 2 G1, 3–5 M हत्वा तौ गोपदारकौ

38 $^{a}$ ) D6 रथम् ( for गजम् ) — $^{b}$ ) Ds2 -तोमरैः ( for °रः ) — $^{c}$ ) K1 4 D3 T2 स्थितो , Ñ1 स्थिरी- ( for स्थिरो ). — After 38, Ds1 ( marg ) ins

825* समागतौ च तौ दृष्ट्वा जहि गोपालकावुभौ ।

COLOPHON — *Mention of the Epic* Ñ2 Ds2 T3. — *Mention of Khila* Ś1 K3 4 Ñ2 3 V B Dn Ds D1 3 — *Sub parvan* V3 बालचरितम् , D5 पारिजातहरणम् , T4 आश्चर्यपर्व — *Adhy name* Ś1 K Ñ V B Dn Ds D1–4 कंसवाक्यम् , D6 T1 G2, 3 M4 कंसोत्पत्तिकथ-

# ७४

वैशंपायन उवाच ।
तस्मिन्नहनि निर्वृत्ते द्वितीये समुपस्थिते ।
संकीर्यत महारङ्गः पौरैर्युद्धदिदृक्षुभिः ॥ १
सचित्राष्टाश्रिचरणाः सार्गलद्वारवेदिकाः ।
सगवाक्षार्धचन्द्राश्च सतलोत्तमभूषिताः ॥ २
प्राङ्मुखैश्चारुनिर्मुक्तैर्माल्यदामावतंसितैः ।
अलंकृतैर्विराजद्भिः शारदैरिव तोयदैः ॥ ३
मञ्चागारैः सुनिर्युक्तैर्युद्धार्थं सुविभूषितैः ।
समाजवाटः शुशुभे स मेघौघैरिवार्णवः ॥ ४
स्वकर्मद्रव्ययुक्ताभिः पताकाभिर्निरन्तरम् ।
श्रेणीनां च गणानां च मञ्चा भान्त्यचलोपमाः ॥ ५
अन्तःपुरगतानां च प्रेक्षागाराण्यदूरतः ।

---

नम्, $T_4$ कसजन्मकथनम् — *Adhy no* (figures, words or both) $K_3$ 82, $\tilde{N}_3$ $V_1$ $T_2$ 84, $V_2$ $T_1$ $G_{3.5}$ $M_4$ 86, $V_3$ Dn $Ds_2$ $D_4$ $G_{2.4}$ $M_{1-3}$ 83, $B_2$ $G_1$ 85, $D_1$ 80, $D_3$ $T_3$ 89, $T_4$ 76 — *Śloka no* Dn $Ds_2$ 117, $D_{3.4}$ 118, $T_2$ 90, $G_1$ 89

## 74

1 $G_4$ om the ref. — $^{a}$) $K_3$ $T_4$ $M_{1-3}$ संवृत्ते (for निर्वृत्ते) — $^{b}$) $D_3$ द्वितीये समुपागते — $^{c}$) $Ś_1$ $D_6$ $G_2$ आकीर्यंत; K $\tilde{N}_{2.3}$ V B Dn Ds $D_{1-5}$ $T_{1-3}$ $G_{1\ 3-5}$ $M_4$ आपूर्यंत ($D_1$ °ते), $T_4$ अपूर्यत (for सकी°). $K_{3.4}$ महान् (for महा-). — After 1, $V_2$ $D_5$ ins

826* राजभिर्विषयान्तस्थै प्रधानपुरुषैस्ततः ।
नारीभिर्माथुरीयाभि श्यामाभि संघसंस्थिताः ॥
पीनस्तनीभि कंसस्य तथा बिल्वपयोधरैः ।
अपराखण्डिताभिस्तु मञ्जरीसदृशै· स्तनै· ॥

[(L 2) $V_2$ श्यामाभिर्यौवनस्थितै (for $^{b}$) — (L 4) $V_2$ अपरा· सन्ति ता भान्ति (for $^{a}$).]

$D_5$ cont. .

827* भ्रू धनुर्दृष्टिविशिखं नासा ज्या सिञ्जति तत ।
घ्नन्त्याकृष्य च कृष्णं ता· कसेन विनियोजिताः ॥
कन्दलीदण्डकाण्डेन बध्वा तं मोहपाशकैः ।
नाभीह्रदे च गम्भीरे कालयाख्ये पराजिते ॥
कंसधात्रीसुतां स्नात्वा दन्तैश्छिन्नस्तनी ततः ।
पाणिभ्यां तत्कुचौ गोपो न समर्थ प्रधर्षितुम् ॥
शकटस्य च भङ्ग स यथा कारितवाञ्शिशु ।
अस्माकं शकटीभङ्गं युग्मयो कुचयोस्तत ॥
अरिष्टं हतवान्योऽयं ककुदा सदृशौ स्तनौ ।
घातयिष्यति गोपोऽय मल्लाभ्यां बलवत्तर· ॥

2 $^{a}$) $Ś_1$ स, $K_4$ सु- (for स) $K_2$ सचित्रा विविधाभरणाः (hypermetric), $K_3$ $Ds_1$ (by corr.) $D_4$ सचित्रा भान्ति वै मञ्चा, $D_1$ विचित्राष्टा आवरणा (sic), $D_2$ सुचित्राढ्याश्चिच°, $D_3$ सचित्रतोरणैर्मार्गै·, $D_6$ $T_1$ $G_2$ सचित्राट्टालचरणा ($T_1$ °कगणै·), $T_2$ $G_{1\ 3-5}$ $M_4$ सचित्राट्टालसरणै ($G_3$ °सारेण), $T_{3.4}$ स्वर्चितास्त्वात्तचरणा — $^{b}$) $\tilde{N}_2$ साकुला (for सार्गल-) $T_{1.2}$ $G_{1\ 3-5}$ $M_4$ तोरणैः, $G_2$ $M_{1.2}$ -तोरणा (for -वेदिका·). $\tilde{N}_3$ $B_3$ साकुलद्वारवेदिका, $D_1$स्वर्गवद्वारिवे° — $^{c}$) $V_{1.2}$ $B_2$ Ds -चन्द्रश्; $T_2$ $G_{1\ 3-5}$ $M_4$ -चन्द्रैश् (for -चन्द्राश्) — $^{d}$) $Ś_1$ $K_3$ Dn शयनोत्तमभूषिता, $K_{1.2.4}$ $V_2$ सतल्पो°, $\tilde{N}_1$ सतालो°, $D_5$ $T_{1.4}$ सुतल्पोत्तमभूषिता· ($T_1$ °तै), $D_6$ $T_2$ G सुतलोत्तमभूषिकैः ($D_6$ $G_2$ °का), $T_3$ परतोरणभूषिता, $M_4$ सुतलोत्तमभूषितै

3 $^{a}$) $T_{3.4}$ प्राङ्गणैश् (for प्राङ्मुखैश्) $G_2$ च वि-, $G_{3.5}$ $M_4$ चापि (for चारु) $Ś_1$ $K_1$ निर्युक्तैर्; $K_4$ $D_3$ $M_2$ निर्यूहैर्; $D_2$ (marg) -निर्व्यूहैर् (for -निर्मुक्तैर्) $K_2$ $Ds_2$ प्राङ्मुखैश्चारुभिर्यु($Ds_2$ °र्मु)क्तैर्, $K_3$ प्राङ्मुखैर्द्वारि सयुक्तैर्· — $^{b}$) $V_1$ -मालाव- (for -दामाव-) $Ś_1$ -तसकै·, $G_5$ -दंशितै· (for -तंसितै) — $^{c}$) $Ds_2$ अलंकृतं (for °कृतैर्) — $^{d}$) $D_3$सचापैर् (for शारदैर्)

4 $^{a}$) $Ś_1$ मञ्चवारै (sic), $D_6$ मञ्चाकारं (for °गारैः). $K_4$ $\tilde{N}_{2.3}$ Ds $D_5$ $T_2$ $G_1$ सुनिर्मुक्तैर्, $D_2$ तु निर्यु° (for सुनिर्यु°) $K_2$ मञ्चागारेऽस्वनिर्युक्तैर् — $^{b}$) K $\tilde{N}_{1.3}$ $V_{1.2}$ B D (except $D_6$) $T_{3.4}$ $G_4$ युद्धाय (for °र्थं) $Ś_1$ कल्पितै (for -भूषितै) — $^{d}$) K Ñ V B D (except $D_3$) $T_1$ $G_4$ समेघौघ! $T_{3.4}$ सनिर्घोष (for स मेघौघैर्) $Ś_1$ समेघौघ इवाचल·; $T_2$ समेघैर्भैरवार्णवः

5 $^{a}$) $K_{1.2}$ $T_2$ $G_1$ स- (for स्व-) $\tilde{N}_1$ द्रव्यकर्म-, $D_3$ (*sup lin*) -कर्महस्त-; $T_4$ -कर्मभव्य- (for -कर्मद्रव्य-). $D_3$ -जुष्टाभिः, $G_2$ -रक्ताभि (for -यु°). — $^{b}$) $\tilde{N}_3$ (marg as in text) $D_6$ $T_1$ $G_{2-4}$ M अलंकृताः, $T_2$ $G_{1.5}$ अलंकृतम् (for निरन्तरम्) — $^{c}$) $\tilde{N}_2$ $V_3$ $T_1$ चागतानां; $M_{1-3}$ निगमानां (for च गणानां). — $M_{1-3}$ om (hapl.) $5^{d}$–$6^{a}$,

रेजुः काञ्चनचित्राणि रत्नज्वालाकुलानि च ॥ ६
तानि रत्नौघक्लृप्तानि ससानुप्रग्रहाणि च ।
रेजुर्जवनिकाक्षेपैः सपक्षा इव खे नगाः ॥ ७
तत्र चामरहासैश्च भूषणानां च शिञ्जितैः ।
मणीनां च विचित्राणां विचित्राश्चेरुरार्चिषः ॥ ८
गणिकानां पृथङ्मञ्चाः शुभैरास्तरणाम्बरैः ।
शोभिता वारमुख्याभिर्विमानप्रतिमौजसः ॥ ९
तत्रासनानि मुख्यानि पर्यङ्काश्च हिरण्मयाः ।
प्रकीर्णाश्च कुथाश्चित्राः सपुष्पस्तबकद्रुमाः ॥ १०
सौवर्णाः पानकुम्भाश्च पानभूम्यश्च शोभिताः ।
फलावदंशपूर्णाश्च चाङ्गेर्यः पानयोजिताः ॥ ११
अन्ये च मञ्चा बहवः काष्ठसंचयबन्धनाः ।
रेजुः प्रस्तरशस्तत्र प्रकाशा मञ्चसंचयाः ॥ १२
उत्तमागारिकाश्चान्ये सूक्ष्मजालावलोकिनः ।
स्त्रीणां प्रेक्षागृहा भान्ति राजहंसा इवाम्बरे ॥ १३
प्राङ्मुखश्चारुनिर्युक्तो मेरुशृङ्गसमप्रभः ।
रुक्मपत्रनिभस्तम्भश्चित्रनिर्योगशोभितः ॥ १४
प्रेक्षागारः स कंसस्य प्रचकाशेऽधिकं श्रिया ।
शोभितो माल्यदामैश्च निवासकृतलक्षणः ॥ १५
तस्मिन्नानाजनाकीर्णे जनौघप्रतिनादिते । C 4657 B 2 29 16 P 2 29 16

---

6 $M_{1-3}$ om $6^a$ ( cf v 1 5 ) — $^a$ ) $K_{1\ 2}$ $D_{2\ 3}$ -चराणा , $G_2$ $M_4$ -गणाना ( for -गताना ) $Ñ_1$ अन्त पुराणां च तथा — $^b$ ) B Ds $T_1$ [अ]नेकश ( for [अ]दूरत ) — $^c$ ) $D_6$ $T_{1\ 2}$ $G_{1\ 2\ 4\ 5}$ M -युक्तानि ( for -चित्राणि ) — $M_{1-3}$ om ( hapl ) $6^d$–$7^a$ — $^d$ ) $D_6$ $T_1$ $G_{2\ 3\ 5}$ रत्नजा( $T_1$ °मा )-लाकुलानि वै , $M_4$ °मालाकृतानि च — After 6, $D_2$ reads $7^{cd}$, repeating it in its proper place

7 $M_{1-3}$ om $7^a$ ( cf v 1 6 ) — $^a$ ) $K_3$ -कृष्णानि , $V_3$ चित्राणि , $G_2$ -पूर्णानि ( for -क्लृप्तानि ) — $^b$ ) $Ś_1$ $D_{1\ 6}$ $T_3$ $G_{1\ 4}$ समान , $K_4$ समग्र- ( for ससानु- ) $D_{4\ 5}$ $M_{1-3}$ सानुप्रग्रहणानि च , $G_5$ समानप्रहराणि च — $D_2$ reads $7^{cd}$ for the first time after 6 — $^d$ ) $Ś_1$ वै नरा , $K_{1\ 2\ 4}$ Ñ V B Ds $D_{1\ 2}$ ( second time ) $T_{3\ 4}$ खे घना , $D_3$ खेऽचला , $D_4$ खे गणा (for खे नगा' )

8 $^a$ ) $Ś_1$ $Ds_1$ ( *sup lin* ) $s_2$ $D_{1\ 4}$ -हारैश्च , $K_1$ -हंसैश्च , $D_2$ -हाराणां , $D_{5\ 6}$ $T_2$ $G_{1\ 3-5}$ $M_4$ भासैश्च , $T_3$ $G_2$ -हस्तैश्च ( for हासैश्च ) — $^c$ ) Bom Poona eds G( ed ) वाणिना ( for म° ) K Ñ V B D ( except $D_6$ ) $T_4$ वराहाणा ( for विचित्राणा ) $M_{1\ 2}$ मणिकाञ्चनचित्राणां — $^d$ ) $G_5$ M विमिश्राश्( for विचित्राश्) $T_2$ $G_1$ विमिश्रा रेजुरर्चिष

9 $T_2$ $G_{1\ 5}$ om $9^a$–$11^b$ $G_4$ om 9–11 — $^b$ ) $D_6$ $M_{1-3}$ शुभ्रैर् , $T_4$ शुद्धैर् ( for शुभैर् ) $V_1$ शुभैरास्तरणान्वितै·

10 $T_2$ $G_{1\ 4\ 5}$ om 10 ( cf v 1 9 ). — $^a$ ) $D_1$ $T_1$ ख्यातानि , $D_{2\ 3}$ दिव्यानि ( for मुख्यानि ) — $^d$ ) $B_2$ $D_{3\ 4\ 6}$ $T_{1\ 3.\ 4}$ $M_1$ -स्तबका ( for °क ) $K_3$ Dn सपुष्पस्तबकैर्वृता , $Ñ_2$ $V_3$ °का द्रुमैः ; $M_4$ °काश्रयाः

11 $T_2$ $G_{1\ 5}$ om $11^{ab}$ , $G_4$ om 11 ( for all, cf v 1 9 ) — $^b$ ) $Ś_1$ $K_3$ $D_2$ भूमिषु , $K_4$ -भूम्या स- , $Ñ_2$ -कुम्भाश्च , $D_1$ -भूमौ सु- ( for -भूम्यश्च ) $K_2$ $T_1$ $G_{2\ 3}$ $M_{2-4}$ पानभूमिश्च शोभना ( $G_2$ °भिता ) — $M_{1-3}$ om $11^c$-$12^b$ — $^c$ ) $D_{3\ 6}$ $T_{1\ 2}$ $G_{1\ 3\ 5}$ $M_4$ फलोप- ( for फलाव- ) $K_2$ कलशाश्चाम्बुपूर्णाश्च , $K_4$ फलवन्तश्च पूर्णाश्च , $Ñ_3$ ( marg ) $V_1$ $T_{3\ 4}$ फलावतंसपू° — $^d$ ) $K_3$ $D_4$ ( marg ) रङ्गे ये , $D_2$ वराङ्गय· ( for चाङ्गेर्यं ) $Ñ_1$ -भूमयः ( for योजिता' ) $K_2$ पानपात्रेण योजिता ; $D_6$ $T_{1\ 2}$ $G_{1\ 2\ 5}$ $M_4$ भृङ्गार्यं· पानशोभिता' ( $M_4$ °न· ), $G_3$ भृङ्गारा पानयोगिनाम्

12 $M_{1-3}$ om $12^{ab}$ ( cf v 1 11 ) — $^a$ ) $T_{3\ 4}$ विभव ( for बहव. ) — $^b$ ) $D_1$ कोश- ( for काष्ठ- ) $Ś_1$ बन्धन- , $Ñ_1$ $T_{1\ 2}$ G $M_4$ -सबन्ध- , $V_2$ -मञ्चा' स- ( for सचय- ) $D_3$ सभृता. ( for बन्धनाः ) $D_6$ काष्ठम्बबन्धवर्धना — $^c$ ) $K_{1\ 2\ 4}$ $Ñ_{2\ 3}$ V B Dn Ds $D_{1\ 2\ 4-6}$ $T_{3\ 4}$ $G_3$ प्रस्तरणाश् , $G_2$ प्रस्थानशस् , $M_4$ पर्वत° ( for प्रस्तर° ) $K_3$ रेजु. प्रकाशवक्राश्च , $D_3$ रेजु प्रस्तरणैर्युक्ता — $^d$ ) K Ñ V B D ( except $D_6$ ) $T_{3\ 4}$ शतशोऽथ सहस्रश·

13 $^a$ ) $B_2$ $D_{1\ 4}$ $T_1$ [ए]व ( for [अ]न्ये ) $Ś_1$ $K_{1\ 2}$ उत्तमागारिणश्चान्ये

14 $^a$ ) $K_4$ $Ñ_2$ $B_1$ $D_{1\ 2}$ $T_{2\ 3}$ -निर्मुक्तो , $V_2$ -निर्वृत्तो ( for -निर्युक्तो ) $Ñ_3$ $V_3$ प्राङ्मुखश्चात्र निर्मुक्तो , $V_1$ °खं चात्र निर्युक्तो — $^b$ ) $D_1$ शृङ्गमिव , $D_5$ शृङ्ग इव , $D_6$ $T_1$ $G_{2\ 4\ 5}$ -शृङ्गनिभ , $T_2$ $G_{1\ 3}$ $M_4$ °निभ ( for °सम- ) — $^c$ ) $D_1$ $M_{1-3}$ रुक्मयन्त्र ( for रुक्मपत्र ) $Ñ_2$ $D_2$ -निभस्तत्र ( for °स्तम्भश् ). $K_4$ रुक्मयत्रनिभै स्तम्भैर् , $G_2$ रूपपत्रनिभस्तत्र — $^d$ ) $B_{1\ 2}$ $D_4$ चारु ( for चित्र- ) $M_4$ निर्यूह- ( for निर्योग )

15 $^a$ ) $K_4$ $Ñ_{1\ 2}$ $V_3$ $D_4$ $T_2$ $G_1$ तु ; $Ñ_3$ $V_1$ $D_1$ om ( for स ) — $^b$ ) $Ś_1$ प्रकाशति ( for प्रचकाशे ) $D_1$ श्रियाधिकम् ( by transp ) $D_6$ $T_{1\ 2}$ $G_{1\ 2\ 4\ 5}$ M शोभतेऽभ्य( $M_{1\ 4}$ °ते ह्य )धिकं श्रिया — $^c$ ) $Ś_1$ दामैर्हि , $K_{1\ 2}$ $Ñ_3$ V $B_{1,\ 2}$ Ds

समाजवाटे संस्तब्धे कम्पमानार्णवप्रभे ॥ १६
राजा कुवलयापीडो रङ्गस्य द्वारि कुञ्जरः ।
तिष्ठत्विति समाज्ञाप्य प्रेक्षागारमथाययौ ॥ १७
स शुक्ले वाससी बिभ्रच्छ्वेतव्यजनचामरः ।
शुशुभे श्वेतमुकुटः श्वेताभ्र इव चन्द्रमाः ॥ १८
तस्य सिंहासनस्थस्य सुखासीनस्य धीमतः ।
रूपमप्रतिमं दृष्ट्वा पौराः प्रोचुर्जयाशिषः ॥ १९
ततः प्रविविशुर्मल्ला रङ्गमावल्गिताम्बराः ।
तिस्रश्च भागशः कक्ष्याः प्राविशन्बलशालिनः ॥ २०
ततस्तूर्यनिनादेन क्ष्वेडितास्फोटितेन च ।
वसुदेवसुतौ हृष्टौ रङ्गद्वारमुपस्थितौ ॥ २१
तावापतन्तौ त्वरितौ प्रतिषिद्धौ वराननौ ।

---

$D_{1-4}$ दामौघैर्, $\tilde{N}_1$ -दामाभिर्, $D_6$ $T_2$ $G_{1\ 3-5}$ $M_4$ -मालाभिर् (for -दामैश्च) $T_1$ $G_2$ शोभते माल्यमालाभिर्, $M_{1-3}$ °तेऽतीव मालाभिर् — $^d$) $\tilde{N}_3$ $T_1$ $M_3$ -लक्षणे (for °ण) $\acute{S}_1$ नृपासनकृतक्षण

16 $^c$) $K_{3\ 4}$ Dn $D_4$ सपूर्णे, $V_3$ $D_{1\ 3}$ संरब्धे, $T_1$ सुस्तम्भे (for संस्तब्धे) — $^d$) $D_5$ $T_{1\ 2}$ G $M_4$ कम्पमानार्णवोपमम् — After 16, $D_{2\ 5}$ ins

828* नन्दगोपादयो गोपा भोजराजसमाहृताः ।
निवेदितोपायनास्ते एकस्मिन्मञ्च आविशन् ।

[ = Bhāgavata P, 10 42 38 — (L 1) $D_5$ -समप्रभा (for समाहृता) ]

17 $^a$) $D_3$ गजः (for राजा) — $^b$) K $\tilde{N}_{2\ 3}$ V B D (except $D_6$) $T_{3\ 4}$ समाज- (for रङ्गस्य) — $^c$) $\acute{S}_1$ समाख्याप्य (for °ज्ञाप्य) — $^d$) K $\tilde{N}$ V B Dn Ds $D_{1-5}$ $T_{3\ 4}$ उपाययौ; $D_6$ $T_1$ $G_{2-5}$ $M_4$ अथो ययौ (for अथाययौ)

18 $^a$) $B_2$ $M_1$ सु- (for स) $V_1$ $T_1$ शुक्ल (for शुक्ले) $M_4$ शुभ्रे (for बिभ्रच्) — $^b$) $D_1$ शत-, $D_{2\ 3}$ छत्र-; $D_4$ सित- (for श्वेत-) $D_2$ $T_4$ -चामरैः, $M_{1-3}$ -वीजितः (for -चामर) — $^c$) $D_3$ चारु (for श्वेत) $T_4$ -मुकुटैः, some Mss -मकुट (for मु°) — $^d$) $K_{1\ 2\ 4}$ $\tilde{N}_{2\ 3}$ $V_1$ $B_{1\ 3}$ Dn $D_{1\ 2\ 4}$ श्वेताद्राव् (for °भ्र) $D_6$ S (except $T_{3\ 4}$) चन्द्रमा इव (by transp)

19 $^a$) $V_3$ ततः; $T_1$ तत्र (for तस्य) — $^b$) $\acute{S}_1$ स्वासीनस्य महीपतेः — $^d$) $\acute{S}_1$ ऊचुर्, $\tilde{N}_2$ $V_3$ चक्रुर् (for प्रोचुर्) $T_2$ $G_1$ जयैषिणः (for जयाशिष) $M_{1-3}$ पौराः प्रब्रूयुराशिष — After 19, $D_6$ $T_{1\ 2}$ G M G(ed.) ins

829* ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
पुरंदरं पुरस्कृत्य जग्मुर्युद्धदिदृक्षवः ॥
विमानस्थास्तु ते सर्वे विरेजुः सितचामराः ।
शक्रोऽप्यैरावतगतः शुशुभे च समाततिः ॥
ऊर्वशीप्रमुखाः सर्वा वारमुख्यास्तदाभवन् ।
शक्रपार्श्वगतास्तास्तु सितचामरपाणयः ॥
दिलीपप्रमुखास्ते तु मुनयो राजसत्तमाः ।
अनेकयुगपर्यन्तं स्थिता दिवि च शक्रवत् ।
भगवन्तं जगन्नाथं द्रष्टुं गोपविभूषितम् ।
नारदाद्यास्तु मुनयो युद्धं द्रष्टुं व्यवस्थिताः ॥
मल्लाभ्यां देवयोः सार्धं रङ्गमध्ये समुत्थितम् ।
अमरौघैस्तदाकाशं निबिडं समपद्यत ॥
रङ्गवाटस्तदा चैव जनैः सर्वैः समावृतः ।
द्यौश्चापि देवसंघैश्च निबिडाभूद्वियच्चरैः ।
एकाकारं समभवद्भूतलं च नभःस्थलम् ॥

Colophon.

[ (L 2) $M_{1-3}$ -दिदृक्षया (for °व) — (L 3) $G_{4\ 5}$ श्रित- (for सित) $G_2$ -मानसाः (for -चामराः) — (L 4) $D_6$ ऽय (for ऽपि) $D_6$ महामनाः (for समाततिः) — (L 6) $M_4$ स्थिताश् (for सित-) — (L 9) $G_{2-4}$ G(ed) गोपा (for गोप-) $G_5$ $M_4$ द्रष्टुं गोपा विभूषिता (for $^b$). — (L 10) $M_{1-3}$ समागताः (for व्यवस्थिताः). — (L 11) $G_{3\ 5}$ $M_4$ G(ed) मल्लाश्च (for मल्लाभ्यां) $T_1$ मल्लाश्च दैवतैः सार्धं (for $^a$) $T_{1,2}$ $G_{1\ 3\ 4}$ $M_4$ योद्धुं रङ्गे स( $T_2$ $G_1$ °ङ्गस )मुत्थिताः ( $T_2$ $G_1$ °तम् ), $G_5$ G(ed) योद्धुं रङ्गे समुद्यताः (for $^b$) — (L 12) $D_6$ अमरैश्च (for °रौघैस्) $T_2$ $G_1$ सदा (for तदा) — (L 13) $D_6$ रङ्गवाटैस् (for °वाटस्) $D_6$ समावृतम्, G(ed) समन्ततः (for समावृतः). — (L. 15) $D_6$ $T_2$ $G_1$ स (for च) — Colophon. — *Adhy name* $D_6$ $G_{2\ 3}$ रङ्गवाटवर्णनम् — *Adhy. no* · $T_1$ $G_{3\ 5}$ $M_4$ 87, $T_2$ 85; $G_1$ 86, $G_{2\ 4}$ $M_{1-3}$ 84; G(ed) 39.]

20 Before 20, $T_{1\ 2}$ G M ins वैशंपायन — $^a$) $T_3$ तत्र (for ततः) — $^b$) $K_3$ $\tilde{N}_{2\ 3}$ B Dn $D_{3\ 5}$ $T_{1,3\ 4}$ $M_4$ रङ्गमावलि( $M_4$ °र्जि )ताम्बराः — $^c$) $D_1$ भागतः (for °शः). $D_3$ तस्थुश्च भागशः सर्वे; $T_3$ अग्रभागेषु कक्ष्याणां. — $^d$) $K_3$ $\tilde{N}$ V B D $T_{2\ 3}$ G M प्रविश्य (for प्राविशन्).

21 $^a$) $T_1$ $M_4$ तत्र (for ततस्) $D_5$ -निनादैश्च, $M_{1-3}$ -प्रणादेन (for -निनादेन) $K_{1,2}$ $D_{2\ 3}$ ततस्तूर्यस्य नादेन. — $^b$) $\acute{S}_1$ प्रेक्षता क्ष्वेडितेन च, $V_1$ क्षोभितास्फोटितेन च, $D_5$ $T_2$ $G_{1\ 5}$ $M_4$ क्ष्वेलितास्फोटनेन च, $D_6$ $G_2$ $M_{1-3}$ प्रेक्षक- ( $D_6$ $M_2$ °क्षित )क्ष्वेडितेन च — $^c$) $K_3$ $V_1$ $D_4$ दृष्टौ (for हृष्टौ) — $^d$) $\acute{S}_1$ $\tilde{N}_2$ $V_3$ $T_{3\ 4}$ उपागतौ (for उपस्थितौ). — After 21, $D_3$ $D_5$ Bom. Poona eds. G(ed) ins.

तेन मत्तेन नागेन चोद्यमानेन वै भृशम् ॥ २२
स मत्तहस्ती दुष्टात्मा कृत्वा कुण्डलिनं करम् ।
चकार चोदितो यत्नं निहन्तुं बलकेशवौ ॥ २३
ततः प्रहसितः कृष्णस्त्रास्यमानो गजेन वै ।
कंसस्य मत्सरं चैव जगर्हे स दुरात्मनः ॥ २४
त्वरते खलु कंसोऽयं गन्तुं वैवस्वतक्षयम् ।
यो मामनेन नागेन प्रधर्षयितुमिच्छति ॥ २५
संनिकृष्टे ततो नागे गर्जमाने यथा घने ।
सहसोत्पत्य गोविन्दश्चक्रे तालस्वनं प्रभुः ॥ २६
क्ष्वेडितास्फोटितरवं कृत्वा नागस्य चाग्रतः ।
करं च श्रीधरस्तस्य प्रतिजग्राह वक्षसा ॥ २७
विषाणान्तरगो भूत्वा पुनश्चरणमध्यगः ।
बबाधे तं गजं कृष्णः पवनस्तोयदं यथा ॥ २८
स हस्ताच्च विनिष्क्रान्तो विषाणाग्राच्च दन्तिनः ।
विमुक्तः पादमध्याच्च कृष्णो द्विपममोहयत् ॥ २९
सोऽतिकायस्तु संमूढो हन्तुं कृष्णमशक्नुवन् । C 4671 B 2.29 31 P 2.29 31

---

830* बल्लवौ वस्त्रसंवीतौ सुरवन्दनभूषितौ ।
ऊर्ध्वपीडौ स्रगापीडौ बाहुशस्त्रकृतोद्यमौ ।
आस्फोटयन्तावन्योन्यं बाहू चैवार्गलापमौ ॥

[ (L 1) D5 G(ed) -चन्दन- (for -वन्दन-) —(L 2) G(ed) ऊर्ध्वापीडौ (for ऊर्ध्व°) D5 ऊर्ध्वजूटौ स्रगाविष्टौ (for $^{a}$) —(L 3) D5 बाहुभ्या (for अन्योन्य) ]

22 $^{a}$) D2 बलिनौ (for त्वरितौ) — After 22$^{ab}$, D2 ins

831* रङ्गद्वारं समासाद्य तस्मिन्गजमवस्थितम् ।
अपश्यत्कुवलयापीड कृष्णोऽम्बष्ठप्रणोदितम् ॥
बध्वा परिकरं शौरि समूह्य कुटिलालकान् ।
उवाच हस्तिपं वाचा मेघनादगभीरया ॥
अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपाक्रम माचिरम् । [5]
नो चेत्सकुञ्जरं हत्वा नयामि यमसादनम् ॥
एव निर्भत्सितोऽम्बष्ठ कुपितः कुपितं गजम् ।
नोदयामास कृष्णाय कालान्तकयमोपमम् ॥
[ = Bhāgavata P, 10 43 2–5 ]

— $^{c}$) D3 महामात्रेण नागेन — $^{d}$) D2–4 नोद्यमानेन (for चोद्य°)

23 $^{b}$) D6 T1 2 G1–3 5 M मण्डलिनं (for कु°) — $^{c}$) K2 वेगतो, K3 D3 4 नोदितो, T2 चोदितं (for °तो) — $^{d}$) Ś1 K3 प्रहर्तुं (for निहन्तु)

24 $^{a}$) K1 स हसित, M1–3 प्रणिहित (for प्रहसितः) —$^{b}$) D3 च (for वै). — $^{c}$) K1–3 Ñ V B Dn Ds D1 2 4 5 T4 तन्मतं, K4 चरितं (for मत्सरं) D3 कंसस्य तं गज दृष्ट्वा, T3 °स्य तन्मतं ज्ञात्वा — $^{d}$) K4 D3 जगाद स (D3 सु-), Ñ2 जगर्ह स, V1 3 D2 जगर्हे सु- (for °र्हे स) —For 24$^{cd}$, D6 T1 2 G M subst

832* अनेन गजमुख्येन हन्तुं व्यवसितः किल ॥
अहो तु कसो दुर्मेधा किमतो विस्मयः परः ।
इति संचिन्त्य भगवान्बलभद्रमुदैक्षत ॥
तस्य तां जगृहे बुद्धि बलभद्रो दुरात्मन ।

[ (L 2) T1 M4 दुर्धर्ष (for दुर्मेधा) G2 परम् (for पर) D6 किमतो विस्मय परम् (for $^{b}$) —(L 3) D6 G1 2 4 5 M4 बलवान् (for भग°) —(L 4) M1–3 बलदेवो महात्मन (for $^{b}$) ]

25 $^{a}$) Ñ3 D5 त्वरित (for त्वरते) — $^{b}$) K3 D5 वैवस्वतं (for °त-) — $^{c}$) K1 मामेतेन, D1 ऽयमेतेन, D6 T2 G1 2 5 M1–3 ऽऽवामनेन (for माम°) — $^{d}$) T3 4 प्रध्वंसयितुमिच्छति, G3 प्रतिषेधि°

26 $^{a}$) T3 तथा, G3 तदा (for ततो) — $^{b}$) B2 D5 तथा (for यथा) — $^{c}$) K2 [उ]त्पपात (hypermetric); M1–3 [उ]पेत्य (for [उ]त्पत्य) — $^{d}$) D3 तार- (for ताल-) Ś1 महत् (for प्रभु)

27 $^{a}$) V1 B1 क्षोभितास्फोटितरवं — $^{b}$) K1–3 Ñ2 3 V1 2 B Ds1 D2 4 T4 M सो (for च) — $^{c}$) K Ñ V B1 2 D (except D6) ससीकरं, B3 स केवल (for च श्रीधरस्) — $^{d}$) Ś1 वक्षसि, V2 संसरन् (for वक्षसा)

28 $^{b}$) T4 ततश्च (for पुनश्च) — $^{c}$) K3 Ñ V1 Dn Ds D1–3 M1 2 बबाध त, G2 स बाधेत (for बबाधे त).

29 $^{a}$) K Ñ V B2 3 Dn Ds D1–4 T3 4 हस्ताग्राद्, B1 च हस्ताद् (by transp) D5 स हस्ताग्राच्च निष्क्रान्तो —$^{b}$) V3 तु (for च) D6 T2 G M2 3 हस्तिन (for दन्तिन) — $^{c}$) Ś1 Dn2 D5 T1 पद- (for पाद-) — $^{d}$) D6 T2 G1 2 5 M1–3 विष्णुर् (for कृष्णो). K3 4 Ñ3 V1 B2 Dn D3 5 T1 4 M4 अपोथयत्, Ñ1 2 V2 3 B1 3 Ds T3 अयोध°, D1 अघात° (for अमोह°)

30 $^{a}$) V3 B3 सोऽभि-, T3 हत-, T4 अति- (for सोऽति-). Ś1 सु-, Ñ1 ऽति- (for तु) D6 T2 G2–5 M4 सक्रुद्धो (for समूढो) — $^{b}$) K1 गन्तु कृष्णम्, T1 M4 कृष्णं हन्तुम् (by transp) D3 च नाशकत् (for अशक्नुवन्) — $^{c}$) T2 तु स्वेषु, T3 4 पुनः स्व- (for स्वेष्वेव) Ñ1 3 V1 स गज स्वेषु

गजः स्वेष्वेव गात्रेषु मथ्यमानो ररास ह ॥ ३०
पपात भूमौ जानुभ्यां दशनाभ्यां तुतोद ह ।
मदं सुस्राव रोषाच्च घर्मापाये यथा घनः ॥ ३१
कृष्णस्तु तेन नागेन क्रीडित्वा शिशुना यथा ।
निधनाय मतिं चक्रे कंसद्विष्टेन चेतसा ॥ ३२
स तस्य प्रमुखे पादं कृत्वा कुम्भादनन्तरम् ।
दोर्भ्यां विषाणमुत्पाट्य तेनैव प्राहरत्तदा ॥ ३३
स तेन वज्रकल्पेन स्वेन दन्तेन कुञ्जरः ।
हन्यमानः शकृन्मूत्रं चकारार्तो ररास ह ॥ ३४
कृष्णजर्जरिताङ्गस्य कुञ्जरस्यार्तचेतसः ।
कटाभ्यामतिसुस्राव वेगवद्भूरि शोणितम् ॥ ३५
लाङ्गूलं चास्य वेगेन निश्चकर्ष हलायुधः ।
शैलपृष्ठार्धसंलीनं वैनतेय इवोरगम् ॥ ३६
तेनैव गजदन्तेन कृष्णो हत्वा तु कुञ्जरम् ।
जघानैकप्रहारेण गजारोहमथोल्बणम् ॥ ३७
सोऽऽर्तनादं महत्कृत्वा विदन्तो दन्तिनां वरः ।

गात्रेषु· — d ) M1 वध्यमानो ( for मथ्य° ) D3 स ( for ह )

31 a ) K4 Ñ2 3 V1 3 B1. 3 D1 2 5 T3 भूमिं ( for भूमौ ) — b ) M4 दन्ताभ्यां तु ( for दशनाभ्यां ) K3 मुमोच ( for तुतोद ) Ś1 K1 4 Ñ2 3 V1 3 B Dn Ds D1 2 T4 च; D5 स ( for ह ) D3 दन्ताभ्यां चैव ताडयन् — c ) T3 मूत्रं ( for मदं ). D6 T1 2 G M तु ( for च ) T4 मूत्र सुस्राव कोशाच्च — d ) Ś1 [अ]म्बुद· ( for घन )

32 b ) N ( except Ś1 D6 ) T3 4 क्रीडित्वा शिशुलीलया — c ) D3 विनाशाय, T3 वधायास्य ( for निधनाय ) — d ) G4 -विद्वेष- ( for द्विष्टेन )

33 a ) V1 नतस्य, G3 त्रस्तस्य ( for स तस्य ) D3 च ( for प्र- ) T3 नादं; T4 नाम ( for पादं ) — b ) Ñ2 कृत्वा कुम्भे पदान्तरम्; V3 B T3 कृत्वा कुम्भान्तरे तदा ( V3 पुनः, T3 वधम् ), T4 कृत्वा कुम्भोदरे पदम् — d ) Ñ3 च ( for [ए]व ). D6 तत ( for तदा )

34 a ) Dn1 एतेन, D3 तेन वै ( for स तेन ) V2 स तेन स्वेन दन्तेन वज्रकल्पेन दन्तिना. — c ) D6 T1 2 G1 2 4 भज्यमान ( for हन्य° ) — d ) K3 4 Ñ2 3 (marg) V B Dn Ds D1 2 4 5 T3 G3 4 मुमोचार्तो, T2 G1 ससर्ज च; G2 निरार्तो वै, G5 ससर्जार्तो ( for चकारार्तो ) K1. 2 M1–3 च ( for ह ) Ñ1 D3 मुमोचार्तो ररास च ( D3 सः ); Ñ3 मुमोचार्तरवै· सह, T1 M4 विससर्ज ररास च; T4 मुमोचार्तो रुरोद ह

35 G1 om 35ab — a ) B3 स कृष्णजरिताङ्गस्य, D1 कृष्णेन निर्जिता° — b ) Ś1 K3 D2 T3 [अ]ल्प, V3 वि- ( for [आ]र्त- ) K1. 2 कुञ्जरस्याल्पमेधसः — c ) K1 2 4 अथ, Ñ2 V3 B3 T1 M4 अभि- ( for अति- ) D3 कुम्भाभ्यामथ सुस्राव — d ) D1 मुखे च; M1–3 फेनवद् ( for वेग° )

36 b ) D6 G4. 5 निचकर्त, T2 चकर्त च, T4 M विचकर्ष; G1 चकर्ष च, G2 निचकर्ष ( for निश्च° )

37 b ) Bom Poona eds G(ed.) दन्तिनम् ( for कुञ्जरम् ) — d ) K3. 4 D1 तमुल्बणम्; T2 मदोद्भवम्; G1 अथो बल ( for अथोल्बणम् ) Ñ3 V1 3 B Dn Ds D2 4. 5 T1 3. 4 गजारोहणमुल्बणम्, D3 नागारोहिणमु°

38 a ) K4 सोऽति-, V1 D2 मार्त-, V3 T3 4 स तु, T2 G1 सोऽथ, M1–3 स च ( for सोऽऽर्त- ) G3 तत ( for महत् ) — b ) Ñ3 ( marg as in text ) निरुदन्, D6 T1 G2 5 M1–3 विनदन्, T2 G1 व्यनदद् ( for विदन्तो ) — c ) Ñ1 -गजारोहो ( for महामात्रो ) — d ) Ś1 T1 M4 वज्राहत, G1 वज्रच्छिन्न ( for °भिन्न ) — K Ñ2 3 V B D S ( except M1–3 ) ins after 38 Ñ1 after 39ab

833* ततस्तौ तु गजाङ्गानि प्रगृह्य रणकर्कशौ ।
गजस्य पादरक्षांश्च जघ्नतुः पुरुषर्षभौ ॥
तांश्च हत्वा विविशतुर्मध्यं रङ्गस्य तावुभौ ।
नासत्याविवाश्विनौ स्वर्गादवतीर्णाविवेच्छया ॥
वृष्ण्यन्धकाश्च भोजाश्च ददृशुर्वनमालिनौ ।
क्ष्वेडितोत्क्रुष्टनादेन बाह्वोरास्फोटितेन च ॥
सिंहनादैश्च तालैश्च हर्षयामासतुर्जनम् ॥
तौ दृष्ट्वा भोजराजस्तु विषसाद वृथामतिः ।
पौराणामनुरागं च हर्षं चालक्ष्य भारत ॥

[ ( L 1 ) Ñ2 तु तौ ( by transp ) K3. 4 Ñ1 V2 Dn D1 4 6 T1 2 G1 3–5 M4 ततस्तौ तो( K4 V2 D4 6 वा )-रणाङ्गानि, V3 °स्तौ गजदन्तौ तु, D2 °स्तौ तु विषाणं च, G2 ततस्तौ तोरणौघानि ( for a ). — ( L 2 ) D2 T1 गजांश्च ( for गजस्य ) Ñ3 ( marg ) V1 3 -रक्षौघान्, D4 5 -रक्षान्वै, T3 4 रक्षास्तान् ( for -रक्षाश्च ). — D6 T2 G om ( hapl ) line 3 — ( L 3 ) T1 मध्यरङ्ग च ( for मध्यं रङ्गस्य ). — M4 om lines 4–5 — ( L. 4 ) Ñ1 2 V3 T1 यदृच्छया ( for इवेच्छया ). — ( L 5 ) D3 च तौ बालौ, T2 G1 कौकुराश्च ( for च भोजाश्च ) Ñ2 3 V1 3 ददृशुर्बलशालिनौ ( for b ) — ( L. 6 ) B1 क्षोभितोत्क्रुष्टनादेन, T2 क्ष्वेळिता कृष्णनादेन, G2–5 M4 क्ष्वेलितोद्घुष्ट° ( for a ) D5 6 T1 M4 आस्फोटनेन ( for °टितेन ) Ñ1 वेलाबाधैश्च तौ नरौ ( sic ) ( for b ). — ( L 7 ) Ñ1 हर्षयामासुरञ्जसा ( for b ). — ( L 8 ) D3 दृष्ट्वा तौ ( by transp ). T1 महामतिः ( for

पपात समहामात्रो वज्रभिन्न इवाचलः ॥ ३८
तं हत्वा पुण्डरीकाक्षो नदन्तं दन्तिनां वरम् ।
अवतीर्णोऽर्णवाकारं समाजं सहपूर्वजः ॥ ३९

इति श्रीहरिवंशे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

# ७५

वैशंपायन उवाच ।
प्रविशन्तं तु वेगेन मारुतावल्गिताम्बरम् ।
पूर्वजं पुरतः कृत्वा कृष्णं कमललोचनम् ॥ १
गजदन्तकृतोल्लेखं सुभुजं देवकीसुतम् ।
लीलाकृताङ्गदं वीरं मदेन रुधिरेण च ॥ २
वल्गमानं यथा सिंहं गर्जमानं यथा घनम् ।
बाहुशब्दप्रहारेण चालयन्तं वसुंधराम् ॥ ३
औग्रसेनिः समालोक्य दन्तिदन्तोद्यतायुधम् ।
कृष्णं भृशायस्तमुखः सरोषं समुदैक्षत ॥ ४
भुजासक्तेन शुशुभे गजदन्तेन केशवः । C 4690 B 2 30 5 P 2 30 5

---

वृथा° ) — ( L 9 ) $K_2$ भावत ( for भारत ) ]

39 $\tilde{N}_1$ reads $39^{ab}$ for the first time before 833* — $^b$) $\acute{S}_1$ $K_9$ विदन्तं, $K_{1\ 2}$ दन्तिन ( for नदन्तं ) — $^d$) $D_8$ स रङ्गं ( for समाज ) $B_1$ स समाज सपूर्वज. — After 39, $D_2$ ins

834* मल्लानामशनिर्नृणां नरवर स्त्रीणां स्मरो मूर्तिमा
न्गोपाना स्वजनोऽसता क्षितिभुजां शास्ता स्वपित्रो शिशु. ।
मृत्युर्भोजपतेर्विराडविदुषा तत्त्वं परं योगिनां
वृष्णीना परदेवतेति विदितो रङ्गं प्रविष्टो हरि ॥
[ = Bhāgavata P , 10 43 17 ]

On the other hand, $D_6$ S ( except $T_{3\ 4}$ ) ins after 39

835* देवाश्च मुनय. सर्वे नमस्कृत्वा गदाधरम् ।
विमानस्थास्ततो युद्धं दाष्टिं द्रष्टुं समादधु ॥
तत' कृष्णो महाबाहुर्बलदेवेन सयुत' ।
जनांश्च मनसा पूज्य कस हन्तुं समुद्यत ॥

[ ( L 1 ) $D_6$ $G_{4\ 5}$ $M_4$ नमस्कृत्य ( for °स्कृत्वा ) — ( L 2 ) $M_{1-3}$ द्रष्टु ( for युद्ध ) $T_2$ $G_1$ द्रष्टु दृष्टिं ( by transp ), $M_{1-3}$ युक्तं तत्र $T_1$ $M_4$ संद्रष्टुं वै मनो दधु ( for $^b$) — $D_6$ $G_2$ $M_{1-3}$ om line 3 — ( L 3 ) $T_2$ $G_1$ सवृत ( for संयुत ) — ( L 4 ) $D_6$ $G_2$ $M_{1-3}$ मनासि , $G_3$ जन च ( for जनाश्च ) $M_4$ वचसा ( for मनसा ). $D_6$ $G_2$ समुद्यतम् ( for °तः ) ]

COLOPHON. — *Mention of the Epic* $K_3$ $\tilde{N}_2$ $B_3$ $Ds_2$ $T_3$ — *Mention of Khila* $K_{3\ 4}$ $\tilde{N}_{2\ 3}$ V B Ds $D_{1-3}$ — *Sub-parvan* $T_4$ आश्चर्यपर्व — *Adhy name* N ( except $D_6$ ) $T_4$ $M_4$ कुवलयापीडवधः ; $G_2$ कुवलयापीडगजवध — *Adhy no* ( figures, words or both ) $K_3$ 83 , $\tilde{N}_3$ $V_1$ $G_{2\ 4}$ $M_{1-3}$ 85 , $V_2$ 87 , $V_3$ Dn $Ds_2$ $D_4$ 84 , $B_2$ $T_2$ 86 , $D_1$ 81 , $D_3$ $T_3$ 90 , $T_1$ $G_{3\ 5}$ $M_4$ 88 , $T_4$ 77 — *Śloka no* Dn 43 , $Ds_2$ 45 , $D_{3\ 4}$ 44

## 75

1 $D_5$ om the ref — $^b$) $Dn_2$ $D_3$ मारुतावलिताम्बरम्. — $^c$) $V_3$ पृष्ठत ( for पुरत ) — $^d$) $\tilde{N}_1$ $Ds_2$ $D_1$ कृष्ण: कमललोचन·

2 $^a$) $D_3$ -कृताश्लेषं ( for -कृतोल्लेखं ) — $^c$) $V_1$ -हृताङ्गदं ( for कृता° ) $\acute{S}_1$ युद्धसामर्थ्यवेगेन , $K_{1\ 2\ 4}$ G(ed) युद्धसमर्दयोगेन , $T_{1\ 2}$ G M लीलाकृताङ्गरागं तं. — $^d$) $D_4$ रुचिरेण ( for रुधि° ) $\tilde{N}_1$ तु ( for च )

3 $^a$) $\tilde{N}_3$ (marg ) रङ्गमाणं , $D_3$ गर्जन्तं च ( for वल्गमानं ) — $^b$) $\acute{S}_1$ स्फूर्जमानं , K $\tilde{N}$ V B Dn Ds $D_{1\ 3-5}$ $T_{3\ 4}$ व्यूह° ( for गर्ज° ) $D_2$ व्यूहमानं घनं तथा — $^c$) $\acute{S}_1$ $K_{1\ 2}$ $D_{2.\ 3}$ -प्रणादेन , $T_1$ $G_{1-3\ 5}$ -प्रकारेण , $T_2$ प्रमाणेन ( for प्रहारेण ).

4 $^a$) $K_4$ उग्रसेन ; $D_3$ रङ्गे तु तं , $D_5$ औग्रसेनिं , $T_4$ °सेन ( for °सेनि ) $\acute{S}_1$ $K_{1\ 2}$ तु त दृष्ट्वा ( for समालोक्य ). — $^b$) $V_2$ दन्तिदन्तोद्यत युधि — $^c$) $V_3$ $B_3$ $G_{3\ 4}$ -मुखं ( for -मुख ) $D_3$ भृशायस्तमुखः कंस· , $T_2$ $G_1$ कृष्णमायोधनमुखं — $^d$) $D_3$ सरोष. ( for °ष ) — After 4, $D_6$ S ( except $T_{3\ 4}$ ) ins .

836* रङ्गस्था अपि ते सर्वे नेत्रैरनिमिषैस्तथा ।
ददृशुः पुण्डरीकाक्षं प्रहृष्टेनान्तरात्मना ॥

चकार मथुरां वीरः स रत्नाकरभूषणाम् ॥ २
कस्यचित्त्वथ कालस्य सहितौ रामकेशवौ ।
गुरुं सांदीपनिं काश्यमवन्तिपुरवासिनम् ।
धनुर्वेदचिकीर्षार्थमुभौ तावभिजग्मतुः ॥ ३
निवेद्य गोत्रं स्वाध्यायमाचारेणाभ्यलंकृतौ ।
शुश्रूषू निरहंकारावुभौ रामजनार्दनौ ।
प्रतिजग्राह तौ काश्यो विद्याः प्रादाच्च केवलाः ॥ ४
तौ च श्रुतिधरौ वीरौ यथावत्प्रतिपद्यताम् ।
अहोरात्रैश्चतुःषष्ट्या साङ्गं वेदमधीयताम् ॥ ५
चतुष्पादे धनुर्वेदे चास्त्रग्रामे ससंग्रहे ।
अचिरेणैव कालेन गुरुस्तावभ्यशिक्षयत् ॥ ६
अतीवामानुषीं मेधां तयोश्चिन्त्य गुरुस्तदा ।
मेने तावागतौ देवावुभौ चन्द्रदिवाकरौ ॥ ७
ददर्श च महात्मानावुभौ तावपि पर्वसु ।

---

time ). 4 5 ( second time ) 6 T1 2 4 ( second time ) G M4. 4 विभु , Ñ2 V3 ( both second time ) प्रभु , B3 ( second time ) वृत: ( for ज्वलन् ) — $^{c}$ ) K Ñ V B Dn Ds D1–5 ( all except Ds both times ) T1 3 4 ( both both times ) चचार ( for चकार ). K Ñ V B1, 2 D ( except Ds D6 ) T3 4 Bom. Poona eds ( all second time ) प्रीत· ( for वीरः ) — $^{d}$ ) K2 ( second time ) वनान्तर- , K3 ( second time ) 4 ( both times ) Ñ1 ( first time ) 2 ( both times ) 3 V1 B Dn ( last seven second time ) D1 2 ( both both times ) 3 ( first time ) 4 5 ( both both times ) T4 ( second time ) M1, 3 वनाकर- , T1 2 G M2 4 धनागार- ( for रत्नाकर- ) Ñ3 ( marg ) V1 3 B3 ( all second time ) -भूषिताम् ( for -भूषणाम् ) K1 ( second time ) स वनाकारतोरणाम् , D3 ( second time ) सर्वलोकस्य भूषणम् ; D6 सदनागारभूषणाम् ; T3 ( second time ) धर्मो विग्रहवानिव

3 $^{c}$ ) Ś1 K1, 2 4 D2 सांदीपिनं , K3 D1 6 G1 °पनं ( for °पनिं ). — $^{d}$ ) D3 4 6 T2 G1 3 अवन्ती- . — $^{f}$ ) B1 तम् , T2 G2 3 5 [ए]व ( for ताव् ). Ś1 अपि , Ñ1 T1 अधि- ; M1 2 प्रति- ( for अभि- ).

4 $^{b}$ ) Ś1 K1 [अ]भिसवृतौ , D6 T1 4 G3 5 M4 [अ]प्यलंकृतौ , T2 G1 ह्यलं° ( for [अ]भ्यलं° ) — $^{c}$ ) D1 T2 G1 M शुश्रूषा- ( for °षू ) Ñ1 शुश्रूषू निरभिमानाव् . — $^{d}$ ) Ñ1 सुतौ ( for उभौ ). — After $4^{cd}$, D6 T1 2 G M ins :

877* चक्रतुः पुण्डरीकाक्षौ विद्याग्रहणलालसौ ।

— $^{f}$ ) T3 विद्यां ( for विद्याः ) T2, 3 केवलाम् , G1 °लौ ( for °लाः ).

5 V3 om $5^{a}$–$7^{b}$ — $^{a}$ ) K1 तु ( for च ) K2 Ñ2 D2 T1 G5 M श्रुतधरौ , K3 श्रुतिपरौ , D3 श्रद्धाधरौ , T2 G1 व्रत° , G4 मूल° ( for श्रुति° ) — $^{b}$ ) K1, 2 Ñ3 V1 B3 Ds D2 G4 5 M प्रत्यपद्यताम् ( for प्रति° ) D3 यथान्याय प्रपद्यताम् — $^{c}$ ) Ś1 K1 B3 अहोरात्र- ( for °त्रैश् ). — $^{d}$ ) K2, 4 Ñ Ds D1 साङ्ग- ( for साङ्ग )). Ś1 अधीयतु. ( for °ताम् ) K3 D4 साङ्गवेदमधीयतु . — For $5^{cd}$, D6 T1, 2 G M subst. :

878* साङ्गं वेदमधीयेतां चतुःषष्ट्या दिनैस्तथा ।

6 V3 om. 6 ( cf v. 1 5 ). — $^{a}$ ) Ñ3 ( marg ) चतुर्वेदे ( for °ष्पादे ) Ś1 K3 B1 2 Dn D4, 5 Cn चतुष्पादं धनुर्वेदं , V1 °ष्पादचतुर्वेदे ❀ Cn : चतुष्पादं दीक्षासंग्रहसिद्धिप्रयोगाख्यैश्चतुर्भि पादैरुपेतम् । ❀ — $^{b}$ ) K2 D1 शास्त्रग्रामे , Ñ V1 2 B Ds D3 4 T3, 4 G2 M4 शस्त्र° , D6 T1 G2–5 अ( T1 G3 ह्य )स्त्र° ( for चास्त्र° ) Ś1 K3 Dn Cn श( K3 शा )स्त्रग्रामं ससग्रहम् , K4 T2 G1 सास्त्र( T2 हस्त- ; G1 अस्त्र )ग्रामे सुसंग्रहे , D2 शस्त्रग्रामे च सग्रहे , D5 शस्त्रसग्रामसग्रहे ❀ Cn · ससंग्रहं सरहस्यम् । ❀ — After $6^{ab}$, D6 S ( except T3 4 ) G( ed ) ins :

879* लेख्य च गणितं चोभौ प्राप्तुतां यदुनन्दनौ ।
गान्धर्ववेद कृत्स्न च तथा लेख्याश्च तावुभौ ।
हस्तिशिक्षाश्वशिक्षाश्च द्वादशाहेन चाप्नुताम् ॥
तावुभौ जग्मतुर्वीरौ गुरुं सांदीपनिं ततः ।
धनुर्वेदचिकीर्षार्थं धर्मज्ञौ धर्मचारिणौ ॥
ताविष्वासवराचार्यमभिगम्य प्रणम्य च ।
तेन तौ सत्कृतौ राजन्विचरन्ताववन्तिषु ॥
पञ्चाशद्भिरहोरात्रैर्दशाङ्गं सुप्रतिष्ठितम् ।
सरहस्यं धनुर्वेदं सकलं ताववाप्नुताम् ॥

[ ( L 1 ) G( ed. ) लेखं ( for लेख्यं ). — ( L. 2 ) D6 लेख्याश् , T1 G3 लेख्यं ( for लेख्याश् ). — T1 om. ( hapl. ) lines 4–9 — ( L 4 ) D6 तथा , G2 मुनिम् ( for तत ). — G3 om lines 8–9 — ( L 9 ) T2 [अ]थाप्नुताम् ( for [अ]वा° ) ]

— $^{c}$ ) B1 सुचिरेण ( for अ° ) G4 काले तु ( for कालेन ) — $^{d}$ ) Ś1 गुरुस्तावन्वजानत ; K3 °भ्यामशिक्षयत् .

7 V3 om $7^{ab}$ ( cf v 1. 5 ) — $^{a}$ ) D6 T1 G2 M1 अतीतमानुषीं मेधां ( T1 मायां ), T2 G1 3–5 M2 3 °तां मानुषीं मेधां — $^{b}$ ) G1, 4 तथा ( for तदा ). K Ñ2, 3 V1 2 B D ( except D6 ) T3 4 चिन्तयित्वा तयोर्गुरु — $^{c}$ ) N ( except Ś1 D6 ) T3 4 वीराव् ( for देवाव् ) — $^{d}$ ) K Ñ V1, 2 B D ( except D6 ) T3 4 देवौ , V3 मेने ( for उभौ ).

पूजयन्तौ महादेवं साक्षात्त्र्यक्षमवस्थितम् ॥ ८
गुरुं सांदीपनिं कृष्णः कृतकृत्योऽभ्यभाषत ।
गुर्वर्थं किं ददानीति रामेण सह भारत ॥ ९
तयोः प्रभावं स ज्ञात्वा गुरुः प्रोवाच हृष्टवत् ।
पुत्रमिच्छाम्यहं दत्तं यो मृतो लवणाम्भसि ॥ १०
पुत्र एको हि मे जातः स चापि तिमिना हृतः ।
प्रभासे तीर्थयात्रायां तं मे त्वं पुनरानय ॥ ११
तथेत्येवाब्रवीत्कृष्णो रामस्यानुमते स्थितः ।
गत्वा समुद्रं तेजस्वी विवेशान्तर्जलं हरिः ॥ १२
समुद्रः प्राञ्जलिर्भूत्वा दर्शयामास तं तदा ।
तमाह कृष्णः क्वासौ मोः पुत्रः सांदीपनेरिति ॥ १३
समुद्रस्तमुवाचेदं दैत्यः पञ्चजनो महान् ।
तिमिरूपेण तं बालं ग्रस्तवानिति माधव ॥ १४
स पञ्चजनमासाद्य जघान पुरुषोत्तमः ।
न चाससाद तं बालं गुरुपुत्रं तदाच्युतः ॥ १५
स तु पञ्चजनं हत्वा शङ्खं लेभे जनार्दनः ।
यः स देवमनुष्येषु पाञ्चजन्य इति श्रुतः ॥ १६
ततो वैवस्वतं देवं निर्जित्य पुरुषोत्तमः । C 4921 B 2 33 18 P 2 33 18

---

8 a) D6 T2 G1–3 5 M1–3 स ददर्श (for ददर्श च) — b) D2 (marg as in text) सर्वेश, T4 [अ]तीव च (for पर्वसु) — c) Ñ1 महादेवौ, V1 यथा देव (for महादेव) — d) Ś1 D2 (marg) धिष्ण्येषु, D1 3 5 T4 विष्णुम् (for त्र्यक्षम्) K1 2 4 Ñ V1 2 B Dn D3 D4 T3 साक्षाद्विष्णुं व्यवस्थितम्, K3 °द्विष्णु च सस्थितम्, M1 °त्र्यक्षाविवापरौ, M3 °त्र्यक्षमिवापरम्

9 b) Ś1 वचोऽब्रवीत्, K2 3 Ñ3 V1 Dn D1 4 5 ऽन्वभाषत, V3 ऽनुचोदयन्, D6 T1 2 G M ऽभ्य(D6 G2 ह्य)चोदयत् (for ऽभ्यभाषत) — c) K Ñ2. 3 V1 3 D1 2 4–6 T3 4 G1 4 M2–4 ददामि (for °नि) D3 गुर्वर्थे कि ददामीति — d) Ś1 सह रामेण भारत, D6 S (except T3 4) रामेण सहितस्तदा

10 b) Ś1 हर्षितः, B1 D2–4 6 G2 M1 3 हृष्टवान्, T1 दुष्करम् (for हृष्टवत्) — c) V3 B3 T3 4 दातुं (for दत्तं) — d) V2 मृतो यो (by transp) Ś1 यो हृतो लवणाम्भसा, T2 G1 यो मृतो लवणाम्बुधौ

11 a) Ś1 मम; Ñ1 2 B3 T3 4 G5 M1 2 4 ऽपि मे (for हि मे) — b) K1 3 4 Ñ1 2 V3 Dn1 Ds2 D2 3 5 G5 हृत. (for हृतः) — d) Ś1 तमेतं, K2 त्वमेवं, Ñ2 V3 तस्मात्त्वं; B तमेव (for त मे त्व) D4 पुत्रम् (for पुनर्)

12 a) T2 G1 ते तथेति, G4 तथेति च (for °त्येव) M1–3 विष्णू (for कृष्णो) — d) D6 G2–4 M1–3 प्रविश्य (for विवेश) Ś1 विवेशान्तर्जले ततः

13 b) K3 Dn2 D5 स्वं (for तं) — c) T3 तदा (for तम्) V3 कोऽसौ, T2 G1 3–5 M4 क्वास्ते (for क्वासौ). — d) V2 सुतः (for पुत्र·) — After 13, G4 ins 881*

14 G4 om 14–16 — a) N (except Ś1 V3 D6) T3 4 G2 5 प्रत्युवाच (for तमु°) G3 5 [ए]वं (for [इ]दं) — c) Ñ3 V1 तं बालं तिमिरूपेण — d) K1 2 4 Ñ V B D1–3 5 T3. 4 भारत, D5 T1 2 G1–3. 5 M1–3 केशवम् (T2 G1. 3, 5 °व), M4 मे मति (for माधव) D5 गुरुपुत्रं तवाच्युत — After 14, D5 G5 ins

880* उन्मथ्य सलिलादस्माद्ग्रस्तवानिति भारत ।

15 G4 om 15 (cf v l 14) — a) K1 D1 तं (for स) — b) Ñ3 (marg) V1 जगाम (for जघान) — T4 om (hapl) $15^{c}$–$17^{b}$ G(ed) om $15^{cd}$

16 G4 om 16 (cf l 14) T4 om 16 (cf v l 15) K2 om $16^{a}$–$17^{b}$ — a) B1 2 च (for तु) — c) T2 G1 4 5 M4 तु (for स) Ñ2 V3 यश्चासौ देवमानुष्ये — d) D6 श्रुति, T1 3 G3 5 स्मृत (for श्रुतः) — D6 T1 2 G1–3 5 M ins after 16 G4 after 13.

881* गत्वा यमपुरं विष्णु. क्रोधसंरक्तलोचन ।
आसनस्थ ततो विष्णु प्रोवाच यममूर्जितम् ।
दीयतां पुत्र इत्येवं काश्यसांदीपनेरिति ॥
तमुवाच ततो विष्णुं मृत्युना चाहृतो हरे ।
एवमुक्तस्तदा कृष्णो यमेनामितविक्रमः । [5]
अहो धार्ष्ट्यं ततो मृत्योरित्युक्त्वा धनुराददे ॥
आदाय निशितं बाणं दीयतामिति चाब्रवीत् ।
क्रुद्धं विष्णुं समाज्ञाय दत्तवान्किल बालकम् ॥

[ G4 om (hapl) lines 1–3 —(L 1) T2 -पुरीं (for -पुरं) M4 कृष्ण (for विष्णुः) M2 om (hapl) $1^{b}$–$2^{a}$ T1 कोप-(for क्रोध-) — (L 2) T2 G5 आसनस्थस् (for °स्थ) G2 अदाद् (for ततो) — (L 4) T1 स (for तम्). G5 विष्णुर् (for विष्णु) T2 [आ]हृतो हृदे, G1 [आ]हृत हरे, G3 हृतो हरे (for [आ]हृतो हरे) — M1–3 om line 5 ]

17 T4 om $17^{ab}$ (cf v l 15) K2 om $17^{ab}$ (cf v l. 16) T2 om $17^{ab}$ K1 Ñ2 3 V1 2 B 2 3 Dn D2 5 T3 G2 read $17^{ab}$ twice — a) B2 (second time) Bom Poona eds. घोरं (for देवं). K1 B3 D2, 5 (all first time)

आनिनाय गुरोः पुत्रं चिरनष्टं यमक्षयात् ॥ १७
ततः सांदीपनेः पुत्रः प्रसादादमितौजसः ।
दीर्घकालगतः प्रेतः पुनरासीच्छरीरवान् ॥ १८
तदशक्यमचिन्त्यं च दृष्ट्वा सुमहदद्भुतम् ।
सर्वेषामेव भूतानां विस्मयः समजायत ॥ १९
स गुरोः पुत्रमादाय पाञ्चजन्यं च माधवः ।
रत्नानि च महार्हाणि पुनरायाज्जगत्पतिः ॥ २०
रक्षसस्तस्य रत्नानि महार्हाणि बहूनि च ।
आनाय्य वेदयामास गुरवे वासवानुजः ॥ २१
गदापरिघयुद्धेषु सर्वास्त्रेषु च तावुभौ ।
अचिरान्मुख्यतां प्राप्तौ सर्वलोके धनुर्भृताम् ॥ २२
ततः सांदीपनेः पुत्रं तद्रूपवयसं तदा ।
प्रादात्कृष्णः प्रतीताय सह रत्नैरुदारधीः ॥ २३
चिरनष्टेन पुत्रेण काश्यः सांदीपनिस्तदा ।
समेत्य मुमुदे राजन्पूजयन्रामकेशवौ ॥ २४
कृतास्त्रौ तावुभौ वीरौ गुरुमामन्त्र्य सुव्रतौ ।

---

ततो वैवस्वतं पुरं; Dn (both first time) ततो जगाम भगवान् — $^{b}$) K1 D2 5 T3 (all first time) जगाम; Ñ2 (first time) गत्वा स, Ñ3 V1 2 B3 (all first time) गत. स; G2 (both times) निर्भर्त्स्य (for निर्जित्य) Dn (both first time) वैवस्वतपुरं महत् — Ñ1 B1 D3 ins after $17^{ab}$ Ñ2 3 B2 3 after the second occurrence of $17^{ab}$

882* आससाद च तं बालं गुरुपुत्रं तदाच्युत ।

[ Ñ1 न चाससाद त बालं (for $^{a}$) B3 तथा (for तदा) ]
— Dn ins after the first occurrence of $17^{ab}$

883* शङ्खमापूर्य गोविन्दस्त्रासयामास वै जनम् ।

Dn cont K1 Ñ2. 3 V1 2 B2 3 D2 ins after the first occurrence of $17^{ab}$

884* ततो यमोऽभ्युपागम्य ववन्दे तं गदाधरम् ।
किमागमनकृत्यं ते किं करोमीति चाब्रवीत् ॥
तमुवाचाथ वै कृष्णो गुरुपुत्र प्रदीयताम् ।
तयोस्तत्र तदा युद्धमासीद्घोरतरं महत् ॥

[ K1 Ñ2 B3 D2 om line 2 — (L 3) D2 स (for तम्) B2 गोविन्दो, D2 त कृष्णो (for वै कृष्णो) — K1 reads line 4 on marg — (L 4) K1 D3 (marg) श्रुत्वा तयोस् (for तयोस्तत्र). Ñ2 3 V1 2 B2 श्रुत्वाथ तद्वचो युद्धम् (for $^{a}$). K1 D2 (also marg) तत्रासीदद्भुतं महत्, Ñ2 अभवद्भरतर्षभ, Ñ3 V1. 2 B2 अभव(V2 °करो)त्सुमहत्तदा (for $^{b}$) ]

— $^{a}$) V3 आनिन्ये तं, G2 आनीय तं (for आनिनाय) — $^{d}$) K2 B2 D5 T1 2 G1 3 5 M4 चिरं (for चिर-)

18 $^{a}$) T3 4 M4 पुत्रं (for पुत्रः) — $^{b}$) Ś1 K1-3 Dn D2 5 प्रभावाद्, G3 प्रतापाद् (for प्रसादाद्) M4 प्रादादमिततेजस — $^{c}$) K1 2 V2 B1 D2-5 -कालं गतः, M3 -कालं कृत (for -कालगत.) T4 पुत्रः (for प्रेतः) T3 दीर्घकालं गतं लेभे. — $^{d}$) Ñ3 (marg) एवासीच्; Dn1 पुनरायाच् (for °सीच्). V3 च वीर्यवान् (for शरीर°). T3 यथारूपशरीरिणम्.

19 $^{a}$) K2 तददृष्टम्, D3 त्रिदशानाम् (for तदशक्यम्) — $^{b}$) D1 च, D6 T1 G2 M1-3 [अ]स्य (for सु) K4 दृष्ट्वा च सुमहाद्भुतम् — $^{c}$) D2 (marg as in text) M4 देवानां (for भूतानां) — $^{d}$) V2 विस्मय समपद्यत

20 $^{b}$) K2 T3 4 केशवः (for माधवः) — $^{d}$) K Ñ1 3 V1 B1 3 Dn Ds D1 2 4 जगत्प्रभु, Ñ2 V3 D5 °द्गुरु., D3 गुरुं प्रभु, T2 (also as in text) महाकवि (for जगत्पति)

21 $^{a}$) K1 3 Ñ2 3 V B Dn Ds D3 4 T4 राक्षसैस् (for रक्षसस्) K2 राक्षसेशस्य रत्नानि, K4 D1 2 राक्षसैर्वैरर(D1 °सैस्तानि र, D2 °सै सर्वैर)त्ना°; T1 M4 अक्षयाण्यथ र° — $^{c}$) T1 आनीय (for आनाय्य) D6 आनीय वेदयामास, T2 G1 आनाय्य दाप°

22 T1 M4 read 22 after 24 — $^{a}$) Ś1 शक्तीषु, D2 -युक्तेषु (for -युद्धेषु) — $^{b}$) D6 T2 G1-3 5 M1-3 सर्वशस्त्रेषु तावुभौ — $^{d}$) D3 श्रेष्ठौ (for सर्व-) K V1 D1 2 4, 6 T4 G2 M1 3 -लोक- (for -लोके) Ś1 धनुष्मताम् (for °र्भृताम्) B3 सर्वलोकधनुष्मताम्

23 B3 om $23^{a}$–$26^{b}$ — $^{b}$) T1 Cal. ed. तथा; G2 सदा (for तदा) K4 हृतं तं लवणाम्बुधौ — $^{c}$) N (except Ś1 D6; B3 om) T1 3 4 प्रतीतात्मा, M2 प्रसन्नाय (for प्रतीताय)

24 B3 om 24 (cf v 1 23) — $^{a}$) T2 G1 चिरं (for चिर) K2 -दृष्टेन (for न°) — $^{b}$) T3 समेत्य मुनिपुंगव. — $^{c}$) K3 आमन्त्र्य (for समेत्य) T3 पूजयामास धर्मात्मा — $^{d}$) K2 युञ्जयन्, T3 तावुभौ (for पूजयन्) K3 रामकेशवयोरपि — After 24, T1 M4 read 22

25 B3 om 25 (cf v 1 23) — $^{a}$) D2 कृतार्थौ (for °स्त्रौ) M4 तौ महा (for तावुभौ) V2 देवौ (for वीरौ) D3 कृतार्थौ तत्र तौ वीरौ — $^{b}$) K2 सायुधौ, Dn1 सव्रतौ, D2 तावुभौ, D6 T1 2 G M2 4 माधवौ, M1 3 पूज्य च (for सुव्रतौ) D3 तमामन्त्र्याशु जग्मतु — Ñ1 om $25^{cd}$. — $^{c}$) T3 M1. 2 आयातां (for °तौ) M2 वीरौ (for भूयो).

आयातौ मथुरां भूयो वसुदेवसुतावुभौ ॥ २५
ततः प्रत्युद्ययुः सर्वे यादवा यदुनन्दनौ ।
सबाला हृष्टमनस उग्रसेनपुरोगमाः ॥ २६
श्रेण्यः प्रकृतयश्चैव मन्त्रिणोऽथ पुरोहिताः ।
सबालवृद्धा सा चैव पुरी समभिवर्तत ॥ २७
नन्दितूर्याण्यवाद्यन्त तुष्टुवुश्च जनार्दनम् ।
रथ्याः पताकामालिन्यो भ्राजन्ति स्म समन्ततः ॥२८
प्रहृष्टमुदितं सर्वमन्तःपुरमशोभत ।
गोविन्दागमनेऽत्यर्थं यथैवेन्द्रमहे तथा ॥ २९
मुदिताश्चाप्यगायन्त राजमार्गेषु गायनाः ।
स्तवाशीःप्रथमा गाथा यादवानां प्रियंकराः ॥ ३०

गोविन्दरामौ संप्राप्तौ भ्रातरौ लोकविश्रुतौ ।
स्वे पुरे निर्भयाः सर्वे क्रीडध्वं सह बान्धवैः ॥ ३१
न तत्र कश्चिद्दीनो वा मलिनो वा विचेतनः ।
मथुरायां बभौ राजन्गोविन्दे समुपस्थिते ॥ ३२
वयांसि साधुवाक्यानि प्रहृष्टा गोहयद्विपाः ।
नरनारीगणाः सर्वे भेजिरे मनसः सुखम् ॥ ३३
शिवाश्च वाताः प्रववुर्विरजस्का दिशो दश ।
दैवतानि च सर्वाणि हृष्टान्यायतनेष्वपि ॥ ३४
यानि लिङ्गानि लोकस्य बभुः कृतयुगे पुरा ।
तानि सर्वाण्यदृश्यन्त पुरीं प्राप्ते जनार्दने ॥ ३५
ततः काले शिवे पुण्ये स्यन्दनेनारिमर्दनः । C 4943 B 2 33 39 P 2. 33 39

26 $B_3$ om $26^{ab}$ ( cf v l 23 ) — $^{a}$ ) $G_2$ तावुद्ययु ( for प्रत्यु° ). — $^{c}$ ) $K_{2,3}$ $Ñ_{2\ 3}$ $V_{2\ 3}$ $B_1$ Dn $Ds_1$ $D_4$ $T_2$ $G_{1\ 2\ 5}$ $M_2$ सबला, $K_4$ $T_3$ सर्वे सं-, $Ñ_1$ $D_{1\ 5}$ $T_4$ यादवा, $B_3$ ते सर्वे, $T_1$ $M_4$ सबाल-, $G_4$ सकला ( for सबाला )

27 $^{b}$ ) N ( except $Ś_1$ $Ñ_1$ $D_6$ ) $T_{3\ 4}$ स-, $T_1$ ऽपि, $G_4$ च ( for ऽथ ) — $^{c}$ ) $K_4$ $T_2$ $G_{3-5}$ $M_3$ सा चैव, $Ñ_{2\ 3}$ $B_2$ $D_4$ युवतिः ( for सा चैव ) $K_2$ $V_{1\ 2}$ $B_3$ $D_{2\ 3}$ सबालवृद्ध-युवति°, $T_{3\ 4}$ °लवृद्धसचिवा°, $G_2$ °लवृद्धा सर्वेऽपि — $^{d}$ ) $K_1$ $D_6$ $T_2$ $G_{1\ 2}$ वर्धत, $D_{1\ 3}$ $M_2$ ( *inf lin* ) Bom ed -वर्तते ( for °त ) $T_4$ पुरी समभवत्तत .

28 $^{a}$ ) $T_{1,2}$ $G_{1\ 3}$ $M_4$ ततस् ( for नन्दि- ) — $^{b}$ ) $T_1$ त ( for च ) — $^{c}$ ) $K_2$ $M_3$ वीथ्य ( for रथ्या ) Some Mss पताक- ( for पताका- ) — $^{d}$ ) N ( except $Ś_1$ $D_6$ ) T $M_4$ भ्राजन्ते ( for °न्ति ).

29 $^{c}$ ) $K_1$ गोविन्दाभिगमेऽत्यर्थं — $^{d}$ ) $D_{2\ 6}$ $T_4$ $G_{4\ 5}$ [इ]न्द्रमखे, $T_{1\ 2}$ $G_1$ $M_2$ ( *inf lin* as in text ) ${}_4$ [इ]न्द्रागमे, $T_3$ [इ]न्द्रपुरी ( for [इ]न्द्रमहे ) $D_5$ महेन्द्रस्य महे तथा, $G_3$ यथैवेन्द्रागमे पुरा

30 $^{a}$ ) $B_2$ Bom Poona eds G( ed ) मुदिताश्चाथ गायन्ति — $^{b}$ ) $D_2$ -मार्गेण ( for °षु ) $D_{1\ 3\ 6}$ S गायका ( for °ना ). — $^{c}$ ) $Ś_1$ तथाशी- ( for स्तवाशी- ) $K_{1\ 2,4}$ $Ñ_{2\ 3}$ V B Dn Ds $D_{4\ 5}$ $T_{1\ 2}$ प्रथिता, $M_1$ -प्रभवा, $M_3$ -प्रथना, $M_4$ -परमा ( for -प्रथमा ). $K_3$ $Ñ_1$ $D_{1-3}$ तथासीःप्र- ( $Ñ_1$ तथाशीःप्र, $D_{1\ 3}$ तत्रासीःप्र, $D_2$ [marg] स्तवाशीः-प्र )थिता गाथा; $T_4$ स्तवाशीःप्रथिता गावो — $^{d}$ ) $D_3$ प्रियं-करी ( for °कराः )

31 $^{a}$ ) $B_1$ सप्रीतौ ( for संप्राप्तौ ). — $^{c}$ ) $K_{1\ 2}$ $V_{1,2}$ $B_1$ $Ds_1$ $D_{3\ 4}$ $T_{2-4}$ $M_{1\ 3\ 4}$ स्व ( for स्वे ) — $^{d}$ ) $Ś_1$ $M_1$ क्रीडध्व सहबान्धवा, $D_3$ °ध्व यादवान्धका, $D_6$ $T_1$ $G_{1-4}$ $M_{2\ 4}$ °न्ति स्म सबान्धवा, $G_5$ किं वदन्ति स्म बान्धवाः, $M_3$ भेजिरे मनस प्रिया — After 31, $T_{1\ 2}$ $G_{1\ 3-5}$ $M_4$ G(ed ) ins

885* तेभ्योऽगच्छन्विदेशेभ्यः कंसेनोद्विजिताश्च ये ।

[ $T_1$ $G_3$ तेऽपि, G(ed ) ते हि ( for तेभ्यो ). ]

32 $^{a}$ ) $K_4$ कश्चित्तत्र ( by transp ) — $^{b}$ ) $Ś_1$ $K_1$ [अ]पि मानवः ( for विचेतन ) — $^{c}$ ) N ( except $Ś_1$ $Ñ_1$ $D_6$ ) $T_{1\ 3\ 4}$ $G_{2\ 5}$ $M_4$ अभूद् ( for बभौ ) — $^{d}$ ) $Ś_1$ गोविन्दे समुपागते

33 $^{b}$ ) $D_3$ प्रहृष्टा गृहमेधिन — $^{d}$ ) $Ñ_3$ ( marg as in text ) मानस, $D_4$ मनसा ( for °स ) $B_1$ स्वयम्, $D_6$ $T_{1\ 2}$ G M प्रियम् ( for सुखम् )

34 $^{a}$ ) $Ñ_3$ $V_1$ सुखदा प्रववुर्वाता — $^{c}$ ) K $Ñ_3$ $V_{1,2}$ B D ( except $D_6$ ) $T_{3\ 4}$ प्रहृष्टानि ( for च सर्वाणि ) — $^{d}$ ) K $Ñ_3$ $V_{1\ 2}$ B D ( except $D_6$ ) $T_{3\ 4}$ सर्वेषु ( for हृष्टानि ). $Ñ_1$ [आ]यतनानि ( for °नेषु ) N ( except $Ś_1$ $D_6$ ) $T_{3\ 4}$ च ( for [अ]पि )

35 $^{a}$ ) $V_2$ यानि लोकस्य लिङ्गानि — $^{b}$ ) $K_2$ भुव, $Ñ_2$ $B_3$ भुवि, $D_2$ $M_1$ बभूवु ( hypermetric ) ( for बभु ) $Ñ_3$ ( marg ) तदा ( for पुरा ) $Ś_1$ चतुष्कृते युगे तदा, $D_6$ $T_{1\ 2}$ G $M_{3\ 4}$ सबभूवु ( $M_3$ बभूवुश्च ) कृते युगे — $M_3$ om. $35^{c}$ — $^{c}$ ) $G_2$ दृश्यन्ते ( for [अ]दृश्यन्त )

36 $^{a}$ ) $K_1$ $D_{2\ 3}$ प्राप्ते ( for पुण्ये ) — $^{b}$ ) $Ś_1$ सूदनः ( for -मर्दन ). — $^{c}$ ) $T_1$ वाजि- ( for हरि ). — $^{d}$ ) $D_3$ बल-भद्रसमन्वित

हरिणुक्तेन गोविन्दो विवेश मथुरां पुरीम् ॥ ३६
विशन्तं मथुरां रम्यां तमुपेन्द्रमरिंदमम् ।
अनुजग्मुर्यदुगणाः शक्रं देवगणा इव ॥ ३७
वसुदेवस्य भवनं ततस्तौ यदुनन्दनौ ।
प्रविष्टौ हृष्टवदनौ चन्द्रादित्याविवाचलम् ॥ ३८
तावायुधानि विन्यस्य गृहे स्वे स्वैरचारिणौ ।
मुमुदाते यदुवरौ वसुदेवसुतावुभौ ॥ ३९
एवं तावेकनिर्माणौ मथुरायां शुभाननौ ।
उग्रसेनानुगौ भूत्वा कंचित्कालं मुमोदतुः ॥ ४०

इति श्रीहरिवंशे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

37 $^{a}$) Ñ1 नगरी (for मथुरां) K1 V3 D2 पुण्यां (for रम्यां). Ś1 M1 ३ विशन्तं नगरं पुण्यं, D3 विवेश मथुरां पुण्यां, D6 T1 2 G M2 4 विशन्तं नगरीं पुण्यां — $^{b}$) D3 यथा चेन्द्रोऽमरावतीम् — $^{d}$) V1 सुर- (for देव-)

38 $^{a}$) D3 6 T2 G M4 सदनं (for भवनं) — $^{b}$) Ś1 पुरुषौ, K3 पितुस्तौ (for ततस्तौ) — $^{c}$) K3 4 V3 D1 2 4 6 T2 3 G1 2 4 5 प्रहृष्टौ (for प्रविष्टौ) V2 -मनसौ (for -वदनौ) — $^{d}$) D3 T3 4 G2 [अ]म्बरम् (for [अ]चलम्) — After 38, K2 Ñ2 3 V B Dn Ds D1 T4 ins

886* परेण तेजसोपेतौ सुरेन्द्राविव रूपिणौ ।

[K2 Dn रवीन्द्राव् (for सुरे°)]

39 V2 om 39$^{ab}$ — $^{b}$) V3 M1. 2 स्वे गृहे (by transp) D3 सुख (for स्वैर). T2 G1 3-5 M4 गृहेषु स्वेषु चारिणौ. — $^{c}$) D5 मुमोदतुर् (for मुमुदाते) — After 39, N (except Ś1 Ñ1) S (except M1-3) ins.

887* उद्यानेषु विचित्रेषु फलपुष्पावनामिषु ।
चेरतुः सुमहात्मानौ यादवैः परिवारितौ ॥
रैवतस्य समीपेषु सरित्सु विमलासु च ।
पद्मपत्रसमृद्धासु कारण्डवयुतासु च ॥

[(L. 1) K2 V2 D6 फलपुष्पवनेषु च (D6 °नादिषु) (for $^{b}$). — (L 2) T4 रेजतु (for चेरतु) — V2 om line 3 — (L 3) K3 Ñ3 V1 3 B1 Dn Ds D5 6 G1 4 समीपे तु (for °पेषु) T2 om lines 3$^{b}$-4$^{b}$ D6 विरलासु (for विम°). — Ñ2 om (hapl) line 4 — (L. 4) D1 तत्र तत्र (for पद्मपत्र). K3 4 Dn Ds D1 -प्रवृद्धासु; B1 T3 G4 -विवृ°, D2 -समि°, G5 -सताद्यासु (for -समृद्धासु) V3 D1 -लतासु च, D6 -रुतासु च, T1 M4 सुगन्धिषु (for -युतासु च)]

D6 T1 G M4 cont. M1-3 ins after 39

888* एवं तौ बाल्यमुत्तीर्णौ बलभद्रजनार्दनौ ।

40 T2 om 40$^{abc}$. — $^{a}$) D6 T1 G M ततस् (for एवं). V2 निर्माणं; D3 -कर्माणौ (for -नि°). — $^{b}$) D3 सनातनौ (for शुभाननौ) — $^{d}$) K1 4 V1 3 M3 किंचित् (for कं°) K2 Ñ3 V1 2 B3 D3 अथोषतु, Ñ2 तथोषतु, V3 तदोषतु, D6 T1 G M अ(G1 4 M4 सु)मोदताम् (for मुमोदतु) — After 40, D6 T1 2 G1. 3-5 M4 ins

889* उषित्वा चतुरो मासान्नन्दगोप उदारधीः ।
रामकृष्णौ समालिङ्ग्य यदुभिश्चानुमोदितः ।
वसुदेवाभ्यनुज्ञातः स्वमेव शकटं ययौ ॥

[(L 2) T1 M4 अथालिङ्ग्य (for समा°)]

D6 T1 2 G1 3-5 M4 cont G2 M1-3 ins after 40

890* सूत. ।

एतद्वो बालचरितं सकलं मुनिपुंगवा ।
यथाश्रुतं यथायोगं यथाज्ञानमुदाहृतम् ॥

[(L 1) T1 2 G1 वै (for वो) — (L 2) T2 G1 3-5 यथाशक्यं (for °श्रुतं) M1-3 ख्यातं शौनकसत्तमा (for $^{b}$)]

M3 cont.

891* कृष्णं केशवमच्युतं मुररिपुं शौरिं हरिं शार्ङ्गिणं
विष्णुं विश्वसृजं चतुर्भुजमजं श्रीवल्लभं श्रीधरम् ।
जिष्णुं दैत्यरिपुं त्रिधामनिलयं त्रैलोक्यनाथं परं
गोविन्दं पुरुषं नमामि शिरसा नारायणं चक्रिणम् ॥

COLOPHON — *Mention of the Epic* K3 Ds2 T3 — *Mention of Khila* Ś1 K3 Ñ3 V B Dn2 Ds1 D1 3. — *Sub-parvan* D5 M2 बालचरितम्, D6 G2-4 M1-3 बालक्रीडा, T4 आश्चर्यपर्व — *Adhy name* Ś1 कृष्णस्य शिक्षा; K1 B1 D2 कृष्णप्रत्यागमनम्, K2-4 Ñ V B2. 3 Dn Ds D1. 4. 5 T4 रामकृष्णप्रत्यागमनम्; D3 रामकृष्णाभ्यागमनम्, D6 T1. 2 G1-3 गुरुपुत्रानयनम् — *Adhy no.* (figures, words or both): K3 87, Ñ3 V1 B2 G2. 4 M1-3 90; V2 T2 91, V3 89, Ds2 D4 88, D1 85, D3 T3 94; T1 G3 5 M4 93, T4 81, G1 92. — *Śloka no.* Dn 43; Ds2 45; T2 52; G1 46.

# ८०

वैशंपायन उवाच ।
कस्यचित्त्वथ कालस्य राजा राजगृहेश्वरः ।
शुश्राव निहतं कंसं जरासंधः प्रतापवान् ॥ १
आजगाम षडङ्गेन बलेन महता वृतः ।
जिघांसुर्हि यदून्क्रुद्धः कंसस्यापचितिं चरन् ॥ २
अस्तिः प्राप्तिश्च नाम्नास्तां मागधस्य सुते नृप ।
जरासंधस्य कल्याण्यौ पीनश्रोणिपयोधरे ।
उभे कंसस्य ते भार्ये प्रादाद्बार्हद्रथो नृपः ॥ ३
स ताभ्यां मुमुदे राजा बध्वा पितरमाहुकम् ।
समाश्रित्य जरासंधमनादृत्य च यादवान् । C 4957 B 2 34 7 P 2 34 7

## 80

☞ T1 M read adhyayas 80–82 after App I (No 18), T3 repeats the same after App I (No 19), G3 repeats adhy 80 after App I (No 18)'

1 K4 Ds1 om the ref After the ref, N (except Ś1 Ds D0) T3 4 Bom Poona Cal eds repeat 79 1–2 Ś1 om $1^{abc}$ D2 repeats $1^{ab}$ after 892A* —$^{a}$) K1 D2 (first time) 3 एतस्मिन्नेव काले तु —$^{b}$) D3 -गृहे वसन् (for गृहेश्वर·) D2 (second time) स राजा मागधेश्वर, D6 T1 2 G1 3–5 M2 4 राजा स मगधे°, T3 जरासधः प्रतापवान् —$^{c}$) D6 स (for नि-) — K Ñ V B Dn Ds D1–5 T3 4 M4 (first time) ins after $1^{abc}$ Ś1 after the ref

892* दुहितृभ्यां महीपतिः ।
ततो नातिचिरात्कालाज्

[ Ś1 om line 1. — After line 1, D2 ins

892A* अस्ति. प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ ।
हते भर्तरि दु खार्तें ईयतु स्वपितुर्गृहान् ॥
[ =(var) Bhāgavata P, 10 50 1 ]

— T1 M4 repeat from line 2 to $3^{b}$ after App I (No 18) —(L 2) T1 M4 (both first time) राजन् (for कालाज्) ]

— After 1, D6 T1 (first time) 2 G1 2 3 (first time) 4 M1–3 4 (first time) ins

893* स साधनेन महता पाकशासनविक्रम ।

After the above, M4 (first time) cont 894*

2 For the repetition in T1 M4, cf. v 1 1 —$^{a}$) K2 [अ]थ वेगेन (for षडङ्गेन) —$^{b}$) K2 Ñ1 B2 Ds बलेन स महाबलः — T1 G3 (both second time) ins after $2^{ab}$ G5 cont after 895*, M4 cont. after 893*

894* कृष्णस्य वधमन्विच्छन्मथुरामन्ववर्तत ।

—$^{c}$) K2 जिघांसया, D5 °सन्हि (for °सुर्हि) T1 M4 (both first time) जिघासुरभवत्क्रुद्ध· —$^{d}$) K4 [उ]पचिति (for [अ]प°) K2 Ñ2 V3 B Ds D1 5 6 T1 (first time) G2 M1–3 4 (both times) स्मरन् (for चरन्) — After 2, D6 T1 2 3 (second time) G1 2 3 (second time) 4 5 M ins

895* अयशो ह्यात्मनो रक्षल्लँोकनिर्वादशङ्कया ।
दुहितृप्रीतिकामार्थं मथुरामवरोधक ।
अक्षौहिण्यैकविंशत्या सेनया च तदा सह ॥

[ M1 2 om line 1 M3 om lines 1–2 —(L 1) T1 3 M4 ऽपि (for हि) G2 -निर्धार- (for -निर्वाद-) D6 लोकनिर्वादक तथा (for $^{b}$) — D6 T3 G2 om lines 2–3. —(L 2) T1 M1 -प्रिय (for -प्रीति-) G5 दुहितृप्रीतिमाकाङ्क्षन् (for $^{a}$) T1 M1 2 अवरोधयत् (for °धक) ]

After the above, G5 cont 894*

3 For the repetition in T1 M4, cf v 1 1 —$^{a}$) D6 G2 4 5 प्रासीति (for प्राप्तिश्च) S1 नामोभे, K3 नाम्नोभे; K4 Ñ2 V3 B T1 (second time) नाम्ना ते, D5 T3 (second time) नामास्तां, T1 (first time) M1 4 (first time) नाम्ना हि (for नाम्नास्ता) —$^{b}$) D6 T1 (first time) 2 G1 2 3 (both times) 4 5 M1–3 4 (first time) उभे (for नृप) M4 (second time) ते मागधसुते नृप — T1 (first time) M1–3 4 (first time) ins after $3^{ab}$ G3 (second time) 5 cont after 897*·

896* ते द्वे च कंसराजाय ददौ हृष्ट. स मागधः ॥
तेन ते विधवे स्यातामुभे कृष्णेन मागधे ।
जीवत्येव तथा राजन्वीरे राज्ञा पुरोगमे ॥

[ G3 om line 1 —(L 1) T1 तु द्वे (for द्वे च) M4 ददौ पृष्ट सुमागध (for $^{b}$) —(L 2) M1–3 ते कृते (for तेन ते) —(L 3) G3 (second time) 5 M4 तदा (for तथा) G5 वीरो (for वीरे) ]

—$^{c}$) V1 कन्ये द्वे (for कल्याण्यौ) —$^{e}$) K2 भार्ये द्वे, B3 द्वे भार्ये, D2 6 T2 G1 2 4 5 M1, 3 भार्ये ते (by transp.), D3 भार्यर्थे

शूरसेनेश्वरो राजा यथा ते बहुशः श्रुतः ॥ ४
ज्ञातिकार्यार्थसिद्ध्यर्थमुग्रसेनहिते स्थितः ।
वसुदेवोऽभवन्नित्यं कंसो न ममृषे च तम् ॥ ५
रामकृष्णौ व्यपाश्रित्य हते कंसे दुरात्मनि ।
उग्रसेनोऽभवद्राजा भोजवृष्ण्यन्धकैर्वृतः ॥ ६
दुहितृभ्यां जरासंधः प्रियाभ्यां बलवान्नृपः ।
प्रियार्थं वीरपत्नीभ्यामुपायान्मथुरां ततः ।
कृत्वा सर्वसमुद्योगं क्रोधादभिययौ यदून् ॥ ७
प्रतापावनता ये हि जरासंधस्य पार्थिवाः ।
मित्राणि ज्ञातयश्चैव संयुक्ताः सुहृदस्तथा ॥ ८
त एनमन्वयुः सर्वे सैन्यैः समुदितैर्वृताः ।
महेष्वासा महावीर्या जरासंधप्रियैषिणः ॥ ९
कारूषो दन्तवक्त्रश्च चेदिराजश्च वीर्यवान् ।
कलिङ्गाधिपतिश्चैव पौण्ड्रश्च बलिनां वरः ।

4 $^{a}$) D$_6$ भार्याभ्यां (for स ताभ्यां) Ś$_1$ ताभ्यां, D$_2$ राजन् (for राजा) — $^{b}$) D$_3$ आहुकिम्, T$_3$ G$_3$ (both second time) $_5$ M ओजसा (for आहुकम्) — $^{e}$) V$_1$ T$_4$ -सेनश्च यो (for -सेनेश्वरो) — $^{f}$) D$_6$ M$_3$ सुबहु, T$_2$ G$_{3-5}$ स बहु- (for बहुश )

5 $^{a}$) D$_3$ -कार्यस्य (for कार्यार्थ-) G$_3$ ज्ञातिकार्यार्थमुद्युक्त — $^{b}$) K Ñ$_{1\ 3}$ V$_{1\ 2}$ B D T$_3$ (first time) $_4$ -हिते रतः, Ñ$_2$ T$_{1\ 3}$ G$_3$ (last two second time) -मते स्थित, V$_3$ -मते रतः, T$_2$ G$_1$ -स्थिते सुते; G$_{2\ 3}$ (first time) $_4$ -सुते स्थिते, G$_5$ M$_4$ -मते स्थिते (for -हिते स्थित ) — T$_1$ om (hapl ?) 5$^{c}$–6$^{d}$ — $^{c}$) T$_2$ G$_{1\ 3}$ (both times) $_4$ उग्रसेनो (for वसुदेवो) — $^{d}$) K$_{1\ 4}$ M$_3$ तत् (for तम्)

6 $^{a}$) Ś$_1$ K$_1$ Ñ$_3$ (marg as in text) V$_2$ B$_1$ D$_{2\ 3\ 5\ 6}$ T$_2$ G$_{1\ 2\ 3}$ (first time) $_{4.\ 5}$ समाश्रित्य; V$_3$ ह्यपा°, T$_3$ (second time) $_4$ M$_2$ उपा° (for व्यपा°) — $^{d}$) Ś$_1$ ततो (for भोज-) B$_3$ तत, D$_3$ T$_3$ G$_3$ (both second time) M$_4$ सह (for वृत ) D$_5$ भोजवृष्ण्यन्धकेश्वर. — D$_6$ T$_{2\ 3}$ (second time) G$_{1\ 2}$ M$_{1-3}$ ins after 6 :

897* मथुरां पालयामास केशवानुमते स्थितः ।

After the above, G$_3$ (second times) $_5$ cont 896*

7 $^{b}$) D$_5$ वृतः (for नृप ) — $^{c}$) K Ñ$_1$ V$_2$ B$_{2\ 3}$ Dn Ds D$_{1-3\ 5\ 6}$ T$_3$ (first time) $_4$ चोदितो, Ñ$_2$ B$_1$ D$_4$ M$_3$ नोदितो, Ñ$_3$ प्रेरितो, V$_3$ विदितो, T$_{1\ 3}$ (second time) G$_3$ (both times) प्रियाभ्या (for °र्थं) G$_4$ प्रियाभ्या वीरपत्न्यर्थम् — $^{d}$) B$_3$ M$_4$ उभाभ्यां; T$_3$ (second time) $_4$ उद्ययौ (for उपायान्) Ds तदा (for ततः). — After 7$^{cd}$, D$_2$ ins

898* स तदप्रियमाकर्ण्य शोकामर्षयुतो नृपः ।
अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥
अक्षौहिणीभिर्विंशत्या तिसृभिश्चापि संयुत ।
यदुराजधानीं मथुरां रोद्धुमभ्यागतो नृप ॥

[ = Bhāgavata P, 10. 50 3–4 ]

— $^{e}$) T$_1$ श्रुत्वा (for कृत्वा) Ñ$_2$ V$_2$ B$_{2\ 3}$ D$_{4\ 5}$ T$_3$ (second time) $_4$ M$_4$ सर्वं (for सर्व ) D$_6$ T$_2$ G$_{1\ 2\ 4\ 5}$ M$_{1-3}$ बलोद्योग (for समु°) D$_3$ स कृत्वा सर्वमुद्योगं — $^{f}$) K$_1$ Ñ$_3$ (marg ) V$_1$ T$_3$ (second time) $_4$ क्रोधादग्निरिव ज्वलन्, K$_{2-4}$ Ñ$_{2\ 3}$ V$_{2\ 3}$ B Dn Ds D$_{1-5}$ °ग्निसमो ज्वलन्, D$_6$ G$_2$ क्रोधादभि यदून्ययौ, T$_1$ G$_3$ (second time) क्रोधादिव ययौ रिपून्, T$_3$ (first time) G$_1$ °दभ्युद्यत ययौ, G$_3$ (first time) $_{4\ 5}$ °दभ्युत्थित ययौ

8 T$_3$ (second time) om 8$^{ab}$ — $^{a}$) K Ñ V B Dn Ds D$_{1-5}$ च, T$_1$ न (for हि) D$_6$ T$_2$ G$_{1\ 4\ 5}$ प्रभावावनता ये हि, T$_3$ प्रतापानलतापेन, M$_3$ °पादानता ये हि — $^{b}$) Ds$_2$ D$_3$ पार्थिव (for °वा.) — $^{c}$) Ś$_1$ T$_1$ ये च (for चैव) — $^{d}$) K$_{1\ 3\ 4}$ Ñ$_{1\ 3}$ V$_1$ B$_2$ Dn D$_{1\ 3\ 5}$ T$_4$ सुयुक्ता (for सं°) Ś$_1$ T$_{1\ 3}$ G$_3$ (both second time) M$_4$ च ये (for तथा) D$_6$ T$_2$ G$_{1\ 2\ 3}$ (first time) $_{4\ 5}$ M$_{1-3}$ सुहृत्संबान्धिनस्तथा.

9 D$_3$ om 9$^{ab}$. — $^{a}$) K$_1$ D$_6$ T$_2$ G$_{1.\ 3}$ (first time). $_{4.\ 5}$ तमेवम्, T$_3$ (second time) तदा तम्, G$_2$ M$_{1\ 2}$ तमेनम्, M$_3$ त एवम् (for त एनम्) K$_{2\ 4}$ Ñ V$_3$ B$_{1\ 3}$ Dn Ds D$_{1\ 4\ 5}$ T$_3$ (first time) $_4$ तमेवानुययुः सर्वे, V$_{1\ 2}$ B$_2$ D$_2$ तमेव चान्वयुः सर्वे, T$_1$ G$_?$ (second time) M$_4$ तदा त(M$_4$ क)-मन्वयु सर्वे — $^{b}$) V$_2$ प्रमुदितै (for स°) D$_6$ G$_{2.\ 3}$ (first time) $_4$ M$_{1-3}$ तथा, T$_2$ G$_{1\ 3}$ (second time) सदा; T$_3$ (second time) यथा, G$_5$ तदा, M$_4$ मुदा (for वृताः). — After 9$^{ab}$, T$_{1\ 3}$ G$_3$ (last two second time) M ins. :

899* ये नृपाः पर्वतास्तस्माद्रोमन्ताद्रीळिता गता ।
ते च सर्वे यदून्हन्तुं जरासंधं समन्वयु ॥

— G$_2$ om 9$^{c}$–13$^{b}$ — $^{d}$) D$_6$ G$_{4\ 5}$ राजपुत्र-, T$_2$ G$_1$ जरापुत्र- (for °संध-) D$_1$ प्रधर्षिण; D$_2$ -हितैषिणः (for -प्रियै°) D$_3$ सत्यसंधा हितैषिण, G$_3$ (first time) जरापुत्रजयैषिण

10 G$_2$ om 10 (cf v l 9) — $^{a}$) Ñ$_1$ G$_{4\ 5}$ M$_3$ अक्रूरो, T$_2$ G$_1$ M$_{1\ 2}$ करूशो, T (both times) M$_4$ कारूशो; G$_3$ (both times) करूषो (for कारूषो). — After 10$^{ab}$, G$_1$ reads 12$^{cd}$, repeating it in its proper place. V$_3$ om. (hapl ) 10$^{c}$–11$^{d}$. T$_2$ G$_{1\ 3}$ (first time). $_{4.\ 5}$ om.

आहुतिः कौशिकश्चैव भीष्मकश्च नराधिपः ॥ १०
पुत्रश्च भीष्मकस्यापि रुक्मी मुख्यो धनुर्भृताम् ।
वासुदेवार्जुनाभ्यां यः स्पर्धते स्म सदा बले ॥ ११
वेणुदारिः श्रुतर्वा च क्राथश्चैवांशुमानपि ।
अङ्गराजश्च बलवान्वङ्गानामधिपस्तथा ॥ १२
कौसल्यः काशिराजश्च दशार्णाधिपतिस्तथा ।
सुह्मेश्वरश्च विक्रान्तो विदेहाधिपतिस्तथा ॥ १३

मद्रराजश्च बलवांस्त्रिगर्तानामथेश्वरः ।
साल्वराजश्च विक्रान्तो दरदश्च महाबलः ॥ १४
यवनाधिपतिश्चैव भगदत्तश्च वीर्यवान् ।
सौवीरराजः शैब्यश्च पाण्ड्यश्च बलिनां वरः ।
गान्धारराजः सुबलो नग्नजिच्च महाबलः ॥ १५
एते चान्ये च राजानो बलवन्तो महारथाः ।
तमन्वयुर्जरासंधं विद्विषन्तो जनार्दनम् ॥ १६ C 4972 B 2 34 21 P 2 34.21

---

$10^c$–$12^b$ — [d]) $T_1$ पौण्ड्रको ( for °श्च ) — [e]) $K_2$ $\tilde{N}_2$ $D_3$ आकृति , $V_{..}$ सांकृति , $Ds_1$ आहति ( for आह्रुति ) $K_4$ आवन्त्य कौशिकश्चैव , $\tilde{N}_3$ $Dn_2$ सांकृति के° $V_1$ $B_{1\,2}$ $D_6$ साकु( $D_6$ marg आहू )ति कौ° , $Ds_2$ $M_4$ आहति कौ° , $D_2$ आकृति के° , $T_1$ $G_3$ ( second time ) $M_{2\,3}$ आहु( $M_2$ °ह्र )ति कौ° ; $T_3$ ( first time ) अलकृत कौशिकश्च , $T_3$ ( second time ) $_4$ आहू( $T_4$ अकृ )त कौशिकश्चैव , G( ed ) कौशिकश्चैव कुटिलो — [f]) $M_{1\,2}$ जनाधिप. ( for नरा° ) $K_2$ भीमकश्च नराधिप

11 $G_2$ om 11 ( cf v l 9 ) $V_3$ $T_2$ $G_{1\,3-5}$ om 11 ( cf v l 10 ). — [a]) $\tilde{N}_2$ $V_2$ $D_{5\,6}$ $T_3$ ( second time ) भीमकस्य , $T_4$ भीष्मकश्च ( for °स्य ) $V_1$ पुण्ड्रश्च भीष्मकश्चैव — [b]) $S_1$ $\tilde{N}_1$ $T_1$ $M_3$ धनुष्मताम् ( for °भृताम् ) $T_3$ ( second time ) मुख्यः सर्वधनुर्भृताम् — [c]) $K_1$ $D_{2-4}$ च , $K_2$ स ( for य· ) — [d]) $K_3$ $D_6$ महाहवे , $T_1$ सदा बली ( for सदा बले ) $K_1$ स्पर्धते य. सदाहवे ; $K_{2\,4}$ $\tilde{N}$ $V_{1\,2}$ B Dn Ds $D_{1-5}$ $T_3$ ( first time ) $_4$ स्पर्धते स म( $\tilde{N}_3$ $V_1$ $B_1$ सुम· ; $B_3$ च म , $D_{2\,3}$ यो म )हाह( $D_5$ °णं )वे , $T_3$ ( second time ) $G_3$ $M_4$ °ते सर्वदा बले

12 $G_2$ om 12 ( cf v l 9 ) $V_3$ om 12 $T_2$ $G_{1\,3-5}$ om $12^{ab}$ ( for all, cf v l 10 ) $T_3$ ( second time ) om $12^{ab}$. — [a]) $K_2$ $D_{2\,4}$ सुवर्चा , $V_1$ $D_1$ $T_3$ सुपर्वा ( for श्रुतर्वा ) $D_1$ [अ]थ ( for च ) — [b]) Some Mss क्रथश्( for क्रा° ) — $G_1$ reads $12^{cd}$ for the first time after $10^{ab}$ — [c]) $V_2$ तु ( for च ) $T_2$ $G_1$( second time) $_{3-5}$ मा( $G_1$ म )गधाधिपति श्रीमान् - $Ś_1$ om ( hapl ) $12^d$–$14^a$ — [d]) $K_{1\,2}$ $G_5$ अङ्गानाम् ; $G_4$ नागा° ( for वङ्गा° ) $T_1$ वङ्गराजश्च वीर्यवान्

13 $G_2$ om $13^{ab}$ ( cf v l 9 ). $V_3$ om 13 ( cf v l 10 ). $Ś_1$ om 13 ( cf v l 12 ) $B_3$ $M_{1\,3}$ om ( hapl ) 13 $T_1$ om ( hapl ) $13^{ab}$ $T_3$ $G_3$ ( both second time ) $M_2$ transp $13^{ab}$ and $13^{cd}$ — [a]) $K_{1-3}$ $D_{1\,2,\,4}$ $M_4$ कौशिल्य ; $K_4$ कौशिक , $T_3$ ( second time ) $_4$ कौशिलः , some Mss कौशल्यः ( for कौसल्य ) $D_{2\,3}$ तु ( for च ) — $G_1$ om ( hapl ) $13^{cd}$ ; $D_2$ reads it on marg — [c]) $K_1$ सुह्मराजश् ; $K_2$ $G_4$ सुखेश्वरश् ; $\tilde{N}_{2,\,3}$ (marg.) $V_1$ $B_{1\,2}$ $D_{1\,3}$ सौभे° , Dn सुरे° , $Ds_1$ ( marg ) भौमेश्वरश् , $D_2$ तथा शूरश् , $G_2$ सिंहेश्वरश् ( for सुह्मे° ) $D_5$ बलवान् ( for विक्रान्तो ) $K_3$ $\tilde{N}_1$ $V_2$ $T_1$ $M_2$ सु( $\tilde{N}_1$ $V_2$ सौ )ह्मश्च राजा विक्रान्तो, $K_4$ सौभश्च रथवि° , $T_3$ ( first time ) $_4$ तदासौ ( $T_4$ स तदा ) सोम्य वि° , $T_3$ $G_3$ ( both second time ) $M_4$ सुह्म( $M_4$ सिंह )श्च राजातिबलो

14 $V_3$ om 14 ( cf v l 10 ) $Ś_1$ om $14^a$ ( cf v l 13 ) — [a]) $T_2$ $G_{1\,4\,5}$ तु ( for च ) — [b]) $K_1$ जनेश्वर , $B_3$ $D_2$ $T_{1\,2\,3}$ ( second time ) $_4$ $G_{1\,2\,3}$ ( second time ) अधी° , $D_3$ महे° , $T_3$ ( first time ) $M_2$ अपी° , $M_{1\,3}$ पतिस्तथा ( for अथेश्वर ) — After $14^{ab}$, $D_2$ ins 901* $V_2$ om $14^c$–$15^b$ $D_2$ om $14^{cd}$ — [c]) $D_3$ तु ( for च ) — [d]) $T_{2\,3}$ ( second time ) $G_{1\,2\,3}$ ( second time ) $_{4\,5}$ महारथः ( for °बल ) $Ś_1$ $K_3$ काश्मीरा( $K_3$ विदर्भा )धिपतिस्तथा

15 $V_2$ om $15^{ab}$ ( cf v l 14 ) $K_2$ om ( hapl ) 15. $D_5$ reads $15^a$–$16^b$ on marg — [a]) $T_2$ $G_{1\,2\,3}$ ( second time ) $_5$ माळवाधिपतिश्चैव — [c]) $T_2$ $G_{1\,4}$ शूरश् , $T_3$ ( second time ) शल्यश् , $G_3$ ( second time ) $_5$ शौर्यश् ( for शैब्यश् ) $K_3$ सौवीरो राजसैन्यश्च — [d]) $G_2$ पौण्ड्रश् ( for पाण्ड्यश् ) — $T_1$ om $15^{ef}$ — [f]) $Dn_1$ $T_2$ नाग्नजिच् ; $G_1$ नाग्नि° ( for नग्न° ) $T_3$ $G_3$ ( both second time ) $_4$ M महारथ ( for °बल ) — After 15, $K_3$ Dn Ds $D_5$ ins

900* काश्मीरराजो गोनर्दो दरदाधिपतिर्नृप. ।
[ $D_5$ तथा ( for नृप ) ]

$K_3$ Dn Ds $D_5$ cont $K_{1\,4}$ $\tilde{N}$ V B $D_{1,\,3\,4\,6}$ $T_{2\,3}$ ( both times ) $_4$ $G_{1\,2\,3}$ ( first time ) $_5$ ins after 15 : $K_2$ after 14 $D_2$ after $14^{ab}$

901* दुर्योधनादयश्चैव धार्तराष्ट्रा महाबला· ।
[ $\tilde{N}_1$ $V_3$ [अ]न्ये ( for [ए]व ) $T_{3\,4}$ सुयोधनादयश्चैव ( for [a] ). ]

16 [a]) $Ś_1$ बहवो ( for राजानो ) — [b]) $\tilde{N}_{1\,3}$ ( marg. ) $V_1$ $D_5$ $T_4$ महाबला ( for °रथा. ) $Ś_1$ राजानो बलगर्विता — [d]) $D_2$ यवनाधिपतिस्तथा ( cf $15^a$ )

17 [c]) $Ś_1$ न्यधुः ( for ऊषु. ) $G_3$ ( second time ) $M_4$

ते शूरसेनानाविश्य प्रभूतयवसेन्धनान् । ऊषुः संरुध्य मथुरां परिक्षिप्य बलैस्तदा ॥ १७

इति श्रीहरिवंशे अशीतितमोऽध्यायः ॥ ८० ॥

८१

वैशंपायन उवाच ।

मथुरोपवने गत्वा निविष्टांस्तान्नराधिपान् ।
अपश्यन्वृष्णयः सर्वे पुरस्कृत्य जनार्दनम् ॥ १
ततो हृष्टमनाः कृष्णो रामं वचनमब्रवीत् ।
त्वरते खलु कार्यार्थो देवतानां न संशयः ॥ २
यथायं संनिकृष्टो हि जरासंधो नराधिपः ।
लक्ष्यन्ते हि ध्वजाग्राणि रथानां वातरंहसाम् ॥ ३
एतानि शशिकल्पानि नराणां विजिगीषताम् ।
छत्राण्यार्य विराजन्ते प्रोच्छ्रितानि सितानि च ॥ ४
अहो नृपरथोदग्रा विमलाश्छत्रपङ्क्तयः ।
अभिवर्तन्ति नः शुभ्रा यथा खे हंसपङ्क्तयः ॥ ५
काले खलु नृपः प्राप्तो जरासंधो महीपतिः ।

---

सक्षिप्य ( for संरुध्य ) $D_3$ अन्वरुन्धंस्तु मथुरां — $^d$ ) $T_3$ ( second time ) परिवृत्य ( for °क्षिप्य ) N ( except $Ś_1$ ) $T_{2.3}$ ( first time ) $_4$ $G_{1\ 2\ 4\ 5}$ पुरस्कृत्य बलं तदा

Colophon om in $K_3$ $D_{1\ 4\ 6}$ $T_{2\ 3}$ ( first time ) $_4$ $G_{1\ 2\ 3}$ ( first time ) $_{4\ 5}$ — *Mention of the Epic* $Ñ_3$ $Ds_2$ $T_3$ — *Mention of Khila* $Ś_1$ $K_4$ $Ñ_3$ V B Dn $Ds_1$ $D_3$ — *Adhy name* $Ś_1$ $Ñ_3$ $V_1$ B जरासंधोद्योग , $K_{1.4}$ जरासंधोद्यम॰ , $K_2$ $Ñ_{1\ 2}$ $V_{2\ 3}$ Dn Ds $D_{2.3\ 5}$ $G_3$ ( second time ) मथुरोपरोध॰ , $M_3$ मथुरायुद्धम् , $M_4$ मथुरानिरोध . — *Adhy no* ( figures, words or both ) $Ñ_3$ $V_1$ $B_2$ 91 , $V_2$ 92 , $V_3$ 90 , Dn $Ds_2$ 89 , $D_3$ 95 , $T_1$ $G_3$ ( second time ) $M_4$ 106 , $T_3$ ( second time ) 109 , $M_{1-3}$ 107 . — *Śloka no* Dn $D_3$ 22 , $Ds_2$ 21 — After adhy 80, $G_3$ ( first time ) ins a passage given in App I ( No 16 ).

## 81

☞ For the sequence in $T_1$ M and the repetition in $T_3$, cf. v l adhy 80

1 $D_6$ $T_2$ $G_{1\ 4\ 5}$ $M_4$ ins a passage given in App I ( No 16 ) after the ref — $^a$ ) $Ś_1$ सर्वान् , $K_3$ $Ñ_{1.3}$ $V_1$ $B_1$ Ds $D_{2-4}$ $G_2$ मत्वा ( for गत्वा ) $D_6$ $T_{1\ 2.4}$ $G_{1\ 3-5}$ M मथु( $D_6$ $M_{1-3}$ °थु )रोपवनं ग( $G_4$ म )त्वा . — $^b$ ) $Ś_1$ महानुगान् ; $T_{1\ 3}$ ( second time ) $G_3$ $M_4$ महारथान् ( for नराधिपान् ) $T_3$ ( first time ) निविष्टान्सर्वपार्थिवान् ; $M_{1-3}$ °ष्टास्ते महारथाः — After 1, $T_1$ $G_3$ $M_{1-3}$ ins. :

902* तानागतान्नृपान्राजन्मागधान्राजसत्तमान् ।

[ $T_1$ $G_3$ दृष्ट्वा ( for राजन् ) $T_1$ नृप- ( for राज- ) ]

2 $^b$ ) $M_{1\ 2}$ वचनं चेदमब्रवीत् — $^c$ ) $K_3$ देव , $T_2$ ऽखिल- , $G_{1\ 4}$ किल ( for खलु ). $D_4$ त्वरन्ते खलु कार्यार्था — $^d$ ) $D_{3-5}$ असंशयम् ( for न संशयः ). $Ñ_3$ ( marg ) $V_1$ $D_6$ $T_2$ $G_{1\ 2\ 4\ 5}$ देवाना नात्र संशयः.

3 $^a$ ) $T_3$ ( first time ) $M_{1\ 2}$ यथा स ; $T_4$ यथा हि ; $M_3$ तथा स ( for यथाय ). $D_6$ वै ( for हि ) — $^b$ ) $K_4$ निपातित ; $V_3$ महाबलः ( for नराधिपः ) — $^c$ ) $Ñ_3$ $V_1$ $D_4$ च ( for हि ). — $^d$ ) $K_3$ $V_1$ $B_1$ $T_4$ -रंहसा ( for °साम् ). — After 3, $T_1$ $M_{1-3}$ ins a passage given in App I ( No 16 )

4 $T_3$ ( second time ) om $4^{ab}$ — $^a$ ) $Ñ_3$ ( marg ) $V_1$ $D_6$ [अ]शनि- ( for शशि ) — $^b$ ) $K_2$ Ds $D_3$ गां ( for वि- ) $K_4$ -जयैषिणाम् , $Ñ_1$ $G_3$ $M_{2-4}$ जिगीषुणाम् ( for °षताम् ). $M_1$ रथानां विजिगीषुणाम् — $^c$ ) $D_6$ $T_2$ चित्राणि ( for छ° ) $D_3$ [अ]त्र वि- , $D_{4.5}$ [उ]परि ( for [आ]र्य वि- ). — $^d$ ) $K_1$ प्रोत्थितानि ; $Ñ_1$ $V_3$ $T_1$ उत्थि° , $T_2$ $G_1$ प्रोज्झि° ( for प्रोच्छ्रि° ) $G_3$ वै ( for च ) $Ś_1$ व्युच्छ्रितानि च तानि च , $M_4$ उच्छ्रितानि च तानि वै

5 $T_3$ ( second time ) om 5 — $^a$ ) $V_3$ बलोदग्रा ; $D_5$ $G_3$ $M_4$ वरोदग्रा ( for -रथो° ) $K_{1\ 4}$ अमी नृपवरोदग्रा , $Ñ_1$ अहो रथनृपो° — $^b$ ) $K_3$ शत- ( for छत्र- ). — $K_3$ $G_3$ om ( hapl ) $5^{cd}$ — $^c$ ) $Ñ_3$ ( marg ) $V_1$ $G_1$ -वर्धन्ति ; $T_1$ -नोदन्ति ( for -वर्तन्ति ) $Ś_1$ नस्तत्र , $Ñ_3$ से शुभ्रा ; $D_3$ नः शुक्ला , $G_2$ नह्यन्तो ( for नः शुभ्रा ) $G_4$ आहवार्थाय नः शुभ्रा — $^d$ ) $V_1$ रथाः ( for यथा ) $D_3$ $T_1$ $M_{1-3}$ वै ; $T_3$ ते ; $G_4$ [अ]भ्रे ( for खे )

आवयोर्युद्धनिकषः प्रथमः समरातिथिः ॥ ६
आर्य तिष्ठाव सहितावनुप्राप्ते महीपतौ ।
युद्धारम्भः प्रयोक्तव्यो बलं तावद्विमृश्यताम् ॥ ७
एवमुक्त्वा ततः कृष्णः स्वस्थः संग्रामलालसः ।
जरासंधमभिप्रेप्सुश्चकार बलदर्शनम् ॥ ८
वीक्षमाणश्च तान्सर्वान्नृपान्यदुवरोऽव्ययः ।
आत्मानमात्मना वाक्यमुवाच हृदि मन्त्रवित् ॥ ९
इमे ते पृथिवीपालाः पार्थिवे वर्त्मनि स्थिताः ।
ये विनाशमिहेष्यन्ति शास्त्रदृष्टेन कर्मणा ॥ १०
प्रोक्षिताः खल्विमे मन्ये मृत्युना नृपपुंगवाः ।
स्वर्गगानि तथा ह्येषां वपूंषि प्रचकाशिरे ॥ ११
स्थाने भारपरिश्रान्ता वसुधेयं दिवं गता ।
एषां नृपतिमुख्यानां बलौघैरभिपीडिता ।
भूमिर्निरन्तरा चेयं बलराष्ट्राभिसंवृता ॥ १२
स्वल्पेन खलु कालेन विविक्तं पृथिवीतलम् ।
भविष्यति नरेन्द्रौघैः शतशो विनिपातितैः ॥ १३
जरासंधस्ततः क्रुद्धः प्रभुः सर्वमहीक्षिताम् ।
नराधिपसहस्रौघैरनुयातो महाद्युतिः ॥ १४
व्यायतोदग्रतुरगैः सयन्त्रैः सुसमाहितैः ।
रथैः सांग्रामिकैर्युक्तैरसङ्गगतिभिः क्वचित् ॥ १५ C 4989 B 2 35 16 P 2. 35. 16

6 T3 ( second time ) om $6^{cd}$ — $^{c}$ ) D3 -कुशल·, G5 M4 -निष्कर्ष , M1–3 -निकषे ( for °ष ) T2 G1 आवयोर्युद्धमाकाङ्क्षन् — $^{d}$ ) G3 M द्वितीय ( for प्रथमः ) T3 प्रथम समरोद्वह

7 $^{a}$ ) Ś1 तिष्ठाम , K1 तुष्यात्र ( for तिष्ठाव ) — $^{b}$ ) Ś1 ह्यनुप्राप्ते , Ñ1 अनुप्राप्तौ ( for °प्राप्ते ) T3 ( second time ) महाबल ( for महीपतौ ) G3 M4 अनुप्राप्तो महीपति — $^{c}$ ) K2 D3 प्रक( D3 °व )र्तव्यो ( for प्रयोक्तव्यो ) — $^{d}$ ) Ś1 तद्धि ( for तावद् ).

8 $^{b}$ ) K3 4 D1 शूर· ( for स्वस्थ ) — $^{c}$ ) Ś1 -प्रेक्ष्य ( for -प्रेप्सुश् ) K3 4 Ñ1 2 V Dn D1–4 T1 3 ( first time ) 4 G1. 3 जरासधबलं प्रे( Ñ1 °बलप्रे- , Dn D3 T3 4 °वधं प्रे )प्सुश्, D5 °संधवधेप्सुश्च

9 $^{a}$ ) V2 तु ( for च ) — $^{b}$ ) T2 G4 5 युद्धपरो , G2 यदुपुरे ( for °वरो ). G( ed. ) नृपान्यदुवरोत्तम — $^{c}$ ) N ( except Ś1 D2 3 ) T1 2 3 ( both times ) 4 G आत्मनैवात्मनो ( K1 °ना ) वाक्यम् ( T2 °चम् ) — $^{d}$ ) T3 ( first time ) गुरु ( for हृदि ) Ñ1 मन्त्रयन् ; T1 3 ( second time ) M1–3 मन्त्रितम् ( for मन्त्रवित् )

10 T3 ( second time ) om $10^{a}$–$12^{d}$ — $^{a}$ ) D6 T2 G1. 2 4 5 च ( for ते ) — $^{b}$ ) T1 G3 M4 युद्धवर्त्मनि संस्थिताः — $^{c}$ ) N ( except Ś1 ) T2–4 G1 2. 4 5 गमिष्यन्ति ( for इहेष्यन्ति ) G3 M4 सहसा नाशमेष्यन्ति — $^{d}$ ) D3 मत्प्रदिष्टेन कर्मणा.

11 T3 om 11 ( cf v 1 10 ) — $^{a}$ ) Ś1 सर्वे ( for मन्ये ). K Ñ V B D T G M4 प्रोक्षि( K4 D3 6 T1 2 G प्रेषि ) तान्खल्विमान्मन्ये — $^{b}$ ) K1 D2. 3 सत्तमान् , K2–4 Ñ V B Dn Ds D1 4–6 T G M4 पुंगवान् ( for °वाः ) — $^{c}$ ) M2 [अन्]येषां ( for ह्येषां ). N ( except Ś1 ) T1 2 4 G1 3–5 M4 स्वर्गगामीनि चाप्ये( T1 G3 M4 सर्वे )षां , G2 °कामानि वाप्येषां

12 T3 om $12^{abcd}$ ( cf v 1 10 ) G4 om $12^{ab}$ — $^{a}$ ) G1 स्थिते ( for स्थाने ) T2 स्थिता भारत विश्रान्ता· — $^{b}$ ) S1 चिर गता , D6 दिवो गता ( for दिवं गता ) — $^{c}$ ) D3 एषा ( for एषा ) K1 D2 नृवर- , K3 4 Ñ V1 3 D1. 4–6 T2–4 G1 2 4 5 M4 नृपाणा ( for नृपति- ) — $^{d}$ ) Ś1 प्रति , K2 V1 Ds2 D4 अनि- , V3 अव- , Ds1 D2 6 T2 G5 अपि , T4 अधि ( for अभि- ) — $^{e}$ ) K1 3 4 Ñ2 3 V Dn Ds D1–5 T3 ( both times ) 4 G3 M4 मही ( for भूमिर् ) Ñ1 वसुधा च निरस्तेय , D6 T2 G1 2 4 5 निरन्तरेयं वसुधा — $^{f}$ ) Ś1 बहु- ( for बल- ) K4 D3 सनता , Ñ1 3 V B D6 T2 G1. 4 5 M1 2 -संतता , D2 -संमता ( for -संवृता ). T1 बलराज्ञाभिसतता , T3 ( second time ) G3 बलै राज्ञां हि संतता , T4 वनराष्ट्राभिसत्कृता

13 $^{a}$ ) B2 G2 अल्पेन ; T1 सर्वेण ( for स्वल्पेन ) — $^{d}$ ) G4 -घातितै ( for पा° ) — After 13, K3 ins an addl. colophon, mentioning the Epic, Khila and adhy no. 82 While T1 3 ( second time ) G1 3 5 M4 ins after 13

903* एवं चिन्तयतस्तस्य कृष्णस्याद्भुतकर्मण· ।

While M1 2 ins after 13

904* एवं संचिन्त्य भगवान्युद्धाय कृतनिश्चय ।
संकर्षणेन सहितस्तस्थौ गिरिरिवाचल ॥

14 Before 14, some Mss ins वैशंपायनः — $^{b}$ ) K3 शत्रु. ( for प्रभु ) — $^{d}$ ) Ñ3 ( marg ) V1 अनुप्राप्तो , D6 T1 2 3 ( both times ) G1 2 4 5 M अभियातो ( for अनुयातो ). Ñ1 2 V2 3 महीपति. ; Ds2 महामतिः ( for °द्युतिः ).

15 T3 ( second time ) om. $15^{ab}$ — $^{b}$ ) K1 3 Ñ3 V2 Ds D2 4 5 G2 3 सुयानै , K4 सुजातै , Ñ2 3 ( marg ) V1 3 B Dn T1 सादिभिः ; D2 ( *sup lin.* ) सुनागैः , D6

हेमकक्ष्यैर्महाघण्टैर्वारणैर्वारिदोपमैः ।
महामात्रोत्तमारूढैः कल्पितै रणकोविदैः ॥ १६
स्वारूढैः सादिभिर्युक्तैः प्रेक्षमाणैः प्रवल्गितैः ।
वाजिभिर्मेघसंकाशैः प्लवद्भिरिव पत्तिभिः ॥ १७
खड्गचर्मधरोदग्रैः पत्तिभिर्वेल्गिताम्बरैः ।
सहस्रसंख्यासंयुक्तैरुत्पतद्भिरिवोरगैः ॥ १८
एवं चतुर्विधैः सैन्यैः कम्पमानैरिवाम्बुदैः ।
नृपोऽभियातो बलवाञ्जरासंधो धृतव्रतः ॥ १९
स रथैर्मेघनिर्घोषैर्गजैश्च मदशिञ्जितैः ।
हेषमाणैश्च तुरगैः क्ष्वेडमाणैश्च पत्तिभिः ॥ २०
नादयानो दिशः सर्वास्तस्याः पुर्या वनानि च ।
स राजा सागराकारः ससैन्यः प्रत्यदृश्यत ॥ २१
तद्बलं पृथिवीशानां दृप्तयोधजनाकुलम् ।
क्ष्वेडितास्फोटितरवं मेघसैन्यमिवाबभौ ॥ २२
रथैः पवनसंपातैर्गजैश्च जलदोपमैः ।
तुरगैश्च जवोपेतैः पत्तिभिः खगमैरिव ॥ २३
विमिश्रं सर्वतो भाति मत्तद्विपरथाकुलम् ।
घर्मान्ते सागरगतं यथैवाभ्रबलं तथा ॥ २४

सयानैः, T2 G1. 4 5 साधनै, M1–3 सुयात्रा- (for सयत्रैः). D1 3 सुयानै सुमहाहितै. — $^{c}$) Ś1 K1 V1 Dn2 संग्रामिकैर् (for सां°). — G4 om. (hapl) $15^{d}$–$17^{a}$. — $^{d}$) D2 उत्पताद्भि पतत्रिभि.; D3 उत्पतद्भिरिवाम्बरम्

16 G4 om 16 (cf. v l 15). — $^{a}$) T2 महाभात्रैर् (for °घण्टैर्) — T3 (second time) om $16^{c}$–$20^{b}$.

17 G4 om. $17^{a}$ (cf. v. l 15). T3 om 17 (cf v l 16). — $^{a}$) K1. 2 4 सारूढैः, V1 3 क्षा° (for स्वा°). — $^{b}$) K2 ह्रेषमाणैः; Ñ2 3 V B Dn Ds1 D3 6 T3 4 G2 4 5 प्रेङ्ख°, D4 प्रेष°, T1 G3 M4 प्रेक्षणीयै, T2 G1 हर्षमाणैः; M1 2 प्रेष्य° (for प्रेक्ष°). — $^{c}$) K2 -संघातै; V2 -निर्घोषै (for -संकाशैः). — $^{d}$) T1 पतद्भिर् (for प्लवद्भिर्) K D1 पत्रिभिः; B3 D3 पर्वतै; D6 G5 पक्षिभि, G1 पङ्क्तिभिः (for पत्तिभिः) G3 पतद्भिरिव पत्रिभिः; M1–3 प्रवल्गद्भिश्च पङ्क्ति(M2 °त्ति)भिः

18 T3 om 18 (cf v l 16). — $^{a}$) K1–3 Ñ1 V2 Dn Ds D1–3 6 G1. 2. 4 5 M1–3 चर्मखड्ग- (for खड्गचर्म-). — $^{b}$) K1 पत्रिभिर्, D6 पङ्क्तिभिर् (for पत्तिभिर्). Ś1 पत्तिभिर्वेल्लिताङ्गदै; Ñ2 V2 B2 T1. 2 G3 M4 °भिर्बलिनां वरै; Dn1 °भिश्चलिताम्बरै — $^{c}$) K1 4 -मुख- (for संख्या-) — $^{d}$) M1–3 [अ]म्बरम् (for [उ]रगैः).

19 T3 om 19 (cf v. l. 16). — $^{a}$) Ds2 बहुविधैः (for चतुर्विधै). — $^{b}$) V3 कल्पमानैर् (for कम्प°). T3 [अ]म्बुभिः (for °दैः). Ś1 कल्प्यमानैरिवार्णवै — $^{c}$) T2 नृपैः (for नृपो) K1 2 4 Ñ2. 3 V1 2 B1 D1–6 T G1 2 4 5 प्र- (for ऽभि-). — $^{d}$) D2 3 T3 दृढव्रतः, D5 वृतस्ततः, T2 G1 M3 प्रतापवान्; M1 2 महाद्युतिः (for धृतव्रत).

20 T3 om $20^{ab}$ (cf v l 16). — $^{a}$) V3 -सघोषैर्, T3 -संकाशैर् (for -निर्घोषैर्). — $^{b}$) K1 -संहितै; K2 -दंशितैः, K4 G3 -संयुतैः; D3 -गर्वितैः; D4 -संश्रितै, T1 -गर्जितैः; T2 G1 -दर्पितैः, G3 M4 -बृंहितैः (for -शिञ्जितैः) T3. 4 हस्तिभिर्मेघशिञ्जितै. — $^{c}$) V2 3 ह्रेषमाणैश् (for हेष°). — $^{d}$) K3 D4 5 खेलमानैश् (for क्ष्वेडमाणैश्) D6 T2 पङ्क्तिभि (for पत्ति°)

21 $^{a}$) Ś1 K2 Dn T1 2 3 (second time) G1 4 M4 नादयन्तो, Ñ3 V1 3 °मानो (for °यानो) — $^{b}$) Ñ2 V3 बलानि (for वनानि) - After $21^{ab}$, T1 3 (second time) G3. 5 M G(ed) ins ·

905* अक्षौहिण्या च विंशत्या अनुयातो नराधिप ।

[ M1 3 अक्षौहिणीभिर्विंशत्या (for $^{a}$) T1. 3 M4 G(ed) ह्यनु- (for अनु-) M1–3 महाद्युति (for नराधिप) ]

— $^{d}$) V2 समदृश्यत, T4 प्रत्यपद्यत (for °दृश्यत)

22 $^{a}$) Ś1 अनन्त-, K4 D1 तद्वनं (for तद्बलं) — $^{b}$) K1 (marg as in text). 2. 4 V3 B2 Dn D1 T1 G3 हृष्ट-, B1 Ds1 तृप्त- (for दृप्त-). Ñ2 समार्गणम्; D5 बलाकुलम् (for -जना°) — $^{c}$) Ś1 K1 2 Ñ3 V1 2 B1 3 D3 D5 T3 (second time) G3 M4 रवैर् (for रवं) — $^{d}$) T3 (first time) सैन्यं मेघ (for मेघसैन्यम्)

23 T3 (second time) om 23–24. — $^{a}$) B3 -संघातैर्, D5 T3 4 संकाशैर् (for -संपातैर्) — Ñ2 om (hapl.) $23^{bc}$ — $^{b}$) K1 चलपर्वतवद्गजैः — V2 om $23^{cd}$ — $^{c}$) K1 सदश्वैश् (for तुरगैश्). — $^{d}$) K Ñ V1 3 B Dn Ds D1 2 4–6 T1 3 G2 4 5 पत्तिभि. खगसप्रोप(K3 B2 °त्त)मै; T2 G1 °भि खेचरोत्तमै, T4 °भिश्च खगोत्तमै

24 T3 om 24 (cf v l 23). — $^{a}$) M1–3 मिश्रितं (for विमिश्र) — $^{b}$) Ñ1 2 पत्ति (for मत्त-) Bom. Poona eds G(ed) -समाकुलम् (for रथा°). — $^{c}$) D3 गते, M1 2 -गतो (for गतं) T3 घर्मान्ते सागरं गन्तुं — $^{d}$) Ñ1 2 V3 -चय, M -गणस् (for बल). K Ñ3 V1 2 B D T2–4 G1. 2 4. 5 यथाभ्रपटलं तथा.

25 $^{a}$) M1–3 तु (for ते). — $^{c}$) G3 पुरं (for पुरीं). V1

सबलास्ते महीपाला जरासंधपुरोगमाः ।
परिवार्य पुरीं सर्वे निवेशायोपचक्रिरे ॥ २५
बभौ तस्य निविष्टस्य बलश्रीः शिविरस्य वै ।
शुक्लपर्यन्तपूर्णस्य यथा रूपं महोदधेः ॥ २६
वीतरात्रे ततः काले समुत्तस्थुर्महीक्षितः ।
आरोहणार्थं पुर्यास्ते समीयुर्युद्धलालसाः ॥ २७
समवायीकृताः सर्वे यमुनामनु ते नृपाः ।
निविष्टा मन्त्रयामासुर्युद्धकालकुतूहलाः ॥ २८
तेषां सुतुमुलः शब्दः शुश्रुवे पृथिवीक्षिताम् ।
युगान्ते भिद्यमानानां सागराणां यथा स्वनः ॥ २९

तेषां सकञ्चुकोष्णीषाः स्थविरा वेत्रपाणयः ।
चेरुर्मा शब्द इत्येवं ब्रुवन्तो राजशासनात् ॥ ३०
तस्य रूपं बलस्यासीन्निःशब्दस्तिमितस्य वै ।
लीनमीनग्रहस्येव निःशब्दस्य महोदधेः ॥ ३१
निःशब्दस्तिमिते तस्मिन्योगादिव महार्णवे ।
जरासंधो बृहद्वाक्यं बृहस्पतिरिवाददे ॥ ३२
शीघ्रं समभिवर्तन्तां बलानि पृथिवीक्षिताम् ।
सर्वतो नगरी चेयं जनौघैः परिवार्यताम् ॥ ३३
अश्मयन्त्राणि युज्यन्तां क्षेपणीयाश्च मुद्गराः ।
ऊर्ध्वं चापानि वाह्यन्तां प्रासा वै तोमरास्तथा ॥ ३४ C 5009 B 2. 35. 34 P 2 35 34

---

Ds1 D6 T2 G1 2 5 सर्वा ( for सर्वे ) — $^{d}$ ) D4 5 निवासाय ( for निवेशाय ) Ś1 -तस्थिरे, K2 V2 B1 2 Ds T1 3 ( second time ) G3 M4 चक्रमु , B3 -चुकुशु ( for -चक्रिरे )

26 $^{a}$ ) K3 Ñ1 D5 बहिस्तस्य , D1 व्यञ्जितस्य , T4 सहितस्य ( for बभौ तस्य ) G3 M4 प्र- ( for नि- ) M1–3 ततस्तस्य बभौ रूपं — $^{b}$ ) K1 Dn1 फलश्री , B1 वनश्री , D1 5 बभौ श्रीः , D3 T1 3 ( second time ) G3 M4 बलस्य ( for °श्री ) B1 T3 ( both times ) 4 M च ( for वै ) — $^{c}$ ) D3 T1 G3 M -पर्वणि , T3 ( first time ) 4 पक्षे तु ( for पर्यन्त- ) — $^{d}$ ) Ś1 पूर्ण- ( for रूपं )

27 $^{a}$ ) V2 वीतमात्रे ( for °रात्रे ) D5 तथा ( for ततः ) — $^{c}$ ) T3 ( first time ) ते पुर्यां , T4 ते पुर्या ( by transp ) Ś1 आरोहमाणा. पुर्यास्ते , K1 3 4 Ñ1 Dn2 अभिरोहणार्थं पुर्यास्ते ( K3 पुर्याश्च , K4 वै पुर्या ) ( hypermetric ). — $^{d}$ ) D8 सर्वे ते ( for समीयुर् ).

28 T3 ( second time ) om $28^{cd}$ — $^{d}$ ) Ś1 D5 -काले ( for -काल- ) K3 V1 B3 G2 M4 -कुतूहलात् ( for °ला ) K1 4 D2 3 योद्धुकामा. कुतूहलात् , D6 युद्धकाले महाबला.

29 $^{a}$ ) Ś1 K3 D3 T2 G4 M4 तु , K2 V2 D4 5 T3 ( first time ) 4 G2 M2 स ( for सु ) T1 तेषा तु तुमुले शब्दे — $^{b}$ ) V1 D6 T2 G1 4 5 शुश्राव ( for शुश्रुवे ) — After $29^{ab}$, T2 reads $33^{cd}$, repeating it in its proper place D5 reads $29^{c}$–$30^{b}$ on marg — $^{d}$ ) T3 ( second time ) समुद्राणां ( for सागराणां ) K Ñ1 V1 2 B D T1 2 3 ( first time ) 4 G इव स्वनः , Ñ3 V3 इव ध्वनि. ( for यथा स्वन. ) M4 समुद्राणामिव स्वनः

30 $^{c}$ ) V3 D4 शब्दम् ( for शब्द ) — $^{d}$ ) K1–3 Ñ2, 3 V B1, 2 Dn Ds D1 2, 4–6 T1 2 3 ( both times ) G M4 वदन्तो , K4 वहन्तो , D3 चरन्तो ( for ब्रुवन्तो )

31 T3 ( second time ) om 31 — $^{a}$ ) G5 [अ]स्य ( for [आ]सीन् ) — $^{b}$ ) T2 G1 4 5 नि शब्दस्य च तस्य वै — $^{c}$ ) K1 4 Ñ2 3 V B D T2–4 G -भुजगस्य ( for -ग्रहस्येव ) Ñ1 निमीलितग्रहस्तस्य — $^{d}$ ) K3 4 Ñ3 V1 2 B Dn Ds D1 T यथोदधेः ( for महो° )

32 $^{a}$ ) K2 D3 M1 नि शब्दे ( for °ब्द- ). Ds2 राजन् , T1 3 ( second time ) G3 M4 सैन्ये ( for तस्मिन् ) — $^{b}$ ) D2 ( *sup lin* as in text ) महोदधे , M1–3 बलार्णवे ( for ( for महा° ) T1 3 ( second time ) G3 M4 नियोगादिव चार्णवे — $^{c}$ ) K2 Ñ1 V3 B3 D6 T2 G1 2 4 5 महद्वाक्यं ; K3 बृहद्वाचं , T3 ( first time ) M4 ऽब्रवीद्वाक्यं ( for बृह° )

33 $^{a}$ ) K2 3 समति- ( for समभि- ) Ñ3 V1 -वीक्ष्यन्तां ; D6 T2 G1 4 5 -वर्धन्ता ( for -वर्तन्ता ) — T2 reads $33^{cd}$ for the first time after $29^{ab}$ — $^{d}$ ) V3 जलौघै परिपूर्यताम्

34 $^{a}$ ) M2 साराणि ( for -यन्त्राणि ) — After $34^{ab}$, Ñ2 3 V1 2 B Ds D4–6 T1 G3 G(ed) ins

906* कार्या भूमि· समा सर्वा जलौघैश्च परिप्लुता ।

[ V1 पुर्या ( for कार्या ) V1 D6 जनौघैश् ( for जलौ° ). Ñ2 D5 जलौघै परिप्लाविता ( D5 °वार्यताम् ), D4 जनौघै परिपूरिता ( for $^{b}$ ) ]

— $^{c}$ ) K2 चापि च , B1 चापि प्र , Cal ed चापि नि- ( for चापानि ). T1 हन्यन्ता , M2 धार्यन्ता ( for वाह्यन्ता ) Ñ3 ( marg ) V1 B3 D5 G4 ऊर्ध्वं चापि नियुज्य( B3 निवार्य- , D5 प्रयुज्य- ; G4 निपात्य )न्तां — $^{d}$ ) K2 पाशा ( for प्रासा ) T8 ( both times ) 4 प्रासाद्यैस्तोमरैस्तथा .

35 $^{a}$ ) S1 V3 [अ]पि ( for [ए]व ). K1 3 V2 B3 Dn टङ्काद्यै , D3 G2 टङ्केन ( for टङ्कौघै ) Ñ3 V1 विदा( V1 °दी ),

**ततोऽन्तरिक्षे वागासीत्सुस्वरा लोकसाक्षिणी । न त्वया राम वध्योऽयमलं खेदेन माधव ॥ २०**

$D_3$ $T_4$ व्यपोश° ( for °हरत् ) — K $\tilde{N}_{2,3}$ V B Dn Ds $D_{1-5}$ $T_3$ ( first time ) $_4$ $G_2$ ins after 19 $D_6$ $T_2$ $G_{1,4,5}$ cont after 937*

936* एव तौ तत्र संग्रामे विचरन्तौ महाबलौ ।
मण्डलानि विचित्राणि विचेरतुररिंदमौ ॥
व्यायच्छन्तौ चिरं कालं परिश्रान्तौ च तस्थतु ।
समाश्वास्य मुहूर्तं तु पुनरन्योन्यमाह्वताम् ॥
एव तौ योधमुख्यौ तु राम युयुधतुश्चिरम् ।
न च तौ युद्धवैमुख्यमुभावेव प्रजग्मतुः ॥
अथापश्यद्गदायुद्धे विशेष तस्य वीर्यवान् ।
राम. क्रुद्धो गदां त्यक्त्वा जग्राह मुसलोत्तमम् ॥
तमुद्यतं तदा दृष्ट्वा मुसलं घोरदर्शनम् ।
अमोघ बलदेवेन क्रुद्धेन तु महारणे ॥

[ ( L 1 ) $T_2$ तत्र तु ( for तौ तत्र ) $\tilde{N}_3$ $V_1$ एव च ( $V_1$ तौ ) सुमहाबाहू ( for $^{a}$ ) $\tilde{N}_3$ $V_1$ महासत्त्वौ ( for विचरन्तौ ) —( L 3 ) $K_{1,4}$ $D_1$ व्याजेच्छिन्तौ ( for व्यायच्छन्तौ ) $D_5$ महाबलौ ( for च तस्थतु ) — ( L 4 ) $K_2$ $B_{1,2}$ Ds $D_{3,6}$ $T_2$ $G_{1,2,4,5}$ अ( $G_{2,4}$ आ )ह्वताम्, $T_4$ आसताम् ( for आह्° ) $B_3$ $D_4$ पुनरन्योन्यज( $D_4$ °नि )घ्नताम् ( for $^{b}$ ) — ( L 5 ) $B_3$ रणे ( for सम ) $T_2$ $G_1$ समन्ताद्युयुधुश्चिरम् ( for $^{b}$ ) — ( L 6 ) $K_2$ उभौ प्रत्यभिजग्मतु ( for $^{b}$ ) — After line 7, $G_5$ reads lines 24–27 of 937* — ( L 9 ) $V_3$ अयो ( for तदा ) ]

While $D_6$ $T_{1,2,3}$ ( second time ) $G_{1,3-5}$ M ins after 19

937* क्रुद्धोऽथ रामभद्रस्तु गदया तं जगाम ह ।
जरासंधोऽथ गदया बलभद्र समाहनत् ॥
प्रथमस्त्वथ रामेण गदापाद· समाददे ।
द्वितीयो मगधेन्द्रेण तृतीयं तु हलायुध ।
चतुर्थं तु जरासध पञ्चम तु यदूद्वह· ॥
तयोः पादप्रहारैश्च चालयामास मेदिनीम् ॥
ततो देवा सगन्धर्वा यक्षाश्च परमर्षय· ।
भीताः स्वस्तीति चैवाहुर्लोकानां ब्राह्मणैश्च ह ॥
ततः क्रुद्धो जरापुत्रस्ताडयामास वक्षसि ।
शोणितं चोद्वमन्रामः श्रमं च समवाप ह ॥
विश्रम्य भूमौ किंचित्तु पुनरुत्थाय यादव· ।
आहत्य गदया मूर्ध्नि सिंहनादं समानदत् ॥
पपात च महीं वीरो गतासुरिव निश्वसन् ।
हतो हतो जरासध इत्यूचुर्यादवेश्वराः ॥
संज्ञां च प्रतिलभ्याशु जरासंध प्रतापवान् ।
गदया च समाजघ्ने वक्षस्येव हलायुधम् ॥
मूर्छां चैव समापेदे संज्ञां च प्रतिलब्धवान् ।
ततो रुधिरराशिस्तु बभौ जलमिवोद्गतः ॥
गदाजर्जरसर्वाङ्गौ रेजतु. किंशुकाविव ।
समादीप्तौ तु राजेन्द्र स्थितौ विधनुर्धरौ ॥
गदाहतौ महावीरौ केवलौ युद्धरङ्गिणौ ।
शुशुभाते गदाहस्तौ परस्परवधैषिणौ ॥
द्वावेव मृत्यू राजेन्द्र संगताविव शोभितौ ॥
तत· क्रुद्धो हलधरश्छेत्तुमैच्छज्जरासुतम् ।
ऊरू च पोथयामास गदया राजसंसदि ॥
ऊर्वो रक्त समापेदे मज्जा सम्भवत्तत ।
ततो हली जरासधं शिरश्छेत्तुमुदैक्षत ॥

[ ( L 1 ) $T_2$ $G_1$ बलभद्रस् ( for राम° ) $T_1$ क्रुद्धोऽथ रामस्तु तदा, $T_3$ $G_3$ $M_4$ बलभद्रस्तु गदया ( for $^{a}$ ) $T_3$ $G_3$ $M_4$ जरासध ( for गदया त ). — ( L 3 ) $T_1$ $G_3$ $M_4$ प्रथम तु तथा रामो, $T_3$ $M_3$ °मस्तु तदा रामो ( for $^{a}$ ) $D_6$ $T_2$ $G_1$ गदापात , $T_1$ $G_3$ $M_4$ °पात , $G_4$ °पाद ( for °पाद ) — ( L 4 ) $T_{1,3}$ $G_3$ द्वितीय ( $T_3$ °यो ) मगधेन्द्रोऽपि ( for $^{a}$ ) $T_1$ $G_3$ तृतीय मुसलायुध ( for $^{b}$ ) — ( L 5 ) $T_{1,3}$ $G_3$ $M_4$ जरापुत्र ( for °सध ) $D_6$ $T_{1,3}$ $G_3$ $M_4$ यदूत्तम ( for °द्वह ) — ( L 6 ) $M_{1-3}$ तत ( for तयो ) — ( L 8 ) $T_2$ $M_{1,2}$ ( *inf lin* as above ) $_3$ लोकाना ब्राह्मणै सह, $T_3$ °ना हितकाम्यया ( for $^{b}$ ). — ( L 10 ) $T_3$ मोह ( for श्रम ) — ( L 11 ) $G_1$ पुरस्ताद्याद-वोत्थित· ( for $^{b}$ ) — ( L 12 ) $D_6$ $T_3$ $G_5$ अथानदत्, $T_2$ $G_{1,4}$ चकार ह ( for समानदत् ) — ( L 13 ) $T_1$ $G_3$ $M_4$ स पपात ( for पपात च ) $T_3$ $G_3$ $M_{1-3}$ राजा ( for वीरो ) $T_2$ $G_{1,5}$ गतायुर् ( for °सर् ). — ( L 15 ) $T_3$ [अ]थ ( for [आ]शु ) — $T_3$ om line 17 — ( L 17 ) $T_2$ $G_{1,4}$ -पेदिवान् ( for -लब्धवान् ) — ( L 18 ) $T_1$ $G_3$ [उ]द्यत·; $T_3$ [उ]द्यतम् ( for [उ]द्गत ) $M_{1-3}$ बभौ जा( $M_2$ ना )प इवोत्कट ( for $^{b}$ ) — ( L 19 ) $T_1$ $G_3$ $M_{1-3}$ तौ जर्झरितसर्वाङ्गौ ( for $^{a}$ ) — $T_3$ om line 20 — ( L 20 ) $T_1$ $G_3$ M श्रमार्तौ तौ ( for समादीप्तौ ) $D_6$ $M_4$ राजेन्द्रौ ( for °द्र ) — ( L 21 ) $D_6$ -रागिणौ , $G_4$ -काङ्क्षिणौ ( for रङ्गिणौ ) — $T_3$ om line 23 — ( L 23 ) $D_6$ मत्तौ गजौ तौ राजेन्द्र ( for $^{a}$ ) — $D_6$ $T_2$ $G_{1,4}$ $M_4$ om lines 24–27 , $G_5$ reads the same after line 7 of 936* — ( L 24 ) $T_3$ हन्तुम् , $G_{3,5}$ भेत्तुम् ( for छेत्तुम् ) $M_3$ गदाधर ( for जरासुतम् ) — $T_3$ om line 26 — ( L 27 ) $T_3$ हन्तु ( for हर्तुं ) $G_{3,5}$ $M_{1-3}$ भेत्तुम् ( for छेत्तुम् ). ]

20 $^{a}$ ) $T_3$ ( first time ) अथ, $M_3$ तत्र ( for **ततो** ) $D_{2,6}$ ऽन्तरिक्ष , $M_{1-3}$ °रिक्षाद् ( for °**रिक्षे** ). — $^{b}$ ) $D_6$ **सुस्थिरा** ( for **सुस्वरा** ) $V_1$ **सुर-** ( for **लोक** ) $Ś_1$ $K_1$ -**साक्षिकी** ( for °**णी** ) $M_{1-3}$ **सुस्वरा लौकिकी विभो** — After $20^{ab}$, $Ś_1$ $K_2$ $\tilde{N}_{2,3}$ $V_{1,2}$ B Dn Ds $D_{2,5,6}$ ins ·

938* उवाच बलदेवं तं समुद्यतहलायुधम् ।

[ $\tilde{N}_{2,3}$ $V_{1,2}$ B Ds -महायुधम् ( for -हला° ). ]

— $^{d}$ ) $Ś_1$ वै देव ( for **खेदेन** ). $K_3$ $\tilde{N}_{2,3}$ V B Ds $T_2$ G

विहितोऽस्य मया मृत्युस्तस्मात्साधु व्युपारम ।
अचिरेणैव कालेन प्राणांस्त्यक्ष्यति मागधः ॥ २१
जरासंधस्तु तच्छ्रुत्वा विमनाः समपद्यत ।
न प्रजह्रे ततस्तस्मै पुनरेव हलायुधः ।
तौ व्युपारमतां चैव वृष्णयस्ते च पार्थिवाः ॥ २२
प्रसक्तमभवद्युद्धं तेषामेव महात्मनाम् ।
दीर्घकालं महाराज निघ्नतामितरेतरम् ॥ २३
पराजिते त्वपक्रान्ते जरासंधे महीपतौ ।
अस्तं याते दिनकरे नानुसस्रुस्तदा निशि ॥ २४
समानीय स्वसैन्यं तु लब्धलक्ष्या महाबलाः ।
पुरीं प्रविविशुर्हृष्टाः केशवेनाभिपूजिताः ॥ २५
जरासंधं तु ते जित्वा मन्यन्ते नैव तं जितम् ।
वृष्णयः कुरुशार्दूल राजा ह्यतिबलः स वै ॥ २६
दश चाष्टौ च संग्रामाञ्जरासंधस्य यादवाः ।
ददुर्न चैनं समरे हन्तुं शेकुर्महारथाः ॥ २७
अक्षौहिण्यो हि तस्यासन्विंशतिर्भरतर्षभ । C 5127 B 2. 36. 38 P 2. 36. 38

मागधे; Ñ1 Dn D2 3 मानद ( for माधव ).

21 D4 om ( hapl ) 21. — [a] ) Bom Poona eds G(ed) विहितो ( for विहितो ) K3 च ( for ऽस्य ) — [b] ) Ñ2 V3 T1 M1-3 साधो, D5 साध्ये ( for साधु ) — [d] ) K3 प्राणं ( for प्राणांस् ) K1 M4 त्यज्यति ( for त्यक्ष्यति )

22 [a] ) B3 ऽपि, D2 3 च ( for तु ) — [b] ) M4 समरात् ( for विमनाः ) K2 T4 प्रत्यपद्यत ( for सम° ) — [c] ) T3 ( second time ) पुनस् ( for ततस् ) B2 3 D6 T2 G2 तस्मिन् ( for तस्मै ). V1 न संजघ्ने ततस्तस्मिन्, V3 प्रजह्रे न पुनस्तस्मै, M1-3 न प्राहरत्ततस्तस्मिन् — [d] ) V1 एष; M1-3 स तु ( for एव ] K2 महायुध ; T3 ( first time ) 4 महाबलः ( for हलायुध ) G3 M4 पुनस्तु ( M4 °श्च ) मुसलायुध· — [e] ) T1 तद् ( for तौ ) K2 3 Ñ2 3 V1 2 B Dn D1-6 T1 2 3 ( first time ) 4 G1. 2 4 5 युद्धे, D3 युद्धाद् ( for चैव ) Ñ1 तौ तु व्युपरमेयातां, V3 ततो व्युपारमेतां वै — [f] ) D6 चेति; G3 चैव ( for ते च ) V2 पुनरेव च पार्थिवा

23 [a] ) K1. 4 Ñ2 D1. 2 ( *sup lin* ) 3 6 T2 G2 4 5 प्रवृत्तम्, K3 Ñ3 V1 3 B Ds प्रशान्तम्; K3 V2 Dn D2 असक्तम्, Ñ1 D4 5 T3 ( first time ) 4 G1 प्रवृद्धम् ( for प्रसक्तम् ). — [b] ) K1 एव तेषां; T3 ( second time ) G3 तेषामेवं ( for °व ). K2-4 Ñ2. 3 V1 B2 Ds2 D1 2 4 5 G1 4 सुदारुणम् ( for महात्मनाम् ) Ñ1 V2 3 B1 3 Dn Ds1 D2 6 T2 3 ( first time ) 4 G2 5 तेषामेवं सुदारुणम् — [d] ) D5 प्रवृत्तम् ( for निघ्नताम् ) — After 23, T1 3 ( second time ) G3 M4 ins .

939* ते सर्वे निर्जिता राजन्कृष्णेन रिपुघातिना ।
जरासंधेन सहिता विप्रजग्मुर्यथागतम् ॥

24 [d] ) D2 ते न शेकुस्; T1 3 ( second time ) G3 M4 परिसस्रुस्; M1-3 नाप( M1 °व )सस्रुस् ( for नानु° ) — After 24, T1. 3 ( second time ) G3 M4 ins :

940* वृष्णयश्च महाभागाः कृष्णसंकर्षणाश्रयाः ।

25 [a] ) K2-4 Ñ3 V1. 2 B D T2. 3 ( both times ) 4 G1 2 4 5 M4 स्वकं सैन्यं, M1-3 स्वसैन्यानि ( for °न्यं तु ). — [b] ) Ś1 वृष्णयस्ते महारथा· — [d] ) Ñ3 V1 B Dn Ds D2 3 पालिता ( for -पूजिता· ) Ś1 K1 केशवेनानुपालिता· — After 25, N ( except Ś1 K2 Ñ1 ) T2 3 ( first time ) 4 G1. 2. 4 5 ins

941* खाच्युतान्यायुधान्येव तान्येवान्तर्दधुस्तदा ॥
जरासधोऽपि नृपतिर्विमना स्वपुरं ययौ ।
राजानश्चानुगा येऽस्य स्वराष्ट्राण्येव ते ययु ॥

[ ( L 1 ) Ñ2 V2 D2 सर्वाणि, T3 4 तयोर् ( for तान्येव ). — D4 repeats line 2 after 28 — ( L 2 ) V2 3 D6 T2 स्वपुरीं, G3 स्व °पुरं ( for स्वपुर ). — ( L 3 ) Ds2 राजानं ( for °नश् ) T4 स्वानुगा ( for चा° ) D1 ये च; D6 T2 G2 4 5 तस्य ( for येऽस्य ). ]

26 K2 om 26, D5 reads it on marg — [a] ) V2 तु जित्वा ते; T2 ते विजित्वा, M1-3 च ते जित्वा ( for तु ते जित्वा ) — [b] ) T3 ( second time ) मेनिरे ( for मन्यन्ते ). K1 3 4 Ñ3 V1 3 B Dn Ds D1 2. 5 6 T2 3 ( first time ) 4 G1 2 4 5 मेनिरे नैव ( T2 G1 खलु ) निर्जितम्; Ñ1 मन्यते नैव निर्जितः; D3 नैव तं मेनिरे जितम्; D4 मेनिरे न विनिर्जितम्. — [d] ) K4 -महाबलः, G1 -बलस्तु वै; G3 -बलै· सह ( for -बलः स वै ) Ñ3 V1 राजा क्षत्रबलस्य वै, Dn D3 T4 राज्ञो ह्यतिबलस्य ( D3 °लेन ) वै, T3 ( second time ) M4 तदा राजबलै· सह — After 26, T1 3 ( second time ) G3 M ins.

942* को नाम हि जरासंधं रणे जेतुं महीपतिः ।
शक्नुयाल्लोकविख्यात. साक्षादपि शतक्रतु. ॥

[ ( L 1 ) M1-3 transp जरासंध and रणे जेतु T3 M4 महीपतिम् ( for °पति ). — ( L. 2 ) T3 M4 -विख्यात ( for °त ) ]

27 [a] ) K2 सप्त ( for दश ) — [b] ) T1 G3 M1 जरासंधेन ( for °धस्य ). — T4 om. 27[cd]. — [c] ) T1 संग्रामे ( for

जरासंधस्य नृपतेस्तदर्थं याः समागताः ॥ २८
अल्पत्वादभिभूतास्तु वृष्णयो भरतर्षभ ।
बार्हद्रथेन राजेन्द्र राजभिः सहितेन वै ॥ २९
जित्वा तु मागधं संख्ये जरासंधं महीपतिम् ।
विहरन्ति स्म सुखिनो वृष्णिसिंहा महारथाः ॥ ३०

इति श्रीहरिवंशे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## ८३

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु स्मृत्वा गोपेषु यत्कृतम् ।
जगामैको व्रजं रामः कृष्णस्यानुमते स्वयम् ॥ १
स तत्र गत्वा रम्याणि ददर्श विपुलानि वै ।
भुक्तपूर्वाण्यरण्यानि सरांसि सुरभीणि च ॥ २
स प्रविष्टः प्रवेगेन तं व्रजं कृष्णपूर्वजः ।
वन्येन रमणीयेन वेषेणालंकृतः प्रभुः ॥ ३
स तान्सर्वानाबभाषे यथापूर्वं यथाविधि ।

---

समरे ) T3 ( second time ) G3 M चक्रुर्न चैवं ( G3 चेमं ) सप्रासं . — [d] ) Ś1 Bom Poona eds G(ed ) महाबला ; Ñ2 नराधिपा ( for महारथाः ) — After 27, T1. 3 ( second time ) G3 5 M1 2 4 ins .

943* कृष्णस्तु समरे राजञ्शक्तिमानपि मागधम् ।
अन्यो मृत्युरिति ज्ञात्वा न च हिंसितवान्प्रभुः ॥

28 [b] ) D3 बह्वयो राजर्षिसत्तम, Bom Poona eds. G(ed.) विंशतिश्च महामते — [c] ) G4 समरे ( for नृपतेस् ). — [d] ) Ś1 समाहिता. ( for °गताः ) — After 28, D4 repeats line 2 of 941*.

29 [a] ) V3 परि- ( for अभि- ). K1. 4 D3 T4 ते ( for तु ) — [b] ) T3 ( second time ) G3 M4 वृष्णयो जनमेजय — Ñ2 Bom. Poona eds G(ed.) ins. after 29 K2 after the first occurrence of line 9 of App. I ( No 18 )

944* भूयः कृत्वोद्यमं प्रायाद्यादवान्कृष्णपालितान् ।

30 [a] ) Ś1 ससारथिं ; V3 M च मागधं ( for तु मा° ). V1 सैन्यं ; T3 ( first time ) युद्धे ( for संख्ये ) — [c] ) T4 विचरन्ति ( for विह° ) K3 सुखिता ( for °नो ). — [d] ) V2 वृष्णिसंघा ; D3 वृष्णयस्ते ( for वृष्णिसिंहा ) — After 30, K1 reads line 9 of App. I ( No 18 ), repeating it in its proper place. While M3 ins. after 30 .

945* ओजस्तेजो बलं धीर्धृतिरिरिति महिमा श्रीर्यशोरूपमाज्ञा
वीर्यं चेत्येवमादीन्परमगुणगणान्ये स्मरन्तो लभन्ते ।
यद्भक्तानां यमाज्ञाप्यखिलजनमनःक्षोभणी नैति पार्श्वे
चेतस्त्वं तस्य शश्वच्चरणकमलयोर्भृङ्गतां याहि विष्णोः ॥

COLOPHON. — *Mention of the Epic* K3 Ds1 T3 ( both times ), — *Mention of Khila* : All Mss. ( except Ñ1 ). — *Sub-parvan* T4 आश्चर्यपर्व — *Adhy name* Ś1 जरासंधपराजय , K1 3 4 V2 3 B2 3 Dn D1 5 6 मथुरोपरोधे जरासंधोपयानम् ( V3 °पचयः ), K2 मथुरोपरोध , Ñ1 3 V1 B1 D3 G2 जरासंधापयानम् , Ñ2 जरासंधापचयः , D2 मथुरारोधजरासंधपराजयः , D3 मथुरोपरोधो भारापयनम् , G3 M4 मथुरायुद्धे जरासंधपलायनः ; M1. 2 मथुरायुद्धं समाप्तम् — *Adhy no* ( figures, words or both ) V1 T2 93 , V2 D4 G1 94 ; V3 G2. 4 92 , Dn Ds2 91 ; D1 88 , T1 G3 M 108 , T3 ( first time ) 96 , T3 ( second time ) 111 , T4 83 , G5 95 — *Śloka no* Dn D4 40 , Ds2 41 — After adhy. 82, N ( except Ś1 ) S G(ed ) ins a passage given in App I ( No 18 ).

### 83

1 [a] ) N ( except Ś1 ) T2 4 G1 2 4 कस्यचि( T2 G1 4 °दा चि )त्त्वथ कालस्य — [b] ) K Ñ1 3 V2 B Dn Ds2 D1–3. 5 6 सौहृदम् ( for यत्कृतम् ). Ñ2 V1 3 Ds1 D4 स्मृत्वा गोपस्य सौहृदम्. — [c] ) K1 4 D3 गो- ; V1 [ए]कं ( for [ए]को ). Ś1 वनं ( for व्रजं ) Ñ2 V3 प्रयातो गोव्रजं रामः . — [d] ) N ( except Ś1 Ñ1 2 V3 ) S स्थितः ( for स्वयम् ).

2 [a] ) K Ñ V B D T2–4 G1 2 4 गतस्तत्र ( for तत्र गत्वा ) M3 [अ]रण्यानि ( for रम्याणि ). T1 G5 तत्र गत्वा स रम्याणि — [b] ) K2 पुलिनानि ; G3 M4 विमलानि ( for विपु° ). — [c] ) K2 रम्याणि ( for [अ]रण्यानि ) — [d] ) T1 G3 M काम्यानि विविधानि वै , G5 रम्याणि विविधानि च .

3 [a] ) K3 T1 G1 3. 5 M सं- ( for स ) B1 प्रहृष्टः ( for प्रविष्टः ) K Ñ V B Dn Ds D1–3. 5. 6 T2–4 G1. 2. 4. 5 तु ; T1 स ( for प्र- ). — [b] ) V2 तद् ; V3 स्व ( for तं ).

गोपांस्तेनैव विधिना यथान्यायं यथावयः ॥ ४
तथैव प्राह तान्सर्वांस्तथैव परिहर्षयन् ।
तथैव सह गोपीभी रोचयन्मधुराः कथाः ॥ ५
तमूचुः स्थविरा गोपाः प्रियं मधुरभाषिणः ।
रामं रमयतां श्रेष्ठं प्रवासात्पुनरागतम् ॥ ६
स्वागतं ते महाबाहो यदूनां कुलनन्दन ।
अद्य स्मो निर्वृतास्तात यत्त्वां पश्याम निर्वृतम् ॥ ७
प्रीताश्चैव वयं वीर यत्त्वं पुनरिहागतः ।
विख्यातस्त्रिषु लोकेषु रामः शत्रुभयंकरः ॥ ८
वर्धनीया वयं नूनं त्वया यादवनन्दन ।
अथ वा प्राणिनस्तात रमन्ते जन्मभूमिषु ॥ ९
त्रिदशानां वयं मान्या ध्रुवमद्यामलानन ।
ये स्म दृष्टास्त्वया तात काङ्क्षमाणास्तवागमम् ॥ १०
दिष्ट्या ते निहता मल्लाः कंसश्च विनिपातितः ।
उग्रसेनोऽभिषिक्तश्च माहात्म्येनानुजेन वै ॥ ११
समुद्रे च श्रुतोऽस्माभिस्तिमिना सह विग्रहः । C 5750 B 2. 46 12 P 2 46 12

4 $^{a}$) K1. 4 समाभाष्य (for आबभाषे) Ś1 एतान्सर्वान्समाभाष्य, K2 3 Ñ2 3 V B D T2–4 G1 2 4 स तानभाषत प्रीत्या; T1 G3 M4 तान्सर्वान्सं(T1 °ना)बभाषे च — $^{b}$) K2 3 Ñ V B D T2–4 G1 2 4 अरिंदमः, G3 M यथावय (for °विधि) — Ñ1 om. $4^{c}$–$7^{b}$ — $^{d}$) S1 यथासुखम्, G3 M °विधि (for °वय) T1 यथापूर्वं यथोदये.

5 Ñ1 om 5 (cf v l 4). Ñ2 T1 om (hapl,) $5^{ab}$ — $^{a}$) Ś1 प्राहसत्, D1 2 व्याहरन्, G3 5 M4 प्रहसन् (for प्राह तान्) — $^{b}$) K1 च प्र (for परि-) V3 -हासयन्, T3 -तोषयन् (for -हर्ष°) Ś1 D3 तथैव प्रजहर्ष यत् — K4 om (hapl) $5^{cd}$, K1 reads it on marg — $^{d}$) K1–3 Ñ2 3 V B D S (except G5) योजयन् (for रोच°) D4 M2 (*inf lin*) विविधा (for मधुरा).

6 Ñ1 om 6 (cf v l 4) — $^{a}$) Ñ2 V3 आहु॰ (for ऊचुः) — $^{b}$) K1 3 4 B1 2 Dn1 D1–5 T2 G1 -भाषिणम् (for °ण) Ñ2 V3 प्रियं मधुरया गिरा, T1 3 G3 5 M नन्दगोपपुरोगमा

7 Ñ1 om $7^{ab}$ (cf v l 4) Dn2 om (hapl) $7^{a}$–$8^{b}$ — $^{b}$) G5 M4 नन्दि- (for कुल-) K1 4 B1 D5 M1–3 -वर्धन (for -नन्दन) Ñ2 V3 T1 2 G1. 3 4 यदूनां नन्दिवर्धन — After $7^{ab}$, V2 ins

946* जीवितस्य फलं प्राप्तमद्य ते दर्शनेन च ।

— T2 om (hapl) $7^{c}$–$9^{b}$ — $^{c}$) K4 तस्माद् (for तात). G1 अद्य मे सफलं जन्म. — $^{d}$) K2 3 Ñ2 3 V B Dn1 Ds D1–6 T3 4 G1 2 4 5 यत्त्वां पश्यामहे वयम्

8 Dn2 om $8^{ab}$, T2 om. 8 (for both, cf v l 7). — $^{a}$) K1 4 प्रीताश्चापि, Ñ2 अतिप्रीता (for प्रीताश्चैव) T1 च यत् (for वयं). T1 G3 5 M तात (for वीर) V3 अतिप्रीता वयं चैव — $^{b}$) K1 2 V3 यस् (for यत्) — V2 ins after 8 B2 after the first occurrence of $9^{ab}$.

947* यादवाश्च बलोदग्राः सर्वे संग्रामलालसा ।
तिष्ठन्ति नृपशार्दूला ह्यप्रमत्ता महाबला ।

9 T2 om $9^{ab}$ (cf v l 7) B2 repeats $9^{ab}$ after 947* — $^{a}$) Ñ2 V3 B2 (second time) अनुग्राह्या (for वर्धनीया) Ś1 K3 Dn वीर, V1 भूरि (for नूनं) — $^{b}$) K1 Ñ1 V3 B2 (second time) M1–3 तव (for त्वया). — After the first occurrence of $9^{ab}$, B2 ins. 947*. — $^{c}$) K4 ते तु (for तात)

10 $^{a}$) T3 ध्रुव (for वयं) — $^{b}$) V3 वरानन (for [अ]मला°) — $^{d}$) Ś1 त्वदागमम्, K1 (*sup lin* as in text) 4 तवागतम्, T1 G3 M4 वयं विभो, M1 2 त्वया विभो; M3 तथा विभो (for तवागमम्) Ñ1 काङ्क्षन्तस्तव दर्शनम्

11 $^{a}$) Ś1 K1 2 M4 दिष्ट्या वो (K1 वां, K2 वि-; M4 नो), Ñ2 V3 ते दिष्ट्या (by transp) Cal ed मन्दाः (for मल्ला) — $^{b}$) K2 D1 [ए]व, T2 G1 2 4 [अ]पि (for वि-). Ś1 कसश्चापि पराजित — $^{d}$) G2 3 M4 केशवेन (for माहात्म्येन) Ś1 माहात्म्यमनुजेन ते, G5 M1–3 केशवेनानुजेन ते. — T1 G3 M1–3 ins 949* and M4 reads $13^{ab}$ after 11, M4 repeating it in its proper place

12 After $12^{ab}$, K3 Ñ1 V2 Dn D1 (marg.) T2 G2 M4 ins

948* वध पञ्चजनस्यैव जरासंधेन विग्रह ।

K3 V2 Dn D1 (marg) T2 G2 M4 cont : K1 2, 4 Ñ2 3 V1 3 B Ds D1 (orig) 2–6 T3 4 G1 (marg.). 4 5 ins after $12^{ab}$ T1 G3 M1–3 after 11

949* गोमन्ते च श्रुतोऽस्माभि॰ क्षत्रियैः सह विग्रह॰ ।
दरदस्य वधश्चैव जरासंधे च या मति. ॥

[(L 1) K2 स्मृतो (for श्रुतो) — T1 G3 M1–3 transp. lines $2^{a}$ and $2^{b}$. —(L 2) G3 M4 सर्वदस्यु-; G5 सर्वस्यापि (for दरदस्य). T2 G1 4 सर्वदस्युभय चैव (for $^{a}$) G2 4 गतिः (for मति) Ñ2 3 V B1 D4 5 जरासंधप(D5 °धे प)राजय ; Dn2 °धेन या मति ; D2 °धस्य संयुगे, T1 G3 M4 °धे च विग्रह ; T2 G1 °धेन या गति (for $^{b}$).]

— Ś1 om $12^{cd}$. — $^{c}$) K3 D2 (*sup. lin*) तथा; Ñ1 3

तच्चायुधावतरणं श्रुतं नः परमाहवे ॥ १२
मथुरायां प्रवेशश्च कीर्तनीयः सुरैरपि ।
प्रतिष्ठिता च वसुधा शङ्किताः सर्वपार्थिवाः ॥ १३
तव चागमनं दृष्ट्वा सभाग्याः स्म यथा पुरा ।
तेन स्म परितुष्टाश्च हृषिताश्च सबान्धवाः ॥ १४
प्रत्युवाच ततो रामः सर्वांस्तानभितः स्थितान् ।
यादवेष्वपि सर्वेषु भवन्तो मम बान्धवाः ॥ १५
सहास्माभिर्गतं बाल्यं सहास्माभी रतं वने ।
भवद्भिर्वर्धिताश्चैव कथं यास्याम विक्रियाम् ॥ १६
गृहेषु भवतां भुक्तं गावश्च परिरक्षिताः ।
अस्माकं बान्धवाः सर्वे भवन्तो बद्धसौहृदाः ॥ १७
एवं ब्रुवति तत्त्वं वै गोपमध्ये हलायुधे ।
संहृष्टवदनास्तत्र बभूवुर्गोपयोषितः ।
ततो वनान्तरगतो रेमे रामो महाबलः ॥ १८
एतस्मिन्नन्तरे गोपा रामाय विदितात्मने ।
गोपालैर्देशकालज्ञैरुपानीयत वारुणी ॥ १९

---

Dn D1 T1 तत्र ; Ñ2 V3 यच्च ; D4 यदि, T3 4 तव ( for तच्च ). K1 4 तथायुधानां च रणं, G5 तच्च युद्धावतरणं —$^d$) Ñ3 च, V1 व. ( for न ). — After 12, K Ñ2. 3 V B D S ins :

950* वधश्चैव शृगालस्य करवीरपुरोत्तमे ।
[ M3 व т ( for वधश् ) D2 4 करवीरे. ]

K2 Ñ2 3 V1 3 B1. 2 D2. 5 ( marg ) G2 cont :

951* तत्सुतस्याभिषेकश्च नागराणां च सान्त्वनम् ।
[ G2 तत्पुत्रस्य ( for तत्सुतस्य ). ]

While V2 D3 D6 cont after 950*.

952* तत्पत्नीना प्रलापश्च शक्रदेवाभिषेचनम् ।
[ V2 विलापश् ( for प्र° ) ]

V2 cont. Ñ2 V3 cont after 951* :

953* मथुरायावरोधश्च जरासंधेन धीमता ।
युद्धं सर्वैर्नरेन्द्रैश्च यादवानां महात्मनाम् ॥
[ ( L 1 ) V2 मथुरारोधश्च पुनर्, V3 मथुरोपरोधश्च पुनर् ( hypermetric ) ( for $^a$ ) ]

13 V3 om. $13^{ab}$. M4 reads $13^{ab}$ for the first time after 11. —$^b$) K2 Ñ2 3 V1 B1 3 D3 D6 G2 M4 ( both times ) सुरोत्तमैः ( for सुरैरपि ). —$^d$) K2 3 Ñ V B D T2–4 G1. 3. 4 पार्थिवाश्च वशीकृताः ; T1 G3 5 M सर्वा शङ्कितपार्थिवा

14 $^a$) Ñ1 विधेया यत्त्वया दृष्टा. —$^b$) Ñ1 वयं रामे ( for सभाग्याः स्म ) Ñ2 V1. 3 यथासुखम् ; B3 सबान्धवा , D5 पुरा यथा ( by transp ), M1–3 यथापुरम्. —$^c$) D2 ततश्च ; T1 G3. 5 M ते वयं, T3 तेन सं- ( for तेन स्म ) —$^d$) V2 प्रहृष्टाश् ; B1 D3 D6 हर्षिताश् ( for हृषि° )

15 Ś1 T4 om. ( hapl ) 15 ; D5 reads it on marg —$^a$) K1 4 T3 G3 M4 [अ]थ तान्, T1 तथा ; M1–3 स तान् ( for ततो ). —$^b$) K1. 4 प्रीतिमान्प्रतिपूजयन् ; T1 G3. 5 M1. 3 प्रीतात्मा प्रत्यपूजयत्, T3 पूजित प्रतिपूजयन् ; M2 4 पूतात्मा प्रतिपूजयन्. — D3 om. ( hapl. ) $15^d$–$17^c$.

16 D3 om 16 ( cf v l 15 ) —$^a$) K1 4 इहास्माभिर्, K2 3 Ñ2 3 V B Dn D3 D1 2 4–6 T2–4 G1 2 4 5 इहावयोर्, Ñ1 इहास्माकं ( for सहास्माभिर् ) —$^b$) K1. 4 इह ( for सह ) K2 3 Ñ3 V1 2 B D ( D3 om ) T2–4 G1. 2 4 5 इह चैवावयो रतम्, Ñ1 इहैव च वयं रता , Ñ2 V3 रतिश्चैवावयोरिह —$^c$) Ñ2 V3 वर्धितौ ( for °ताश् ) —$^d$) Ñ2 V3 यास्याव ( for °म ) K4 निःकृतिम् ; M निर्वृतिम् ( for विक्रियाम् ) K2 3 Ñ3 V1 2 B D ( D3 om. ) T2–4 G1 2. 4 5 यास्यामो विक्रियां ( D6 °याः ) कथम्, T1 G3 कथं यास्यामि सत्क्रिया( G3 निर्वृति )म्

17 D3 om $17^{abc}$ ( cf v l 15 ) —$^a$) K2 G3 गृहेऽपि, Ñ1 G2 गृहे च ( for गृहेषु ) T1 M4 भुक्त्वा ( for भुक्त ) K4 गृहेषु भुक्तं चास्माभिर् —$^c$) Ñ1 2 V3 प्रथमा बान्धवास्माकं. —$^d$) Ñ1 2 V3 भवद्भिर् ( for °न्तो ) Ñ2 B1 वृद्ध- ; T1 M3 बन्धु- ( for बद्ध- )

18 $^a$) K1 4 इति ( for एवं ) T1 G5 M1–3 गोपान्वै ; G3 M4 गोपालैर् ( M4 °ले ) ( for तत्त्वं वै ) K2 3 Ñ V B D T3 4 G2 4 ब्रुव( T3 4 वद )त्येवं यथातत्त्वं ; T2 G1 ब्रुवत्येवं यथा रामे. —$^b$) T1 G3 5 M तत्त्वं सर्वान् ( M4 °वैं ) ( for गोपमध्ये ) —$^c$) K2 3 Ñ V B D T2–4 G1 2. 4. 5 भूयो ( for तत्र ) —$^d$) K3 D1 व्रज ( for गोप- ) — After $18^{cd}$, Ñ2 ins

954* एवं बहुविधालापं कृत्वा गोपैस्तु लाङ्गली ।
जगाम यमुनातीरं पश्यन्वृन्दावनं मुदा ॥

— Ñ1. 2 T1 om $18^{ef}$, G3 M read the same after $20^{ab}$. —$^e$) G3 M वनान्तरगतो रेमे. —$^f$) G2 हलायुध. ( for महाबलः ). — After 18, Ś1 wrongly reads lines 518–575 of App I ( No. 18 ), D2 reads the same here, repeating the same in its proper place

19 Before 19, D4 T1 ins वैशंपायन उवाच. —$^a$) K2 3 Ñ V B D T2–4 G1 2. 4 5 प्रासे ; M1–3 राजन् ( for

सोऽपिबत्पाण्डुराभ्राभस्तत्कालं ज्ञातिभिर्वृतः ।
वनान्तरगतो रामः पानं मदसमीरणम् ॥ २०
उपजह्रुस्ततस्तस्मै वन्यानि विविधानि च ।
प्रत्यग्ररमणीयानि पुष्पाणि च फलानि च ॥ २१
मेध्यांश्च विविधान्भक्षान्गन्धांश्च हृदयंगमान् ।
सद्योद्धृतावमुक्तं च प्रभूतं कमलोत्पलम् ॥ २२
शिरसा चारुकेशेन किंचिदावृत्तमौलिना ।
श्रवणैकावलम्बेन कुण्डलेन विराजता ॥ २३
चन्दनागरुशीतेन वनमालावलम्बिना ।
विबभावुरसा रामः कैलासेनेव मन्दरः २४
नीले वसानो वसने प्रत्यग्रजलदप्रभे ।
रराज वपुषा शुभ्रः शशीव घनमालया ॥ २५
लाङ्गलेनावसक्तेन भुजगाभोगवर्तिना ।
तथा भुजाग्रश्लिष्टेन मुसलेन च भास्वता ॥ २६
स मत्तो बलिनां श्रेष्ठो रराजाघूर्णिताननः ।
शैशिरीष्विव रात्रीषु यथा खेदालसः शशी ॥ २७
स मत्तो यमुनामाह स्नातुमिच्छे महानदि ।
इहैव माभिगच्छस्व रूपिणी सागरंगमे ॥ २८ C 5769 B 2.46 80 P 2 46 30

गोपा ). — Ś1 om $19^{c}$–$20^{d}$

20 Ś1 om 20 ( cf v l 19 ) — $^{b}$ ) G2 सह ( for वृतः ). — After $20^{ab}$, G3 M read $18^{ef}$ and om $20^{cd}$

21 $^{a}$ ) K2 3 Ñ V B D T2 G उप( D3 G1 4 °पा )-निन्युस्, T3 4 तदा निन्युस् ( for उपजह्रुस् ) — $^{b}$ ) K3 [आ]भरणानि ( for विविधानि )

22 $^{a}$ ) K3 D1 G(ed ) सेव्यांश् ( for मेध्यांश् ) T1 G3 M1–3 रुचितान्, G5 M4 रुचिरान् ( for विविधान् ) K2 3 Ñ3 V1 2 B Dn Ds D1–4 6 T2–4 G1 2 4 गन्धान्, D5 हृद्यान् ( for भक्षान् ) D2 ( marg ) गन्धांश्च विविधान्मेध्यान् — $^{b}$ ) K2 3 Dn1 Ds1 D1–3 भक्षांश्, Ñ1 2 V3 वन्यांश्, D4 रसांश् ( for गन्धांश् ) — $^{c}$ ) Ś1 K1 4 सद्योहृताव( Ś1 °द्धृतार्ध )-मुक्तं च ; K2 3 Ñ2 3 V B Dn Ds D2–6 T2–4 G1 2 4 5 सद्योहृ( D2 °द्योजा-, D5 °द्योभू )तानि पद्मा( G2 मूला )नि, Ñ1 सद्यो वृतानि युद्धानि ( sic ), D1 सद्योहृतावमुक्तानि — $^{d}$ ) T1 G3 M प्रभूत- ( for °तं ) K2 3 Ñ2 3 V B D T2–4 G1 2 4 5 विकचान्युत्पलानि च, Ñ1 पद्मानि कुसुमानि च.

23 $^{a}$ ) K2 वक्र- ( for चारु ) K1 4 -केशेषु ( for केशेन ) — $^{b}$ ) K1 4 व्यावृत्त-, V3 आवर्त-, T1 G3 M चलित- ( for आवृत्त- ) Ś1 लोचनः ( for -मौलिना ) — After $23^{ab}$, Ñ1 reads $24^{b}$ — $^{c}$ ) G2 श्रवणैकावलम्नेन — $^{d}$ ) Ñ1 V3 कुण्डलैकावलम्बिना

24 Ñ1 om $24^{a}$ — $^{a}$ ) K2 3 Ñ3 V1 2 B Dn Ds D1 2 4–6 T1 3 4 G2–5 M4 चन्दनार्द्रेण पी( T1 G3 M4 शी )तेन, Ñ2 V3 उरसा चन्दनार्द्रेण, T2 G1 चन्दनाद्रविलम्बेन, M1–3 °नेन च शीतेन. —Ñ1 reads $24^{b}$ after $23^{ab}$ — $^{b}$ ) K1 3 वनमालाविलम्बिना, Ñ1 भुजगाभोगमौलिना, T2 G1 नीलेन वनमालिना — K2 om $24^{cd}$. — $^{c}$ ) T1 G3 M4 विरराज ; G1 बभ्राज ( for विबभावु ). T3 4 वपुषा ( for उरसा ) Ñ1 2 V3 शिरसा च विशालेन, M1–3 उरसा सुविशालेन — $^{d}$ ) T4 भूधर , G2 शंकर ( for मन्दरः ) T1 G3 M कैलास इव पर्वतः

25 $^{a}$ ) Ś1 K4 स वै ( for नीले ) — $^{b}$ ) T1 G3 5 M नीलजीमूतसंनिभे — $^{c}$ ) Ñ1 तत्र ( for शुभ्रः ) Ñ2 V3 रराज शुभ्राकं( V3 °भ्र )वपु , D3 °ज शुभ्रवपुषा — D3 om $25^{d}$–$26^{c}$ — $^{d}$ ) Ś1 ( *sup lin* ) मेघ- ( for घन- ) K2 3 Ñ1 3 V1 2 B D ( D3 om ) T2–4 G1 2 4 5 तिमिरौघे य- ( K2 3 D1 5 T2 G5 °घैर्य )था शशी

26 D3 om $26^{abc}$ ( cf v l 25 ) T3 repeats 26 after 33 — $^{b}$ ) T4 -दर्शिना, M1 3 -वर्ष्मणा, M2 -वर्चसा ( for वर्तिना ) K4 भुजगोपान्तवर्तिना — $^{c}$ ) Ñ1 सव्ये ( for तथा ) T1 G3 5 M मध्ये भुजाग्रसक्तेन, T2 ततो भुजाग्राश्लिष्टेन — $^{d}$ ) D1 2 [अ]ति- ( for च ) Ñ1 T1 G3 5 M मुसलेनार्क( Ñ1 °द्रि )वर्चसा

27 G3 om $27^{a}$–$29^{b}$ — $^{a}$ ) D4 संमतो, T1 M4 समदो ; G1 समितो ( for स मत्तो ) — $^{c}$ ) M2 3 शैशिरासु ( for °रीषु ) K2–4 Ñ2 3 V B D T3 4 G2 4 त्रियामासु ( for [इ]व रात्रीषु ) Ñ1 शैशिरासु त्रियामासु, T2 G1 शैशिरेषु त्रियामेषु — $^{d}$ ) Ś1 K2 वै चालस , K1 खे चामल. ; Ñ3 B1 2 T1 G1 M4 Bom Poona eds G(ed ) खेदालसः, D2 मन्दालसः, T3 खे पूर्णिमा-, G4 खे शीतल , G5 मेवालय ( for खेदालस. ).

28 G3 om 28 ( cf v l. 27 ) — $^{a}$ ) Ś1 Ñ3 V1 2 B D T G ( G3 om ) M3 रामस्तु ( for स मत्तो ) D1 प्राह ( for आह ) — $^{b}$ ) Ś1 स्नानम् ( for स्नातुम् ) Ñ2 D2 G2 इच्छामहे ; V2 G5 इच्छामि हे ( for इच्छे महा- ) T2 G1 -नदीम् ( for -नदि ) — $^{c}$ ) G5 -गच्छ त्वं ( for -गच्छस्व ) K2–4 Ñ3 V B D T2–4 G1 2 4 एहि ( K2 G2 इह ) मामभि( V2 °व-; V3 °नु )-गच्छ त्वं ; Ñ1 इहैव चाभिगच्छ त्वं ; Ñ2 एवं मामनुगच्छस्व ; M4 इहैव मा समागच्छ — $^{d}$ ) Ś1 Ñ2 V1 B2 D2, 3 रूपिणी सागराङ्गने

संकर्षणस्य मत्तोक्तां भारतीं परिभूय सा ।
नाभ्यवर्तत तं देशं स्त्रीस्वभावेन मोहिता ॥ २९
ततश्चुक्रोध बलवान्रामो मदसमीरितः ।
चकार च हलं हस्ते कर्षणाधोमुखं बली ॥ ३०
तस्यां तु पानमेदिन्यां पेतुस्तामरसस्रजः ।
मुमुचुः पुष्पकोशैश्च स्वं रजोरञ्जितं जलम् ॥ ३१
स हलेनानताग्रेण तीरे गृह्य महानदीम् ।
चकर्ष यमुनां रामो व्युत्थितां वनितामिव ॥ ३२
सा विह्वलजलस्रोता ह्रदप्रस्थितसंचया ।
व्यावर्तत नदी भीता हलमार्गानुसारिणी ॥ ३३
लाङ्गलाकृष्टमार्गा सा वेगवक्रानुगामिनी ।
संकर्षणभयत्रस्ता योषेवाकुलतां गता ॥ ३४
स्रोतःपुलिनबिम्बोष्ठी मृदितैस्तोयताडितैः ।
फेनमेखलसूत्रैश्च छिन्नैस्तीरानुहासिभिः ॥ ३५
तरंगविषमापीडा चक्रवाकोन्मुखस्तनी ।
वेगगम्भीरवक्राङ्गी त्रस्तमीनविहंगमा ॥ ३६
सा तु हंसेक्षणापाङ्गी काशक्षौमोज्झिताम्बरा ।
तीरजोद्धूतकेशान्ता जलस्खलितगामिनी ॥ ३७

---

29 G3 om 29$^{ab}$ (cf v 1 27) — $^{a}$) M4 [ए]वमुक्तां (for मत्तोक्तां) T1 संकर्षणेनैवमुक्तां — $^{b}$) T2 G1 -हासयन् (for -भूय सा) — $^{c}$) K3 तं देव ; V1 तं देवी, Ds1 तं देशे, T2 G1 देवेश (for तं देशं) — $^{d}$) Ś1 शोभिता (for मोहिता) K2 स्वभावेन विमोहिता

30 $^{a}$) K1 क्रुद्ध स (for चुक्रोध) Ñ3 V1 M1 2 भगवान् (for बल°) — $^{b}$) D3 G2 M1-3 बल- (for मद-) G4. 5 -समन्वितः (for -समीरित) K1 T2 G1 रामो बलसमन्वित — $^{c}$) T2 G1 चकर्ष (for चकार) N (except Ś1) T3 4 G2. 4 स (for च). Ś1 बली (for हल) T1 चकार हलहस्तेन — $^{d}$) Ś1 K1 हलम्, T2 G1 हली (for बली). K4 कर्षणायोन्मुखं बली, D3 °माणस्तु ता बली, T1 G3 5 M °णार्थमधोमुखम्.

31 G4 om 31 — $^{a}$) K1 (marg as in text) 2-4 Ñ V B D T3 4 G2 उपरि (for तु पान-) — $^{b}$) T1 G3 5 M कमलान्युत्पलानि च — $^{c}$) M4 विमुच्य (for मुमुचुः) K1 4 -वर्षैश्च (for -कोशैश्च). — $^{d}$) Ñ V B Dn Ds D4 (marg. as in text) 5 T3 4 वासरेणवरुणं जलम्, D1-3 केसरेणा( D3 °रैर् )रुणं ज°

32 $^{a}$) D3 हलेन वेल्लिताग्रेण ; T1 M1-3 स हलस्य ततोऽग्रेण ; G3 M4 लाङ्गलेन (M4 °लस्य) ततोऽग्रेण. — $^{b}$) K2-4 Ñ3 V1 2 B D T2-4 G1. 2 4. 5 M4 कूले (for तीरे)

33 $^{b}$) D3 द्रुम- ; T3 हल-, G2 द्रुत- (for ह्रद-) — $^{c}$) Ds महा- (for नदी). K2 भिन्ना (for भीता) — After 33, T3 repeats 26

34 $^{a}$) T4 [अ]सौ (for सा). Ś1 K Ñ2 3 V B1 3 Dn Ds D1 2 4-6 T3 G2 लाङ्गलादिष्ट( V1 °सक्त )मार्गा सा, B2 Bom Poona eds G(ed) लाङ्गलादिष्टवर्त्मा सा. — $^{b}$) G3 M4 वेगाद् (for वेग-) K2 3 Ñ2 3 V2 B Dn Ds D1 2 4 6 T2. 3 G1 4 5 वेगगा वक्रगामिनी, V1 वेगगा वक्ररूपिणी, V3 D3 वेगेनावक्रगामिनी ; T1 वेगाद्वक्रानुसारिणी, T4 G2 सावेगा वक्रगामिनी — D5 reads 34$^{c}$-37$^{d}$ on marg — $^{c}$) V3 D1 2 -भयात् (for -भय-).

35 $^{a}$) Ś1 K1 बिम्बोष्ठा ; G5 M4 -बिम्बौष्ठी. K2-4 Ñ V B Ds D1-5 T3 4 G1 पुलिनश्रोणिबिम्बोष्ठी (K2 °विवशा, Ñ V B Ds2 T3 G1 °बिम्बौष्ठी), Dn D6 T2 G2 4 पुलिनैः श्रोणिबिम्बै सा (Dn2 °बिम्बौष्ठी, T2 °बिम्बास्या) — $^{b}$) D3 पीडितै (for -ताडितैः) Ś1 मृदिता तोयताडिता. — After 35$^{ab}$, V3 reads 38$^{a}$-39$^{b}$, repeating it in its proper place — $^{d}$) M4 -सारिभि (for -हासिभिः) K1 2 Ñ1 V1 B Dn Ds D6 T3 4 G2 छिन्नैस्तीरान्त( T3 4 °नु )गामिनी (K1 Ñ1 °हासिभि), K3 छिन्नैः सा चारुहासिनी, K4 Ñ2 V2 D1. 2 5 वेगगाम्बुदगामि( K4 °वासि )नी, Ñ3 छिन्नैरम्बुदगामिनी ; V3 D4 वेगेनाम्बुद( D4 °धि )गामिनी, D3 वेगेनाम्बुजहासिनी ; T1 G3 चिह्नै सीरानुसारिभिः, T2 G1 4 भि( G4 छि )न्नैस्तीरसहासिभिः, G5 भिन्नैस्तीरानुवासिभि

36 B3 repeats 36$^{ab}$ after 37. — $^{a}$) Dn तरंगविषमापीता, G2 तरंगविक्रमापीना — $^{b}$) Ś1 चक्रवाकमुखस्तनी ; M1-3 °कद्वयस्तनी. — T4 om 36$^{cd}$ — $^{c}$) Ś1 K1 मेघ- (for वेग-). — $^{d}$) Ñ1 कूर्म-, V3 स्तम्भ- ; M1-3 स्रस्त- (for त्रस्त). K2-4 Ñ3 V2 B Dn Ds D1-5 T1 G1-4 -विभूषणा, Ñ1. 2 3 (marg) V1 3 -विभूषिता (for -विहंगमा) T2 G5 अ( G5 स्र )स्तमीनविभूषणा.

37 D6 om (hapl) 37$^{a}$-38$^{b}$ — $^{a}$) K2. 3 Ñ V B1. 2 D (D6 om) T2-4 G1-4 सित- (for सा तु) K4 G5 सितसिंहेक्षणापाङ्गी, B3 सितहंसेक्षिता° — $^{b}$) K2 काशक्षौमाङ्किताम्बरा, K3 4 Ñ2 3 V3 B1 2 Dn D2 काशक्षौमोच्छ्रिता( K4 °ज्ज्वला )म्बरा, D1 4 काशकान्तोर्जिता°, D3 काशक्षौमावृता° ; T1 G3 M4 धौतरोध-सिता°, G2 काशकक्षान्विता° ; M1-3 धौतक्षौमसिता° — $^{c}$) K3 G2 M4 नीरजोद्धूतकेशान्ता, K4 Dn2 D2 3 T1 G3 नीरजोद्धूत° ; Ds G1. 4 तीरजोद्धृत°, T3 तीरजो-

लाङ्गलोल्लिखितापाङ्गी क्षुभिता सागरंगमा ।
मत्तेव कुटिला नारी राजमार्गेण गच्छती ॥ ३८
कृष्यते सा स्म वेगेन स्रोतःस्खलितगामिनी ।
उन्मार्गानीतमार्गा सा येन वृन्दावनं वनम् ॥ ३९
वृन्दावनस्य मध्येन सा नीता यमुना नदी ।
रोरूयमाणैः खगमैरन्विता तीरवासिभिः ॥ ४०
सा यदा समतिक्रान्ता नदी वृन्दावनं वनम् ।
ततः स्त्रीविग्रहा भूत्वा यमुना राममब्रवीत् ॥ ४१
प्रसीद राम भीतास्मि प्रतिलोमेन कर्मणा ।
विपरीतमिदं रूपं तोयं च मम जायते ॥ ४२
असत्यहं नदीमध्ये रौहिणेय त्वया कृता ।
कर्षणेन महाबाहो स्वमार्गव्यभिचारिणी ॥ ४३
प्राप्तां मां सागरे नूनं सपत्न्यो वेगगर्विताः ।
फेनहासैर्हसिष्यन्ति तोयव्यावृत्तगामिनीम् ॥ ४४
प्रसादं कुरु मे वीर याचे त्वां कृष्णपूर्वज ।
कर्षणायुधकृष्टास्मि रोषोऽयं विनिवर्त्यताम् ॥ ४५
एषा मूर्ध्नाभिगच्छामि चरणौ ते हलायुध ।
मार्गमादिष्टमिच्छामि क्व गच्छामि महाभुज ॥ ४६ C 5787 B 2 46 49 P 2. 46 49

द्रुतं° . — $^{d}$ ) $\tilde{N}_2$ -मेदिनी ( for -गामिनी ) — After 37, $B_3$ repeats $36^{ab}$ and $M_{1-3}$ ins 943*

38 $D_6$ om $38^{ab}$ ( cf. v l 37 ) $D_4$ om ( hapl ) $38^{a}$–$39^{b}$ $M_{1-3}$ om $38^{ab}$ $V_3$ reads $38^{a}$–$39^{b}$ for the first time after $35^{ab}$ — $^{a}$ ) $\acute{S}_1$ $G_3$ $M_4$ लाङ्गलोल्लिखि- ( $M_4$ °ल्लसि )ताग्राङ्गी , $V_1$ °न्मथितापाङ्गी , $T_1$ °ल्लिखिताङ्गी सा ; $G_1$ °ल्ललितापाङ्गी , $G_4$ °ल्लुळितापाङ्गी — $^{b}$ ) $\acute{S}_1$ $K_3$ $V_{1\,3}$ ( both times ) $B_{1\,2}$ $D_{1-3}$ क्षुभिता सागराङ्गना , $K_4$ °ता सा वराङ्गना — $T_3$ $M_4$ ins after $38^{ab}$ $M_{1-3}$ after 37

955* शैवालमलदिग्धाङ्गी घनबुद्बुदविक्लवा ।
[ $M_{1-3}$ -पङ्कोष्ठी ( for -दिग्धाङ्गी ) ]

— $^{c}$ ) $\tilde{N}_2$ $T_1$ $G_3$ M मत्तेव कुटिलापाङ्गी

39 For the repetition in $V_3$, cf v l 38 $D_4$ om $39^{ab}$ ( cf. v l 38 ) — $^{a}$ ) $\tilde{N}_{1\,2}$ $V_3$ ( both times ) कृष्यमाणा ( for कृष्यते सा ) Bom Poona eds [अ]ति- ( for स्म ) — $^{b}$ ) $T_2$ $G_{1\,4}$ वेगिनी ( for -गामिनी ) $\tilde{N}_1$ स्खलितस्रोतगामिनी — $^{c}$ ) $K_1$ उन्मार्गनीता मार्ग सा , $M_{1-3}$ °र्गा सा जगामाशु — $^{d}$ ) $T_2$ साधु ; $T_4$ न च , $G_3$ तेन ( for येन ) $T_2$ गता ; $G_3$ $M_4$ शुभम् ( for वनम् )

40 $^{a}$ ) $T_2$ $G_{1\,3}$ $M_{1\,2\,4}$ मध्ये तु ( for मध्येन ) — $^{b}$ ) $T_2$ सा दीना , $G_3$ $M_2$ नीता सा ( by transp ) — $^{c}$ ) $D_3$ च खगैर् ( for खगमैर् ). $K_{2-4}$ Ñ V B Dn Ds $D_{1\,2\,4-6}$ $T_{2-4}$ $G_{1\,2\,4}$ रोरूयमाणेव ( $D_6$ $G_1$ °णा च ) खगैर् — $^{d}$ ) $K_{2\,4}$ $\tilde{N}_3$ ( marg as in text ) $V_2$ B D $T_{3\,4}$ $G_2$ तोय- ; $K_3$ नीर- ( for तीर- ) $\acute{S}_1$ -गामिनी , $K_1$ -गामिभि ( for -वासिभिः ). $T_2$ $G_{1.4}$ अभितस्तोयवासिभिः .

41 $\acute{S}_1$ om $41^{ab}$ — $^{a}$ ) $B_3$ $Dn_1$ $T_1$ $G_5$ समभि- ( for °ति- ). — $^{b}$ ) $T_2$ $G_{1\,4}$ वृन्दावनाद् ( for °वनं ) $T_1$ $G_{3\,5}$ M तदा ( for वनम् ) — $^{c}$ ) $M_4$ तदा ( for ततः ) $K_{2-4}$ Ñ V B D $T_{2-4}$ $G_{1\,2.4}$ तदा स्त्रीरूपिणी भूत्वा — $^{d}$ ) $D_3$ $T_2$ $G_1$ वाक्यम् ( for रामम् )

42 $^{a}$ ) $K_{2-4}$ Ñ V $B_{2\,3}$ D $T_{2-4}$ $G_{1-4}$ नाथ ( for राम ). — $^{b}$ ) $K_2$ धर्षिता , $T_{3\,4}$ कर्षणात् ( for कर्मणा ) — $^{cd}$ ) $M_{1-3}$ तोयं रूप ( by transp ). $D_{1\,2}$ तोयं च समजायत ( for $^{d}$ )

43 $^{a}$ ) $V_1$ वसाम्यहं ; $G_3$ हसिताहं ( for असत्यहं ). — $^{b}$ ) $\acute{S}_1$ त्वया धृता , $K_3$ निराकृता , $D_3$ कृता त्वया ( by transp ). — For $43^{ab}$, $\tilde{N}_1$ subst

956* रौहिणेय हसिष्यति मां नन्द. संगता त्वया ।

— $^{c}$ ) $K_1$ कर्षणाच्च , $Ds_1$ संकर्षण ( for कर्षणेन ) $M_{1-3}$ स्वमार्गव्यति( $M_1$ °भि )चारेण — $^{d}$ ) $\acute{S}_1$ $K_1$ $\tilde{N}_1$ स्वमार्गव्रतचारिणी , $D_3$ °स्याभिचारिणी

44 $^{a}$ ) $V_1$ प्राप्तां तां , $T_1$ $G_3$ $M_{1-3}$ सप्राप्ता ( for प्राप्तां मां ) $D_4$ सागर ( for °रे ) $T_3$ प्राप्तां मां सागरानूपं , $M_4$ सप्राप्ता सागरानूपं — $^{b}$ ) $\tilde{N}_1$ पत्न्यो वै ( for सपत्न्यो ). — After $44^{ab}$, G( ed ) ins 945* — $^{c}$ ) $G_3$ तोय- ( for फेन ) — $^{d}$ ) $G_3$ $M_4$ फेन- ( for तोय- )

45 $^{a}$ ) $T_1$ $G_{3\,5}$ $M_{1-3}$ राम ( for वीर ) — $^{b}$ ) $T_{3.4}$ जाने ( for याचे ) $\acute{S}_1$ त्वा ( for त्वां ) — $K_2$ $\tilde{N}_{2\,3}$ V B Dn Ds $D_{4\,6}$ $T_{3\,4}$ $G_2$ ins after $45^{ab}$ . G(ed) after $44^{ab}$ .

957* सुप्रसन्नमना नित्यं भवस्व त्वं सुरोत्तम ।
[ $K_2$ $V_2$ $B_3$ Dn $G_2$ भव त्वं सुरसत्तम , $D_4$ $T_4$ भवस्व ( $T_4$ भव त्व ) पुरुषोत्तम ( for $^{b}$ ) ]

— $D_3$ om ( hapl ) $45^{c}$–$46^{d}$ — $^{c}$ ) $\tilde{N}_2$ $V_3$ क्लिष्टास्मि ( for कृ° ) $B_1$ लाङ्गलायुधकृष्टास्मि — $^{d}$ ) $T_3$ सं- , $G_3$ स ( for ऽयं )

46 $D_3$ om 46 ( cf v l 45 ) — $^{a}$ ) $K_2$ Ñ V B Dn Ds $D_{4-6}$ $T_{2-4}$ $G_{1\,2\,4\,5}$ गच्छामि चरणौ मूर्ध्ना , $K_{3\,4}$ $D_{1.2}$ $G_3$ मूर्ध्ना गच्छामि चरणौ — $^{b}$ ) $K_2$ $\tilde{N}_3$ $V_{1,3}$ B Ds $D_6$ $G_2$

तामेवं ब्रुवतीं दृष्ट्वा यमुनां लाङ्गलायुधः ।
प्रत्युवाचार्णववधूं मदाक्रान्तालसो बलः ॥ ४७
लाङ्गलाकृष्टमार्गा त्वमिमं मे प्रियदर्शने ।
देशमम्बुप्रदानेन निखिलं भावयस्व नः ॥ ४८
एष ते सुभ्रु संदेशः कथितः सागरंगमे ।
शान्तिं व्रज महाभागे गम्यतां च यथासुखम् ।
लोका हि यावत्स्थास्यन्ति तावत्स्थास्यति मे यशः ॥ ४९
यमुनाकर्षणं दृष्ट्वा सर्वे ते व्रजवासिनः ।
साधु साध्विति रामाय प्रणामं चक्रिरे तदा ॥ ५०

तां विसृज्य महावेगां तांश्च सर्वान्व्रजौकसः ।
ततः संचिन्त्य मनसा बुद्ध्या निश्चित्य चैव ह ।
पुनः प्रतिजगामाशु मथुरां रोहिणीसुतः ॥ ५१
स गत्वा मथुरां रामो भवने मधुसूदनम् ।
परिवर्तमानं ददृशे पृथिव्याः सारमव्ययम् ॥ ५२
तथैव वनवेषेण सोपसृप्तो जनार्दनम् ।
प्रत्यग्रवनमालेन वक्षसाभिविराजता ॥ ५३
स दृष्ट्वा तूर्णमायान्तं रामं लाङ्गलधारिणम् ।
सहसोत्थाय गोविन्दो ददावासनमुत्तमम् ॥ ५४

---

तवाहं लाङ्गलायुध; K3 4 Ñ1 2 V2 Dn D1 2 4 5 T2–4 G1. 4. 5 तवैषा लाङ्गलायुध — c) Ś1 उद्दिष्टम्, G3 M आदेष्टम् (for आदिष्टम्). T1 G1 5 मार्गमादिश गच्छेयं (G1 °च्छामि; G5 °च्छेऽहं) — d) K2 गमिष्यामि, K4 गच्छामि च (for क्व गच्छामि). K3 T2 G1 हलायुध (for महाभुज)

47 Before 47, K1 T3 ins वैशंपायन उवाच — a) K Ñ V B Dn Ds D2 (marg) 3–6 T2–4 G1 2 4 प्रणामा- Ñ2 B3 T4 °णया )वनतां दृष्ट्वा; D1 2 प्रणतां च न( D2 वनि )तां दृष्ट्वा — b) G5 M1–3 यमुनां स हलायुध — d) T1 बली (for बलः) Ś1 यमुनां तामसौ बल; K1 3 4 Ñ1 3 V2. 3 B1 2 Dn Ds2 D1–3 T3 4 G1 2 5 मदक्रा( K1 °क्रा )न्त इदं वचः, K2 Ñ2 V1 B3 Ds1 D4–6 T2 G4 मदक्रान्तमिदं वचः.

48 a) Ś1 [आ]शु (for त्वम्) K2 3 Ñ V B D T G1 2. 4 5 M4 लाङ्गलादिष्टमार्गा त्वम् — b) G4 इहैव (for इमं मे). — c) Ñ1 -प्रसादेन, T2 G1 2 4 5 -प्रवाहेन, G3 M4 -प्रपातेन (for -प्रदानेन). M1 3 देशमम्बुजपत्राक्षि — d) T1 पातयस्व, G3 M4 प्लाव° (for भाव°) K2–4 Ñ V B D T2–4 G1 2. 4 5 प्लावयस्वाखिलं शुभे (Ñ1 तदा; G2 शुभम्)

49 a) K4 एवं हि (for ते सुभ्रु). — b) G1 यमुने; G4 नित्यं स्यात् (for कथितः) V1 B2 D1–3 कथित सागराङ्गने, T1 साधित सागरोत्तमे — c) T3 4 भज (for व्रज). — e) K3 4 Ñ2 V3 B2 Dn D1–5 T3 यावत्स्थास्यति लोकोऽयं (Ñ2 V3 B2 D4 T3 °को हि); V2 T4 यावत्स्थास्यन्ति लोका हि (T4 लोके मे), T2 G1 यावत्तिष्ठन्त्यमी लोकास्, G3 M1–3 यावत्स्थास्यन्त्यमी लोकास्. — f) K2 3 Ñ1 3 V1 B1 3 Ds D6 T1 G2 तिष्ठतु, T2 G1 तिष्ठति (for स्थास्यति) — After 49, T1 3 G3. 5 M4 ins

958* वैशंपायन उवाच ।
इत्युक्ता सा तथा चक्रे यमुना रामशासनम् ।
अनुज्ञाता तु रामेण यथामार्गं जगाम सा ॥

[ G3 om the ref — (L 2) T3 G5 [अ]थ (for तु) ]

50 b) K3 D4 वन- (for व्रज-) — After 50, T1–3 G1 3 5 M ins

959* नमोऽस्तु ते जगन्नाथ बलभद्र हलायुध ।
प्रसीद देवदेवेश राम रामेति गोपका ॥

[ (L 2) T1 -देवेति (for °श) T1 G3 M1–3 गोपिकाः (for गोपकाः) G5 M4 प्रसीद राम रामेति (M4 °श) देवदेवेति (M4 °श) गोपका ]

51 a) K2–4 Ñ V Dn D1 2. 3 5 T2–4 G4 M4 महाभागां (for °वेगां) — b) Ñ2 V1 Ds वनौकसः (for व्रजौ°). — G1 om 51cd — d) K1 3. 4 Ñ1 2 3 (marg) V B2 Dn D1–5 T2. 4 G4. 5 रामः प्रहरतां वरः

52 c) Hypermetric Ñ2 V1 B2 D5 वि-, V3 प्र- (for परि-) K3 D2 (marg) उपविष्टं स ददृशे — d) Ś1 T1 G3 पृथिवी, K Ñ V B Ds D1–6 T2 3 G1 4 5 M4 °व्यां (for °व्या)

53 a) K1 तेन (for तथा) K2 Ñ V1 2 B1 2 Dn Ds D4–6 T2 3 G2 4 [अ]ध्वन्य-, V3 [अ]ध्वग-; D2 (*sup lin.*) अ वन्य-, T1 G5 M व्रज-, T4 [आ]गम (for वन-). G3 M4 तेनैव व्रजवेषेण — b) K1 3 D2 4 (marg) सोपसृत्य, K2 G1 4 °क्लिष्टो; K4 V3 B2 Dn D2 (before corr.) °श्लिष्टो; Ñ1 3 V1 B1 3 Ds D4–6 G2 °सृष्टो, Ñ2 °श्लिष्ट्वा, V2 °विष्टो; D3 सोऽपि सृष्टो; T1 सोपविष्टं, T3 4 °श्लिष्य, G3 M4 सस्वजे तं (for सोपसृप्तो) D1 सोऽपि श्लिष्टो जनार्दनः; T2 सोपश्लिष्य जनार्दनः — D1 om (hapl) 53c–55d G4 repeats 53c–54d including 949* after 55. — d) K2 M4 -विराजितम् (for °जता).

54 For the repetition in G4, cf v l 53. D1 om. om. 54 (cf v. l. 53). — a) K1 तं (for स). — d) Dn T3 G1 आत्मनः (for उत्तमम्). Ñ3 V1 B1. 3 Ds D6 प्रददा-

उपविष्टं ततो रामं पप्रच्छ कुशलं व्रजे ।
बान्धवेषु च सर्वेषु गोषु चैव जनार्दनः ॥ ५५
प्रत्युवाच ततो रामो भ्रातरं साधुभाषिणम् ।
सर्वत्र कुशलं कृष्ण येषां कुशलमिच्छसि ॥ ५६
ततस्तयोर्विचित्राश्च पौराण्यश्च कथाभवन् ।
वसुदेवाग्रतः पुण्या रामकेशवयोस्तदा ॥ ५७

इति श्रीहरिवंशे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

# ८४

वैशंपायन उवाच ।
कस्यचित्त्वथ कालस्य सभायां यदुसंसदि ।
बभाषे पुण्डरीकाक्षो हेतुमद्वाक्यमुत्तमम् ॥ १
यादवानामियं भूमिर्मथुरा राष्ट्रवर्धनी ।
वयं चैवेह संभूता व्रजे च परिवर्धिताः ॥ २
तदिदानीं गतं दुःखं शत्रवश्च पराजिताः ।
नृपेषु जनितं वैरं जरासंधे च विग्रहः ॥ ३
वाहनानि च नः सन्ति पादातं चाप्यनन्तकम् । C 6389 B 2 56. 4 P 2. 56 4

वासनोत्तमम् — After 54, D6 T1–3 G1 3 4 (both times) 5 M ins

960* अभिवाद्य महात्मान बलभद्र जनार्दन ।
पुन प्रणाममकरोत्स्वागत ते हलायुध ॥

[ T2 G1 4 (first time) om line 1 — (L 1) D6 M1–3 महादेव (for °त्मान) M2 बलदेव (for °भद्र) T1. 3 M4 पुन पुन (for जनार्दन) — T3 om. line 2. — (L. 2) D6 प्रणाममकरोच्चैव (for a) ]

55 For the repetition in G4, cf v l 53 D1 om. 55 (cf v l 53) — a) K3 4 V2 Dn D2 3 T2–4 G1 2. 4 5 M4 तदा (for ततो)

56 b) D4 शुभ- (for साधु-) K4 D3 T3 भाषितम्, V1 °ण., B3 °ता (for °णम्) — c) Ñ2 D2 (sup. lin) सर्वेषां (for सर्वत्र) B3 वीर (for कृष्ण)

57 a) K2 Ñ2 3 V B Dn Ds D2 (sup lin). 3 4 6 T1 G1–3 विचित्रार्थाः (for °त्राश्च) — b) K4 पौराणाश्च (for °ण्यश्च). K1 Ñ2 3 V2 D2 3 G3 [अ]भवन्कथा· (by transp); T1 [अ]भवन्विभो, T2 3 G1 4 तथाभवन् K2 V1 B Ds D6 G2 पौराण्यो ह्यभवन्कथाः; D5 °णी च कथाभवत्; G5 M कथास्तत्रा( G5 °स्त्वप्य- ; M4 °श्चाप्य )भवन्विभो

Colophon — *Mention of the Epic* K3 Ñ1 B3 Ds2 T3. — *Mention of Khila*. Ś1 K3. 4 Ñ3 V B Dn Ds D1 3 — *Sub-parvan* T4 आश्चर्यपर्व — *Adhy. name* N T1. 4 G2 3 M4 यमुनाक( D3 °ध )र्षणम्, M1–3 बलदेवक्रीडनम्. — *Adhy no* (figures, words or both) K3 (marg) D4 100, Ñ3 V1 3 B2 103, V2 G1 104; Dn Ds2 101; D3 108; T1 G3 M2 4 109; T2 G4 192, T3 112, T4 93, G2 106; G5 195; M1 3 99. — *Śloka no* Dn 60, Ds2 61, D4 59 — After this adhy, N (except Ś1 Ñ1) T2–4 G1 2 4 5 M G(ed) ins. a passage given in App I (No 20)

## 84

☞ G5 reads this adhy after line 770 of App I (No 20)

1 K1 om the ref K2 reads 1a–7b on marg — b) Ñ3 V1 B2 Ds T1 G2 सभ्यांस्तान्, D6 समस्तान् (for सभायां). — d) K2 D5 यादवो य( D5 °वान्य )दुपुगवः. — After 1, D6 T1–3 G1 3 5 M ins

961* श्रूयतां यादवा वाक्यं सर्वे चावहिता मम ।

[ M4 मया (for मम) T3 G1 5 सर्वैश्चापि हितैर्मम (for b). ]

2 b) Ś1 यादवी, K1 माथुरी (for मथुरा). K2–4 Dn D1 2 4 5 T4 -मालिनी, Ñ1 T1–3 G1 3–5 M4 -शोभिनी; Ñ2 3 V1 3 B Ds D6 G2 वर्धिनी, V2 D3 -शालिनी (for -वर्धनी) M1–3 मधुरा राष्ट्रशोभिनी — c) D2 व्रजे (for वय). Ś1 वै च (for चैव) Ñ1 [ए]क- (for [इ]ह). G1. 3 M4 संजाता (for संभूता) — d) M4 तु (for च)

3 a) V2 यद्, B1 Ds1 त तु; G5 M1–3 तत्तु (for तद्). — c) K2 नित्यं* (for जनितं) — d) T2 3 G1. 3 4 M4 तु (for च) K1 4 Ñ V B Dn Ds D1 3–6 T1 4 G2 जरासंधेन विग्रह

4 a) K2 D5 वः सन्ति, Ñ1 सन्ति स्म (for न. सन्ति) — b) T2 G1 [अ]नन्तका· (for °कम्) T3 G3–5 M पादाताश्चाप्यनन्तका. — d) K2 Ñ V1 3 B1 3 Ds D6 T1 4 G2 सुब( Ds T1. 4 च ब )हूनि (for बहुलानि).

रत्नानि च विचित्राणि मित्राणि बहुलानि च ॥ ४
इयं च माथुरी भूमिरल्पा गम्या परस्य नः ।
वृद्धिश्चापि परास्माकं बलतो मित्रतस्तथा ॥ ५
कुमारकोट्यो याश्चेमा गणाश्चैव पदातिनाम् ।
एषामपीह वसतां संमर्दमुपलक्षये ॥ ६
तन्मे न रोचते ह्यत्र निवासो यदुपुंगवाः ।
पुरीं निवेशयिष्यामि मम तत्क्षन्तुमर्हथ ॥ ७
एतद्यद्यनुकूलं वो ममाभिप्रायजं वचः ।
भवाय भवतां काले रोचतां यदुसंसदि ॥ ८
तमूचुर्यादवाः सर्वे हृष्टेन मनसा तदा ।
साध्यतां यदभिप्रेतं जनस्यास्य भवाय च ॥ ९
ततः संमन्त्रयामासुर्वृष्णयो मन्त्रमुत्तमम् ।
अवध्योऽसौ कुतोऽस्माकं सुमहच्च रिपोर्बलम् ॥ १०
कुतः सैन्यक्षयश्चापि महानिह नराधिपैः ।
बलानि च ससैन्यानि हन्तुं वर्षशतैरपि ।
न शक्ष्यामो ह्यतस्तेषामपयानेऽभवन्मतिः ॥ ११
एतस्मिन्नन्तरे राजा स कालयवनो महान् ।
सैन्येन तद्विधेनैव मथुरामभ्युपागमत् ॥ १२
ततो जरासंधबलं दुर्निवार्यं महत्तदा ।
ते कालयवनं चैव श्रुत्वैवं प्रतिपेदिरे ॥ १३

5 a) D4 वै ( for च ) D3 T2 G1 मथुरा, G3 M मधुरा ( for माथुरी ) — b) Ś1 अप्यगम्या, K1 अभ्यागम्या, Ñ2 V3 D3 अनागम्या ( for अल्पा गम्या ) T1 3 G4 जनस्य ( for परस्य ) K4 Ñ1 2 T1 3 G1 4 च, Ñ3 V B D T4 G2 तु ( for नः ). K2 3 M4 अल्पगम्या परस्य तु ( M4 च ), T2 G3. 5 M1–3 अल्पगम्या जनस्य न ( T2 G3 च, G5 तु ) — c) K Ñ3 V1 2 B2 Dn D1. 3 5 T4 M2 [ए]व, D2 [ए]षां ( for [श्च]पि ) T1 तदा ( for परा )

6 a) T4 [ए]व ( for [इ]मा ) K2 कुमारकोटयो याश्च — b) Ñ1 पदातिन, Ñ2 3 V1 3 B1 3 D3 D5 G2 °तय ; T1 पताकिनाम् ( for पदाति° ) K2–4 V2 B2 Dn D1. 2 ( marg ) 3 4 T4 पदाती( D3 °ता )नां गणाश्च ये

7 a) M1–3 न नो ( for मे न ) K2 Ñ2 3 V1 3 B D3 D4–6 T1 G2 3 तन्मह्यं ( B3 अत्र नो, T1 G3 तत्तु मे ) रोचतेऽन्यत्र ; K3 4 Dn D1 अत्र नो ( K3 D1 तत्र नो, K4 तत्र वै ) रोचते मह्य, Ñ1 तन्न रोचयते मह्य, V2 D3 एतन्न ( D3 तदन्यो ) रोचते मह्यं, T2 3 G1 4 M4 तत्तु मे रोचते पुत्र ( M4 मह्यं ), T4 तन्मात्र रोचते मह्यं — b) Ś1 V1 निवासं ( for °सो ). — T4 reads 7cd twice — c) K1 2 T2 G3 पुर ( for पुरीं ). — d) K2 च क्षन्तुम् ; M1. 3 तन्मन्तुम् ( for तत्क्षन्तुम् ) Ś1 Ñ1 अर्हसि ( for °थ )

8 a) S1 एतदस्य ; K1 2 एवमपि, V2 B1 D32 एतद्यद् ; G2 °त्तद् ( for °द्यदि ) K3 Ñ1 Dn2 D4 अनुरूपं ( for °कूलं ) K4 Ñ3 V1 B2 Dn1 D1 3 5 T1. 3 4 G1 3–5 M एतद्यदनुरूपं वो ( T3 G4 वै ), D2 एतदप्यनुकूल वो — c) K2 G2 लोके ; V1 कार्ये ( for काले ) — d) Ś1 K Ñ3 V1 2 Dn D1–5 T4 G3 यदुक्तं ; Ñ1 2 V3 B D3 D6 G2 मयोक्तं ( for रोचतां ).

9 b) K2 यदा, V2 सदा, T3 सह ( for तदा ) Ñ1 2 V3 B1 3 D3 G2 प्रहृष्टमनसस्तदा ( B3 °था ) — c) Ś1 तद् ( for यद् ) — d) Ś1 K3. 4 V2 B2 Dn D1 2. 4 5 G2 वै ( for च ).

10 a) D3 T1–3 G1–3 5 M ते ( for सं- ) — b) D3 यादवा ( for वृष्णयो ) — c) Ś1 Ñ2 3 V1 2 B Ds1 D2. 6 T4 G2 4 नृपो, K1 2 रिपुर् ( for कुतो ) — d) D2 सुमहद्धि ; D3 महच्चापि ( for सुमहच्च )

11 a) Ś1 Cal ed. ततः, Ñ1 तत्र ( for कुत ) K2 सौम्य ( for सैन्य- ) D3 -भरश् ( for क्षयश् ) — b) K4 अति ; D3 एष, T4 इति ( for इह ) — c) Ś1 K Dn D1 2 T2–4 G1–4 M4 बहु( T2 3 G3 4 अखि )लानि च सैन्यानि, G5 अखिलानि च सर्वाणि — e) V2 B1 2 D2 ( marg ). 3 4 शक्यामो ; D2 क्षमामो ( for शक्ष्यामो ) K2 Ñ2 V3 यतस् ; T1 G3 M4 ऽन्यतस् ( for ह्यतस् ). G4 5 न शक्यामोऽन्यतस्तेषाम् — f) G2 आवयोर्नो ( for अपयाने ) K2 भवत्यत ; T1 G3. 5 M2. 4 ह्यभून्मतिः ; T2 3 सुदुर्मतिः ( for ऽभवन्मतिः ).

12 Before 12, D2 ins वैशंपायन उवाच. — a) Ś1 K Ñ2 V2 B2 Dn D1–5 त( Ś1 अ )स्मिंश्चैव ( for एतस्मिन् ) T2. 3 G1. 4 एतस्मिन्नेव काले तु — b) K3 Ñ2. 3 V B1 2 Dn D3 D1. 2 4 6 T1 2. 4 G M3 4 तदा, K4 ऽभवत्, B3 D5 T3 M1. 2 तथा, D3 नृप ( for महान् ) Ñ1 जरासंधो महाबल.. — c) T1. 2 G1 3–5 M विविधेन ( for तद्विधेन ) — d) D3 मथुरामागत पुरीम्, T1 G5 °भ्याशमागमत्.

13 b) K1. 2 T4 अभूत्तदा, G5 M4 महत्तरम् ( for °त्तदा ) V2 दुर्निवार्यतरं तदा, T1–3 G3 4 M1–3 °र्यां महत्तरा. — c) K3 तं ( for ते ). T1–3 G1 4 5 M प्राप्तं ( for चैव ). — d) Ś1 K3. 4 V3 Dn D1. 3 T4 श्रुत्वेदं ; Ñ1 तत्र

केशवः पुनरेवाह यादवान्सत्यसंगरान् ।
अद्यैव दिवसः पुण्यो निर्याम सपदानुगाः ॥ १४
निश्चक्रमुस्ते यदवः सर्वे केशवशासनात् ।
ओघा इव समुद्रस्य बलौघप्रतिवारणाः ॥ १५
संगृह्य ते कलत्राणि वसुदेवपुरोगमाः ।
सुसंनद्धैर्गजैर्मत्तै रथैरश्वैश्च दंशितैः ॥ १६
आहत्य दुंदुभीन्सर्वे सधनज्ञातिबान्धवाः ।
निर्ययुर्यादवाः सर्वे मथुरामपहाय वै ॥ १७
स्यन्दनैः काञ्चनापीडैर्मत्तैश्च वरवारणैः ।
सृतप्लुतैश्च तुरगैः कशापार्ष्णिप्रचोदितैः ॥ १८
स्वानि स्वानि बलाग्राणि शोभयन्तः प्रकर्षिणः ।
प्रत्यङ्मुखा ययुर्हृष्टा वृष्णयो भरतर्षभ ॥ १९
ततो मुख्यतमाः सर्वे यादवा रणशोभिनः ।
अनीकाग्राणि कर्षन्तो वासुदेवपुरोगमाः ॥ २०
ते स्म नानालताचित्रं नारिकेलवनायुतम् ।
कीर्णं नागवनैः कान्तैः केतकीषण्डमण्डितम् ॥ २१
पुंनागतालीबहुलं द्राक्षावनघनं क्वचित् ।
अनूपं सिन्धुराजस्य प्रपेदुर्यदुपुंगवाः ॥ २२　　C 6408 B 2. 56 22 P 2 56 22

---

सं-, M3 श्रुत्वैतत् ( for श्रुत्वैवं ) — After 13, Ñ1 wrongly reads lines 51 and lines 56–74 of App I ( No 20 ) While G2 ins after 13

962* एतस्मिन्नन्तरे चैव यदूना नन्दिवर्धन· ।

14 $^{b}$ ) Ś1 K V2 3 B2 D ( except D6 ) T G1–4 M4 संगर ( for °रान् ) — $^{c}$ ) K3 अद्यैव पुण्यदिवसो, T2 G1 °व दिवसे पुण्ये — $^{d}$ ) Ñ1 G2 M1 2 निर्याम, T2, 3 G1 3 4 M4 गच्छाम· ( M4 °म ) ( for निर्याम ) Ś1 K2 B1 Ds D1 निर्याम सबलानुगा, K1 3 4 Ñ2 3 ( marg ) V2 Dn D2, 3 6 T4 निर्याम ( D6 °त ) सबलानुगा, V1 गच्छामः सबलानुगा., V3 B2 3 D4 5 G5 निर्याम स्वबलानुगा ( V3 °लैर्वृता ).

15 $^{a}$ ) Ś1 संहृष्टाः ( for यदव ). K1 3 4 Ñ V B D ( except D2 ) T4 G2 ततो निश्चक्रमु· सर्वे, K2 विश्रब्धा यादवाश्चैव — $^{b}$ ) K3 4 Ñ V B Dn D1 3–6 T4 G2 यादवा कृष्णशासनात्, Ds यादवा केशवाज्ञया — Ds transp $15^{cd}$ and $16^{ab}$ — $^{c}$ ) D3 कुल्या ( for ओघा ). — $^{d}$ ) Ñ V B Dn Ds D1 2 ( *sup. lin* ) 3 5, 6 T4 G2 -नादिता, D4 नोदिताः; T1, 2 G1 3 4 चारिणः, M2 ( *inf lin* as in text ) 3, 4 -वारिणः ( for -वारणा· ) — After 15, Ds reads $18^{ab}$.

16 Ñ1 om $16^{ab}$ Ds transp $15^{cd}$ and $16^{ab}$. — $^{a}$ ) Ds सगृह्य च, T4 प्रगृह्यन्ते ( for सगृह्य ते ) Ś1 D2 संगृहीतकलत्रा हि — After $16^{ab}$, T2 3 G1 read $21^{ab}$ repeating it in its proper place —$^{d}$ ) M1–3 सु- ( for च ) Ś1 K1, 2 Ñ2 B D2 6 G2 दशिताः ( for °तैः )

17 $^{a}$ ) K2 Ñ2 Ds D1 2 4 T2 3 G2 M3 दुंदुभी.; V3 °भिं ( for °भीन् ) K4 आतोद्यदुंदुभीः सर्वे. — $^{b}$ ) K1 Ñ1 3 ( marg as in text ) V2 B2 D1 4 5 T4 G स्वजन-, D2 ( marg ) T1, 2 M4 सजन- ( for सधन- ) K2 -ख्यात- ( for -ज्ञाति- ) D3 स्वजनज्ञातिबान्धवै. — $^{c}$ ) Ś1 D2 शूरा ( for सर्वे ).

18 Ds reads $18^{ab}$ after 15 Ñ2 reads $18^{b}$–$20^{b}$ twice — $^{c}$ ) K1 D4 कृत-, K3 4 D2 जव-, Ñ1 V3 सितै, D3 श्रित-, T4 सूतै ( for सृत- ) T1–3 G1 3–5 M द्रुतयायिभिरश्वैश्च — D4 om $18^{d}$–$19^{a}$ — $^{d}$ ) D1 कशयाभि-, D3 कशासृणि- ( for °पार्ष्णि- ) K3 T4 -प्रणोदितै· ( for -प्रचो° )

19 For the repetition in Ñ2, cf v l 18 D4 om $19^{a}$ ( cf v l 18 ) — $^{a}$ ) T1–3 G1 3–5 M तानि तानि ( for स्वानि स्वानि ) G2 बलाढ्यानि ( for °ग्राणि ) — $^{b}$ ) D3 चालयन्त ( for शोभ° ) V3 प्रकाशिता·, T1–3 G3–5 M प्रदक्षिणम् ( for प्रकर्षिण ) — $^{c}$ ) D5 प्रतिजग्मुस्ततो हृष्टा — $^{d}$ ) D5 यादवा ( for वृष्णयो )

20 For the repetition in Ñ2, cf v l 18 — $^{a}$ ) K3 4 Ñ3 V1 2 D1 3 T4 G2 मुख्यतरा ( for °मा· ) — $^{b}$ ) K2 -शोभना·, B1 Ds2 D6 G2 -कोविदा ( for -शोभिन ). — $^{c}$ ) S1 D2 M3 [अ]कर्षन्त, Ñ1 [अ]शोभन्त ( for कर्षन्तो ). K2 अनीकान्यवकर्षन्तो, V3 शोभमानान्यनीकानि, D3 अनीकान्यभिकर्षन्तो — After 20, D2 ins 963*

21 T2 3 G1 read $21^{ab}$ for the first time after $16^{ab}$ — $^{a}$ ) K2 -वनं; B3 -कृतं, G4 -लतं ( for -लता- ). — $^{b}$ ) Some Mss नालिकेर ( for नारिकेल ) V1 D3 -बलायुतम्, T1 2 3 G1 ( last three both times ) 3–5 M -समाकुलम्, G2 -वनाकुलम् ( for °युतम् ) — $^{c}$ ) K3, 4 Ñ3 V1 3 Dn D1 3–5 T3 4 G2 शतै, Ñ2 V2 B -बलैः ( for -वनै ). D1 T G1 3 M4 कान्त ( for कान्तै ) —$^{d}$ ) K3 कदली- ( for केतकी- ) Some Mss -खण्ड- ( for -षण्ड- ). Ds केतकीषण्डमाश्रितम्·

22 $^{a}$ ) Ñ1 Ds1 -ताल- ( for -ताली- ). Ś1 -बकुलं ( for -बहुल ). K3, 4 Ñ2 V2 3 B2, Dn D1 3–5 T4 ताली( T4 °ल )-पुंनागबकुलं ( B2 °हुल- ), Ds2 पुंनागतालबहुल-, T1–3 G1, 4 5 M °नागबकुल- ( M4 °लं ). — $^{b}$ ) Ñ1, 2 V3 -वनयुतं; M2

ते तत्र रमणीयेषु विषयेषु सुखप्रियाः ।
मुमुदुर्यादवाः सर्वे देवाः स्वर्गगता इव ॥ २३
पुरवास्तु विचिन्वन्स कृष्णस्तु परवीरहा ।
ददर्श विपुलं देशं सागरानूपभूषितम् ॥ २४
वाहनानां हितं चैव सिकताताम्रमृत्तिकम् ।
पुरलक्षणसंपन्नं कृतास्पदमिव श्रिया ॥ २५
सागरानिलसंवीतं सागराम्बुनिषेवितम् ।
विषयं सिन्धुराजस्य शोभितं पुरलक्षणैः ॥ २६
तत्र रैवतको नाम पर्वतो नातिदूरतः ।
मन्दरोदारशिखरः सर्वतोऽभिविराजते ॥ २७
तत्रैकलव्यसंवासो द्रोणेनाध्युषितश्चिरम् ।
बभूव पुरुषोपेतः सर्वरत्नसमाकुलः ॥ २८
विहारभूमिस्तत्रैव तस्य राज्ञः सुनिर्मिता ।
नाम्ना द्वारवती नाम स्वायताष्टापदोपमा ॥ २९
केशवस्य मतिस्तत्र पुर्यर्थे विनिवेशिता ।
निवेशं तत्र सैन्यानां रोचयन्ति स्म यादवाः ॥ ३०
ते रक्तसूर्ये दिवसे तत्र यादवपुंगवाः ।
सेनापालाश्च संचक्रुः स्कन्धावारनिवेशनम् ॥ ३१
ध्रुवाय तत्र न्यवसत्केशवः सह यादवैः ।
देशे पुरनिवेशाय स यदुप्रवरो विभुः ॥ ३२

-घनवनं ( for -वनघनं ). T2 G1 3-5 M4 द्राक्षापनससंकुलम् ; T3 °वनसमाकुलम् — Ś1 ins after $22^{ab}$ D2 after 20

963* सुसंनद्धैर्बलैस्तत्र तदा नृपवरोत्तमा ।

— G1 repeats $22^{c}$ after the first occurrence of $27^{b}$ — $^{c}$) K1 M1-3 आनूपं ( for अ° ) — After $22^{c}$, G1 reads $26^{d}$–$27^{b}$, repeating it in its proper place — $^{d}$) Ś1 K1 2 D2 संपेतुर्, K3 4 Ñ B2 D1 4 T G1 3-5 M4 प्रपेतुर् ; Dn G2 प्रययुर् ( for प्रपेदुर् )

23 $^{b}$) D3 सह- ( for सुख- ) — $^{d}$) B1 3 Ds G2 यथा ( for इव ).

24 $^{a}$) Ś1 G2 पुरे ( G2 °रं ) वस्तुं ; K3 4 Ñ2, 3 D4 पुरवासं ( for °वास्तु ) V2 विचिन्वन्वै ; T2, 3 G3 5 M विचिन्वानः ( for °न्वन्स ). D2 5 पुरवासं विचिन्वन्वै ; D3 °सविधिज्ञः स — $^{b}$) D2 केशव , D5 स कृष्णः ( for कृष्णस्तु ). — $^{c}$) Ś1 विमलं ( for विपुलं ) — $^{d}$) K3 4 Ñ3 V1 B2 Dn D1 4, 5 T4 -शोभितम् , D3 -वासिनम् ( for -भूषितम् ).

25 $^{b}$) T2 सैकत ( for सिकता- ) — $^{c}$) K1 2 परं ( for पुर- ). — $^{d}$) K2 कृतमेवम् ( for कृतास्पदम् ).

26 $^{a}$) Ñ3 ( marg. as in text ) B1 3 Ds D5, 6 -संपातं, V1 संप्रीतं ( for -सवीतं ) — G1 reads $26^{d}$–$27^{b}$ for the first time after the first occurrence of $22^{c}$ — $^{d}$) V2 G2 सेवितं ( for शोभितं )

27 For the repetition in G1, cf v l 26. — $^{a}$) T1-3 G1 ( both times ). 3-5 M यत्र ( for तत्र ) — $^{b}$) G1 ( first time ) पुरतो ( for पर्वतो ) — $^{c}$) K1, 2 D3 मन्दरोदग्रशिखरः — $^{d}$) Ñ3 ( marg. as in text ) Ds T2 G2 सर्वतो हि ; D3 5 सर्वतोऽति- ; D4 पर्वतोऽति- , M4 सहितो हि ( for सर्वतोऽभि- ). D1 पर्वतो भुवि राजते .

28 $^{a}$) D2 T1 G3 5 M यत्र ( for तत्र ). T2 3 G1, 4 एकलव्यस्य संवासो — $^{c}$) K3 4 Ñ2 V3 B2 Dn D1 2 ( *sup lin.* ) 3-6 T4 G2 3 M4 प्रभूत- ( for बभूव ) — $^{d}$) T4 -विभूषित ( for -समाकुल ) T2 3 G4 सर्वर्तुकुसुमाकुलः

29 $^{b}$) K2 तत्र ; V2 तेन ( for तस्य ) V2 राज्ञा ( for राज्ञः ) T1-3 G3 4 M सुनिर्वृता , T4 °श्रिता ( for °र्मिता ). — K4 om $29^{c}$–$32^{d}$ — $^{d}$) K2 स्वायत्ता चामरोपमा ; Ñ2 T1 °ताष्टापदोत्तमा .

30 K4 om. 30 ( cf v l 29 ). K1 reads $30^{a}$–$31^{b}$ on marg. — $^{a}$) K3 B Dn Ds D2, 6 T1 4 G3 केशवेन ( for °वस्य ) M1-3 तात ( for तत्र ). Ñ3 V1 केशवेन मनस्तत्र . — $^{b}$) Dn1 पुर्यर्था ; D3 °र्थं ( for °र्थे ) Ñ1 Ds G2 ऽभि- ( for वि- ). T1 2 G1, 3, 4 M पुर्याश्चैव नि( T1 M1-3 °श्चाभिनि )वेशने , T3 पुर्यर्थे विनिवेशने ; G5 पुर्याश्चैवाभिवेशने — $^{c}$) V3 निवासं ( for निवेशं ) — $^{d}$) Ś1 रोचयन्ते

31 K4 om 31 ( cf v. l 29 ). Ś1 om $31^{ab}$. — $^{a}$) B3 व्यक्त- ( for रक्त- ) Ñ1 2 B3 T2 G1, 3 सूर्य- ( for -सूर्ये ). — After $31^{ab}$, T1-3 G1 3-5 M4 ins

964* निवेशाय मतिं चक्रु कृष्णस्यानुमते स्थिताः ।

— $^{c}$) D2 सगोपालाश् ; T4 सेनावासांश् ( for °पालाश् ). Ś1 मोदन्तः ; T2 G1 4 वै चक्रुः ( for संचक्रुः ) — $^{d}$) K1, 2 Ñ3 T4 G2 -निवेशने ( for °शनम् ).

32 K4 om 32 ( cf v. l 29 ). — $^{a}$) T2 G1, 3-5 M4 सुखाय ( for ध्रुवाय ) — $^{b}$) T4 तत्र ( for सह ). Ñ2 केशवो यादवै सह — $^{c}$) K3 Ñ1 Dn2 D1 5 T1 G3 M3 देशं ( for देशे ) V1 2 B3 D2 ( marg as in text ). 3 T2 G4 -निवासाय ( for -निवेशाय ). Ñ2 V3 T3 G5 M4 देशं पुरनिवासाय . — $^{d}$) Ñ1 भुवि ( for विभुः ). V3 स यदुप्रवरेरितः .

अप्राप्त एव नगरं पित्रा ते मृदितो रणे ।
अयं देवसमूहस्य भयदस्ते पिता रणे ॥ २६

उषोवाच ।

एवं संदूषिता साध्वी कथं जीवितुमुत्सहे ।
पितरं किं नु वक्ष्यामि देवशत्रुमरिंदमम् ॥ २७
एवं संदूषणकरी वंशस्यास्य महौजसः ।
श्रेयो हि मरणं मन्ये न मे श्रेयोऽद्य जीवितम् ॥ २८
कथमेवं कृता नाम कन्या जीवितुमुत्सहे ।
कुलोपक्रोशनकरी कुलाङ्गारा निराश्रया ।
जीवितुं स्पृहयेन्नारी साध्वीनामग्रतः स्थिता ॥ २९
इत्येवं बाष्पपूर्णाक्षी सखीजनवृता तदा ।
विललाप चिरं कालमुषा कमललोचना ॥ ३०
अनाथवत्तां रुदतीं सख्यः सर्वा विचेतसः ।
ऊचुरश्रुपरीताक्ष्य उषां सर्वाः समागताः ॥ ३१
दुष्टेन मनसा देवि शुभं वा यदि वाशुभम् ।
क्रियते न च ते सुभ्रु कच्चिद्दुष्टं मनस्तव ॥ ३२

---

25 $^{c}$) Ś1 मा (for न) D4 (marg as in text) सर्गेषु (for वामेषु) — $^{d}$) T1 2 G M वराङ्गने (for °नने)

26 $^{a}$) K1 Ds1 असत्तद्, T4 अपकृद् (for अस°) Ś1 -देवश्च (for सहित-) T1 2 G2 3 M1 असकृद्देवि संयात- — $^{c}$) Ś1 अप्राप्तम् (for °प्त) D2 च स्व- (for एव) D4 अप्राप्तोपवनागारः — $^{d}$) D4 विजितो, D5 मर्दितो (for मृदितो) — After 26$^{cd}$, D6 T1 G1 2 4 5 M G(ed) ins

1169* ऐरावत स मृदितो गदया चास्य भामिनि ।
निराशो जीविते सोऽभूद्वज्रपाणि सहामरैः ॥

[(L 2) D6 जीविताशो (for °ते सो) ]

— T2 G3 om (hapl) 26$^{ef}$ — $^{e}$) Cal ed समूहेषु (for °हस्य) — $^{f}$) Ś1 [अ]नघ; K2 V3 B Ds D4 6 सखि; Ñ1 तव (for रणे) K1 3 4 Ñ2 V1. 2 D1–3 5 T4 G1 भयदश्च पिता तव, Dn भयं दत्ते पिता तव — After 26, N (except Ś1) T4 G5 ins

1170* महासुरवरः श्रीमान्बले पुत्रो महाबलः ॥
एव साभिहिता सख्या बाणपुत्री यशस्विनी ।
स्वप्नरूपं यथा दृष्टं न्यवेदयदनिन्दिता ॥

[(L 1) K2 दैत्यानामधिप श्रीमान् (for $^{a}$). —(L 2) D5 साक्षाद् (for सख्या) D4 एवं सख्या तु सा प्रोक्ता (for $^{a}$). —(L 3) Ñ1 2 V1 2 B Dn स्वप्ने रूपं; D4 यत्स्वरूप (for स्वप्न°) G5 रूप (for दृष्ट) K2 Ñ1 V3 B D6 तथा सर्वं न्यवेदयत् (for $^{b}$) ]

27 T2 om the ref — $^{a}$) Ś1 (*sup lin*) Bom. Poona Cal eds. G(ed) सधर्षिता, T4 damaged (for संदूषिता) — $^{c}$) D3 किमु (for किं नु)

28 $^{a}$) Dn हि; D4 सु- (for सं-) M3 -दूषित- (for दूषण-) — $^{b}$) D3 कुलस्य (for वंशस्य) — $^{c}$) G3 मरणे (for °णं). K Ñ1 2 V B D श्रेयो (for मन्ये) — $^{d}$) Ñ2 V2 D3 T1 2 G1–4 हि (for ऽद्य). Ś1 न मे श्रेयोऽस्ति जीवितुम्. — After 28, K1 3 4 Ñ2 V B D T4 G1 2 5 G(ed.) ins.

1171* ईप्सितो वा यथा कोऽपि पुरुषोऽधिगतो हि मे ।
जाग्रतीव यथाहं स्यामवस्थेयं कृता मम ।
निशायां जाग्रती वाहं नीता केन दशामिमाम् ॥

[(L 1) V3 B Ds D6 कश्चित् (for कोऽपि) — V3 B Ds D6 T4 G1. 2 5 om line 2 Ñ2 D3 transp line 2 and line 3 —(L 2) D3 यथैवाहम्, V1. 2 निशाया हि (V2 तु), G(ed) यथा चाह (for यथाहं स्याम्). D2 स्वप्ने पुसावमुक्ताहम् (for $^{a}$) V1 2 om. lines 2$^{b}$–3$^{a}$ Bom. Poona eds [ए]वं (for [इ]य). — K1 3 4 D1 3–5 om. line 3 —(L 3) G1 5 जानती (for जाग्रती) D2 जाग्रतीव निशाया हि (for $^{a}$) G2 किं नु (for केन). ]

29 $^{a}$) Ś1 विधा (for कृता) — $^{b}$) K4 उत्सहेत् (for °हे) — $^{c}$) T1 2 G1. 3 4 M कुलोपक्रोशकरणी. — $^{d}$) K Ñ2 V1 2 B Dn Ds D1 2 4. 5 T1 4 G3 कुलाङ्गारी; D3 कुलमारी (for कुलाङ्गारा). — $^{e}$) K2–4 Ñ2 V B2. 3 D2–4. 6 T2 G2 M1–3 जीवितं (for °तुं). D1–5 न स्पृहेत् (by transp.).

30 $^{b}$) Cal ed -गण- (for -जन-). K2 T1. 2 G -समावृता (for वृता तदा) M1–3 सखीगणसमावृता.

31 $^{c}$) D3 जगुरम्बु- (for ऊचुरश्रु-). K2 -परीताङ्ग्य; Bom. Poona eds G(ed) °ताक्षी (for °ताक्ष्य). — $^{d}$) D4 समावृता (for °गता)

32 $^{a}$) Ñ1 चिन्तितं, T1 2 G1 3–5 M उषे ते (for दुष्टेन). — $^{b}$) K2 [अ]सुखम् (for [अ]शुभम्) — $^{c}$) K2 Ñ2 V3 B2 3 D6 T4 G1 2 तद्भवेत्; G5 न भवेत् (for न च ते) Ñ1 क्रियते तच्छ्रुतं तेन — $^{d}$) K2 न प्र-, Ñ1 V3 B3 T4 G1 न च; D6 नष्ट-, T1 G3 M4 किंचिद् (for कच्चित्). K4 Ñ2 V1 B1 Ds2 D2 शुभे (for तव) Ś1 कच्चिद्दुष्टमनुष्यत; B2 न च दुष्टं मनः शुभे; Dn1 कच्चिद्दुष्ट मन शुभे, G2 न दुष्टमनसस्तव. — After 32, N (except Ś1) T4 G1, 2, 5 ins.;

स्वप्नयोगेन कल्याणि व्रतलोपो न विद्यते ।
व्यभिचारेण ते देवि नास्ति कश्चिद्व्यतिक्रमः ॥ ३३
मनसा चैव वाचा च कर्मणा च विशेषतः ।
दुष्टा या त्रिभिरेतैस्तु पापा सा प्रोच्यते भुवि ॥ ३४
न च ते दुष्यते भीरु मनः प्रजवितं सदा ।
कथं त्वं दोषदुष्टा वै नियता ब्रह्मचारिणी ॥ ३५
यदि सुप्ता सती साध्वी शुद्धभावा मनस्विनी ।
इमामवस्थां नीता त्वं नैव धर्मो विलुप्यते ॥ ३६
यस्या दुष्टं मनः पूर्वं कर्मणा चोपपादितम् ।
तामाहुरसतीं नाम सती त्वमसि भामिनि ॥ ३७
कुलजा रूपसंपन्ना नियता ब्रह्मचारिणी ।
इमामवस्थां नीतासि कालो हि दुरतिक्रमः ॥ ३८
इत्येवमुक्तां रुदतीं बाष्पेणावृतलोचनाम् ।
कुम्भाण्डदुहिता वाक्यं परमं त्विदमब्रवीत् ॥ ३९
उषे यदुक्ता देव्यासि भर्तारं ध्यायती तदा ।
समीपे देवदेवस्य स्मर भामिनि तद्वचः ॥ ४०
द्वादश्यां शुक्लपक्षस्य वैशाखे मासि यो निशि ।
हर्म्ये शयानां रुदतीं स्त्रीभावमुपनेष्यति ॥ ४१
भविता स हि ते भर्ता शूरः शत्रुनिबर्हणः ।
इत्युवाच ततो हृष्टा देवी तव मनोगतम् ॥ ४२
न हि तद्वचनं मिथ्या पार्वत्या यदुदाहृतम् ।
तत्त्वं किमिदमत्यर्थं रोदिषीन्दुनिभानने ॥ ४३　C 9956 B 2 118 31 P 2 118 31

1172* प्रसभं देवि संयोगाद्यदि भुक्तासि भामिनि ।

[ Bom Poona eds G(ed) दैव- (for देवि) $D_6$ $G_4$ सुप्ता (for भुक्ता) ]

33 $^{b}$) $T_{1\ 2}$ वृत्त- (for व्रत-) $K_1$ -दोषो (for -लोपो) — $D_3$ om $33^{d}$ — After 33, N (except $Ś_1$) $T_4$ $G_{1\ 2,\ 5}$ ins

1173* न च स्वप्नकृतो दोषो मर्त्यलोकेऽस्ति सुन्दरि ।
एवं विप्रर्षयो देवि धर्मज्ञा कथयन्ति वै ॥

[ $D_3$ om lines $1^{a}$–$2^{a}$ — (L 1) $D_2$ तव (for न च) $K_3$ $D_2$ स्वप्ने, $Ñ_1$ सुप्त- (for स्वप्न-) — (L 2) $K_2$ $V_3$ B $D_6$ $T_4$ विप्रर्षभा (for °यो) $G_{1\ 5}$ एव हि विप्रऋषभा (for $^{a}$) $Ñ_2$ प्रवदन्ति (for कथयन्ति) ]

34 $^{a}$) $D_4$ वचसा (for वाचा च) — $^{c}$) $K_2$ दुष्टा या त्रिप्रकारेण — $^{d}$) $Ś_1$ सा दुष्टा, $D_4$ पापास्ता (for पापा सा) $K_2$ $V_3$ B Ds $D_{2\ 3\ 6}$ $T_4$ $G_{2\ 5}$ M बुधैः; $T_1$ $G_{1\ 3\ 4}$ त्रिभिः, (for भुवि) $T_2$ पापा सप्रोच्यते त्रिभि

35 $^{a}$) $K_{1\ 3\ 4}$ $Ñ_{1\ 2}$ $V_{1\ 2}$ B D $T_{1\ 4}$ $G_{2,\ 3\ 5}$ दृश्यते, some Mss दूष्यते (for दु°) — $^{b}$) $K_{1\ 4}$ Dn $D_{3\ 6}$ $T_4$ प्रचलित, $K_2$ $D_2$ प्रियमिदं (for प्रजवितं). $T_{1\ 2}$ $G_{2\ 3}$ M मनो न चलितं क्वचित्, $G_{1\ 4\ 5}$ मन प्रचलितं क्वचित् — $^{c}$) $K_2$ नु, $G_3$ च (for त्वं) $K_{1\ 3\ 4}$ $Ñ_1$ $V_{1\ 2}$ Dn $D_{1\ 4,\ 5}$ $T_4$ -संदुष्टा; $K_2$ -दुष्टा त्वं, $Ñ_2$ $B_1$ Ds $D_{2\ 3}$ -दुष्टासि, $G_2$ -धर्मज्ञा (for -दुष्टा वै) $Ś_1$ कथं त्वं दुष्टदोषा वै — $^{d}$) $D_3$ व्रत- (for ब्रह्म-)

36 $^{a}$) $T_1$ $G_3$ $M_{1-3}$ यदा, $T_2$ यथा (for यदि) $G_1$ सुता (for सती) — $^{c}$) $D_5$ प्राप्ता (for नीता). S (except $T_4$ $G_5$) [अ]सि (for त्वं). — $^{d}$) $Ś_1$ $G_4$ कालो हि दुरतिक्रमः (= $38^{d}$)

37 $^{a}$) $Ś_1$ $T_2$ यस्य, $K_1$ $D_4$ $G_4$ यदा (for यस्या).

38 $^{b}$) $D_3$ व्रत- (for ब्रह्म-) $K_2$ $Ñ_2$ $V_3$ B $D_6$ सर्वैः समुदिता गुणै — $D_2$ om $38^{cd}$ — $^{c}$) $Ś_1$ त्वं (for [अ]सि)

39 $^{a}$) $K_{1\ 2}$ $V_3$ $B_3$ Dn $D_{4\ 6}$ $G_2$ उक्त्वा (for उक्ता). $Ś_1$ इत्येवमुक्ता रुदती — $^{b}$) $Ś_1$ [आ]कुल- (for [आ]वृत-). $V_3$ $B_3$ $D_6$ बाष्पेणाकुलितेक्षणाम्, $T_{1\ 2}$ $G_{1\ 4\ 5}$ $M_{1\ 3}$ बाष्पव्याकुललोचनाम् — $D_4$ om $39^{d}$ — $^{d}$) $G_2$ वरं त्विदमथाब्रवीत् — After 39, N (except $Ś_1$) $T_4$ $G_{1\ 2\ 5}$ ins.

1174* त्यज शोक विशालाक्षि अपापा त्वं वरानने ।
स्मृत मे यदिदं वाक्य याथातथ्येन तच्छृणु ॥

[ $D_4$ om lines $1^{a}$–$2^{a}$ — (L 1) $K_2$ विपापा (for अ°). — (L 2) $Ñ_1$ $G_1$ श्रुत (for स्मृत) $K_2$ $Ñ_1$ $B_3$ $D_6$ कार्यं (for वाक्य) $K_2$ $Ñ_2$ $V_2$ मे (for तच्) ]

40 $^{a}$) $Ś_1$ $G_5$ उक्तं (for उक्ता) $Ñ_1$ वचनं (for देव्यासि). — $^{b}$) $D_3$ ध्यायिनी (for ध्यायती) $K_4$ $B_1$ सदा, $V_3$ Dn सती (for तदा) — $^{d}$) $V_1$ मानिनि (for भामिनि)

41 $^{a}$) $K_1$ -पक्षे तु (for -पक्षस्य) — $^{b}$) $V_2$ भाविनि (for यो निशि) — $G_3$ om $41^{c}$–$43^{b}$ — $^{c}$) $K_1$ $D_4$ स्त्रीभावं (for रुदतीं) — $^{d}$) $K_1$ $D_4$ य पुमान्, $Ñ_1$ स्त्रीधर्मम् (for स्त्रीभावम्) Bom Poona eds G(ed) स्त्रीत्वं समुपनेष्यति.

42 $G_3$ om 42 (cf v l 41) — $^{c}$) $K_2$ भविष्यति स ते भर्ता — $^{c}$) $K_1$ $Ñ_2$ V B Ds $D_{1\ 2\ 5\ 6}$ $T_4$ $G_{1\ 2}$ वचो (for ततो) $T_{1\ 2}$ $G_{4\ 5}$ $M_4$ दृष्ट्वा; $M_{1-3}$ ज्ञात्वा (for हृष्टा) — $^{d}$) $K_{1\ 3\ 4}$ $Ñ_2$ $V_{1\ 2}$ $B_{1,\ 2}$ D $T_4$ मनोनुगम्, $V_3$ °रथम्; $B_3$ °नुगा (for °गतम्)

इत्येवमुक्त्वा वचनं स्मृत्वा देवीवचस्ततः ।
अभवन्नष्टशोका सा बाणपुत्री शुभेक्षणा ॥ ४४

उषोवाच ।

स्मरामि भामिनि वचो देव्याः क्रीडागते भवे ।
यथोक्तं सर्वमखिलं प्राप्तं हर्म्यतले मया ॥ ४५
भर्ता तु मम यद्येष लोकनाथस्य भार्यया ।
व्यादिष्टः स कथं ज्ञेयस्तत्र कार्यं विधीयताम् ॥ ४६
इत्येवमुक्ते वचने कुम्भाण्डदुहिता पुनः ।
व्याजहार यथान्यायमर्थतत्त्वविशारदा ॥ ४७
न हि तस्य कुलं देवि न कीर्तिर्नापि पौरुषम् ।
कश्चिज्जानाति तत्त्वेन किमिदं त्वं विहन्यसे ॥ ४८
अदृष्टश्चाश्रुतश्चैव दृष्टः स्वप्ने त्वयानघे ।
कथं ज्ञेयो भवेद्भीरु सोऽस्माभी रतितस्करः ॥ ४९
येन त्वमसितापाङ्गे मत्तकाशिनि विक्रमात् ।
रुदती प्रसभं भुक्त्वा प्रविश्यान्तःपुरं सखि ॥ ५०
न ह्ययं प्राकृतः कश्चिद्यः प्रविष्टः प्रसह्य नः ।
नगरं लोकविख्यातमेकः शत्रुनिबर्हणः ॥ ५१
आदित्या वसवो रुद्रा अश्विनौ च महौजसौ ।
न शक्ताः शोणितपुरं प्रवेष्टुं भीमविक्रमाः ॥ ५२
सोऽयमेतैः शतगुणो विशिष्टः शत्रुसूदनः ।
प्रविष्टः शोणितपुरं बाणमाक्रम्य मूर्धनि ॥ ५३
यस्या नैवंविधो भर्ता भवेद्युद्धविशारदः ।
कस्तस्या जीवितेनार्थो भोगैर्वा स्याच्छुभेक्षणे ॥ ५४
धन्यास्यनुगृहीतासि यस्यास्ते पतिरीदृशः ।

---

43 G3 om $43^{ab}$ (cf v l 41) — b) D3 समुदाहृतम् (for यदु°) — c) Ś1 ऊर्ध्वं, K2 3 Ñ2 V3 B3 D1 2 5 6 G4 सा त्वं (for तत्त्वं) K2 Ñ2 V3 B3 D6 किमर्थम् (for किमिदम्) — d) V1 -वरानने (for निभा°)

44 a) K1 3 4 Ñ1 2 V1 2 B1 2 D (except D6) T4 एवमुक्त्वा तु वचनं, B3 इत्येवमुक्ते वचने, Bom. Poona eds G(ed) एवमुक्त्वा तया बाला — b) T1 2 G1 श्रुत्वा (for स्मृत्वा) Ś1 स्वयम्, K2 Ñ2 B1 3 Dn Ds1 D2 3 6 T4 च तत्, B2 तु तत्, T1 2 G2 4 5 तदा, M2–4 चिरम् (for तत) — d) B2 Ds यशस्विनी (for शुभेक्षणा) K1 D4 बाणपुत्र्यम्बुजेक्षणा — After 44, Ñ2 V3 ins

1175* स्मृत्वा तु वचनं देव्याः प्रत्युवाच सखी तदा ।

45 b) Ś1 प्रक्रीडिते, Dn1 क्रीडागतं (for °ते) T1 2 G हरे (for भवे)

46 a) Dn स हि, D3 4 यो हि (for यदि). K2 भर्ता च समयश्चैव — c) K2 देव्यादिष्ट, D2 4 आदिष्ट स (for व्यादिष्ट स)

47 b) Ñ1 तत. (for पुन.) — d) D3 अर्थान्तर- (for अर्थतत्त्व)

48 b) K1 D2 4 कीर्तितं, Ds D3 5 न कीर्तिं (for न कीर्तिर्) — d) K2 D1 5 एवं (for इदं) Ś1 K3 Dn D1 4 (marg) विमुह्यसे; K1 D4 हि मन्यसे, D5 न मुह्यसे, G1. 5 विभाव्यसे (for विहन्यसे).

49 b) Dn G(ed) च मे (for त्वया). N (except Ś1) T2, 4 G1, 4, 5 शुभे (for [अ]नघे).

50 a) K1 3 4 Ñ1 2 B Dn Ds D2–4 6 G3 4 M4 येन त्वमसितापाङ्गि — b) Ś1 विक्रमे (for °मात्) — T3 om. $50^{cd}$ — d) T1 G1–3 5 M महत् (for सखि).

51 a) K Ñ1 2 V1 2 B D T2 4 G1 [अ]सौ (for [अ]यं) — T2 om $51^{b}$-$53^{a}$ — b) Ś1 K2 D2 ते (for नः) D3 यः प्रसह्य विवेश ह — T4 om (hapl) $51^{c}$-$53^{b}$ — c) K2 -विख्यात (for °तम्) — d) Ś1 D3 एष (for एकः)

52 T2, 4 om 52 (cf. v l 51) — b) Ś1 K1, 2 Ñ2 D4 महाबलौ (for महौजसौ) — D5 om (hapl) $52^{d}$–$53^{c}$. — After 52, D6 T1 G1 3–5 M1–3 ins

1176* पुरी शासति बाणे तु जित्वा शक्रं शचीपतिम् ।
[D6 पुरं शासति बाणेऽस्मिन् (for a) G1 4 5 शत्रुं (for शक्रं).]

53 T2 om $53^{a}$, T4 om $53^{ab}$ (for both, cf. v l. 51) D5 om $53^{abc}$ (cf v l. 52). — a) K1, 3, 4 Ñ1 2 V2, 3 B Dn1 Ds D1 2 5 6 T1 G1, 3 M1 3 शतगुणैर्, K2 समगुणो, M2 शतगुणं (for °गुणो) — b) N (except Ś1) चारि- (for शत्रु-) — d) Ś1 बाणेन (for बाणम्) T1 2 G3 4 M2 3 बुद्धिमान् (for मूर्धनि) — After 53, S (except T4, T3 missing) ins

1177* को नु नाम जगत्यस्मिन्मनः कर्तुं महासुरे ।
शासत्येतत्पुरं देवि मनुष्यो जीवितस्पृहः ।
प्रविशेत्तमवज्ञाय बाणं किं वापि धर्षणम् ॥

54 b) K3 V3 भुवि (for भवेद्). — d) Ś1 भोगे वा स्याच्छुभानने, T1 Bom Poona eds G(ed.) भोगैर्वास्यम्बुजेक्षणे.

प्राप्तो देव्याः प्रसादेन पार्वत्या मत्तकाशिनि ॥ ५५
इदं तु ते कार्यतमं शृणु त्वं वै मयेरितम् ।
विज्ञेयो यस्य पुत्रस्तु यन्नामा यत्कुलश्च सः ॥ ५६
इत्येवमुक्ते वचने तत्रोषा काममोहिता ।
उवाच कुम्भाण्डसुतां कथं ज्ञास्यामहे सखि ॥ ५७
ततः सा चिन्तयाविष्टा वचनं प्राह दुर्वचः ।
चित्रलेखामप्सरसं प्रणयार्त्ता सखीं सखी ॥ ५८
परमं शृणु मे वाक्यं यत्त्वां वक्ष्यामि भामिनि ।
भर्तारं यदि मेऽद्य त्वं नानयिष्यसि मत्प्रियम् ॥ ५९
कान्तं पद्मपलाशाक्षं मत्तमातङ्गविक्रमम् ।
त्यक्ष्याम्यहं प्रियान्प्राणांस्ततः कमललोचने ॥ ६०
चित्रलेखाब्रवीद्वाक्यमुषां तां हसती शनैः । C 9979 B 2 118 55 P 2 118 55

55 $^{d}$) K Ñ1 2 V1 B1 2 (marg) Ds D1–6 कन्दर्पसमविक्रम, V2 3 B2 3 Dn T4 कन्दर्पसमविग्रह, G5 कन्दर्पस्य च विग्रहम्

56 Before 56, Ś1 ins उषोवाच — $^{a}$) Ś1 कार्यमिदं (for °तम) — $^{b}$) Ś1 G5 यद्वै, K1 3 B2 Dn D1–5 T1 G2 3 M1 त्वं तन्, K4 त्वं च, Ñ2 Ds त्वं यन्, V3 B3 D6 T4 तद्वै (for त्वं वै) K2 शृणुयास्तन्मयेरितम्, V2 शृणु वै यन्मयोदितम् — $^{c}$) D2 ज्ञेयोऽयं (for विज्ञेयो). Ds ऽसौ (for तु) — $^{d}$) B3 य, D2 च, G2 न (for स)

57 $^{b}$) K1 D4 तथा सा, V3 तथोषा (for तत्रोषा) — After 57$^{ab}$, T1 2 G M ins

1178* तच्छरैश्च समाविद्धा भ्रान्तलोचनविक्लवा ।
दशामन्त्यां समास्थाय निद्रासुखविमोहिता ॥
[(L 2) M3 -विबोधिता (for -विमोहिता)]

— $^{c}$) Ñ1 B1 (marg) उवाच वचनं रामां — $^{d}$) K1 3 4 Ñ1 2 V B D (except D2) T1 4 G1–3 5 M3 ज्ञास्याम्यहं (for °महे) — After 57, N (except Ś1) T1 G2 5 ins

1179* त्वमेव चिन्तय सखि नोत्तरं प्रतिभाति मे ।
स्वकार्ये मुह्यते लोको यथा जीवं लभाम्यहम् ॥
उषाया वचनं श्रुत्वा रामा वाक्यमिदं पुनः ।
उवाच रुदतीं चैव कुभाण्डतनया सखीम् ॥
कुशला ते विशालाक्षि सर्वथा सखिविग्रहे । [5]
अप्सरा चित्रलेखा वै क्षिप्रं विज्ञाप्यतां सखि ॥
अस्याः सर्वमशेषेण त्रैलोक्यं विदितं सदा ॥
एवमुक्ता तदैवोषा हर्षेणागतविस्मया ।
तामप्सरसमानाय्य चित्रलेखां सखीं प्रियाम् ।
कृताञ्जलिपुटा दीना उषा वचनमब्रवीत् ॥ [10]

[G5 om lines 1–6. — (L 2) K2 Ñ1 V2. 3 B Ds D6 सर्वो (for लोको) B1 लभे हि (for लभामि) — (L 3) K2 दीन (for रामा) — (L 4) D1 चोषां, T4 G2 उषा (for चैव) K4 Ñ1 om lines 4$^{b}$–5$^{a}$. K3 V2 Dn D1 2 5 -दुहिता (for तनया) T4 सखी (for सखीम्) — D2 om line 5 — (L 5) D3 सफला (for कुशला) K3 D1 3–5 त्व, Ds2 मे (for ते) Ñ2 उवाच शिल्पकुशला (for $^{a}$) Ñ2 सर्वसधिषु विग्रहे (for $^{b}$). — (L 6) K2 V3 B2 D6 असौ; G2 सखे (for सखि) — (L 7) V3 B1 3 Ds यस्या (for अस्या) V3 B3 D6 अशेष वै, T4 G2 3 इदं विश्वं (for अशेषेण) T4 ते श्रुत (for विदित) V3 B3 D6 त्विदम् (for सदा) G2 5 विदित तच्छुचिस्मिते (for $^{b}$) — (L 8) V2 -विह्वला (for -विस्मया) K2 हर्षोत्फुल्ललोचना (for $^{b}$) — (L 9) Ñ1 आभाष्य (for आनाय्य) K3 तामाह त्वरिता तत्र (for $^{a}$) V1 2 सखीं प्रति, G2 5 प्रिया सखीम् (by transp) — K2 Ñ1 om line 10 Before line 10, Ñ2 ins वैशंपायन उवाच — (L 10) G5 वचन चेदमब्रवीत् (for $^{b}$) ]

B Ds cont

1180* सा तच्छ्रुत्वा तु वचनमुषाया परिकीर्तितम् ।
आश्वासयामास सखी बाणपुत्रीं यशस्विनीम् ॥

58 K2 om (hapl) 58 K1 3 4 Ñ3 V Dn D1–3 5 6 T4 G2 om 58$^{ab}$ Ñ2 reads 58$^{ab}$ after 60 — $^{a}$) Ñ1. 2 B Ds D4 तत सा विस्मयाविष्टा — $^{b}$) Ñ1 B3 Ds D4 T1 2 4 G1 3–5 M1 3 दुर्वचम् (for °च) Ñ2 B1 3 प्राब्रवीद्दुर्वचं (Ñ2 °दुत्तरं) वच: — $^{d}$) N (except Ś1, K2 om) G2 सखीमिदम् (K3 °मिव) (for सखीं सखी)

59 T1 om (hapl) 59$^{a}$–62$^{b}$ Before 59, D6 G2 ins उषा G2 reads 59$^{ab}$ twice — $^{a}$) G1 वाक्यं मे (by transp) — $^{d}$) K2 सुप्रियम्, D3 चेत्प्रि° (for मत्प्रि°)

60 T1 om 60 (cf v l 59) Ś1 om 60$^{ab}$. — $^{a}$) G3 पद्मपत्र-, M3 प्रियं पद्म (for कान्तं पद्म) T2 G1 M1 2 4 पद्मपत्रविशालाक्षं — $^{b}$) K1 D4 -गामिनम् (for -विक्रमम्). — $^{c}$) Ś1 K1 3 4 V1 2 D1 2 4 5 T4 G2 ततः (for प्रियान्). D3 त्यक्ष्याम्यद्य तत प्राणम् — $^{d}$) K1 3 4 V1 2 D (except D6) अचिरात्तु (D1 °त्तु सु-, D3 °च्च सु) मध्यमे, T4 G2 M4 नात्र कार्या विचारणा — After 60, Ñ2 reads 58$^{ab}$.

61 T1 om 61 (cf v l 59) Before 61, V2 ins वैशंपायनः — $^{b}$) N (except Ś1 K2) T4 G1 3 5 M2 हर्षयती (for तां हसती) — $^{c}$) Ś1 शक्यम् (for शक्यते). T2 ऽस्मासु (for °भिर्) — $^{d}$) K1 कर्तुं, V3 दातुं, D5. 6 ज्ञातुं; T2 वक्तुं (for वेत्तुं) — After 61, N (except Ś1) T4 G2. 5 ins.:

नैषोऽर्थः शक्यतेऽस्माभिर्वेत्तुं भामिनि सुव्रते ॥ ६१
किं तु शक्यमिदं कार्यं बुद्धिपूर्वं मया सखि ।
प्राप्तुं तच्छृणु मे वाक्यं यथा काममवाप्स्यसि ॥ ६२
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
ये विशिष्टाः प्रभावेन रूपेणाभिजनेन च ॥ ६३
यथाप्रधानांस्तान्सर्वानालिखिष्याम्यहं सखि ।
मनुष्यलोके ये चापि प्रवरा लोकविश्रुताः ॥ ६४
सप्तरात्रेण ते भीरु दर्शयिष्यामि तानहम् ।
ततो विज्ञाय पट्टस्थं भर्तारं प्रतिलप्स्यसे ॥ ६५
इत्युक्त्वा सप्तरात्रेण कृत्वालेख्यगतांस्तु तान् ।
चित्रपट्टगतान्मुख्यानानयामास शोभना ॥ ६६
ततः प्रास्तीर्य पट्टं सा चित्रलेखा स्वयंकृतम् ।
उषाया दर्शयामास सखीनां च विशेषतः ॥ ६७
एते देवेषु ये मुख्यास्तथा दानववंशजाः ।

---

1181* न कुलेन न वर्णेन न शीलेन न रूपतः ।
न देशतश्च विज्ञातः स हि चोरो मया सखि ॥

[ ( L 1 ) D3 T4 G2 5 शीलेन ( for वर्णेन ) Ñ2 कुलेन न च वर्णेन ( for $^{a}$ ). D3 T4 G2 वर्णेन ( for शीलेन ). K2 स्व- ( for न ) G5 न रूपेण न वर्णेत ( for $^{b}$ ) ]

62 T1 om $62^{ab}$ ( cf v l 59 ). Ñ2 om ( hapl ) $62^{a}$–$64^{b}$ G1 om 62 — $^{a}$ ) K1. 3 V1 3 B1 3 Dn Ds D1 3 यथा कर्तुं ; K2 V2 D2 इदं कर्तुं , K4 B2 D5 G4 मया कर्तुं , T4 om , M4 यथा कार्यं ( for इदं कार्यं ). Ñ1 किं त्वशक्यमिद कर्तुं . — $^{b}$ ) K4 यथा ( for मया ) — B1 om. ( hapl ) $62^{c}$–$64^{b}$ — $^{c}$ ) Ś1 किं तु ( for प्राप्तुं ) — After $62^{abc}$, D1 5 ins

1182* उषां हर्षयती शनैः ।
यथा च शक्यतेऽस्माभिर्

— D1 reads $62^{d}$ twice. — $^{d}$ ) T1 2 G3 M फलम् ( for कामम् ). Ś1 यथा कार्यमिदं शुभे , K2 उषे हर्षपरायणा .

63 Ñ2 B1 om 63 ( cf v l 62 ) — $^{c}$ ) Ś1 विशिष्टा ये ( by transp ) ; K4 ये वै सृष्टाः , M1–3 यो विशिष्टः . — $^{d}$ ) — $^{d}$ ) D3 विभवेन ( for [अ]भिजनेन )

64 Ñ2 B1 om $64^{ab}$ ( cf v l 62 ) — $^{a}$ ) K1 3 4 Dn D5 -प्रधानं तांस् , Ñ1 V1. 2 B2 Ds D2 4 G2. 5 -प्रधानत ; D1 G1. 4 -प्रभाव तांस् , D3 -प्रभावत ( for प्रधानास्तान् ). V3 B3 D6 सर्वांस्तान् ( by transp ) K2 यथाप्रधानं सर्वांस्तान् — $^{b}$ ) K2 अभिलेक्ष्यामि ; D3 विलिखिष्यामि ( for आलिखि° ) — $^{d}$ ) B1 प्रबला ( for प्रवरा )

65 $^{a}$ ) T1. 2 G1 3. 4 M1–3 तान्सर्वान् ( for ते भीरु ). — $^{b}$ ) Ś1 K3 Ñ1 Dn D3 [अ]हं प्रियम् ; K1 D4 तानिह ; T1. 2 G1 3–5 M1–3 [अ]हं पटे , M4 ते पटे ( for तानहम् ). — $^{c}$ ) Ś1 सत्यात्त्वां , K1 D2 सदृशं , K2 चित्रस्थं , V3 D3 पटस्थं ; Cn पादस्थं ( for पट्टस्थं ) K4 ततो यदृच्छया ज्ञात्वा ; T1 2 G1. 3–5 M तत. पटस्थं विज्ञाय ❀ Cn पादस्थ चित्रफलकस्थम् । ❀ — $^{d}$ ) Ñ1 Dn1 Ds2 D6 ¢ T1 2 G1–3 M -पत्स्यसे ( for -लप्स्यसे ) — After 65, Ds1 ins. :

1183* न दर्शये यदि सखि तर्हि वह्निमहं विशे ।

Ds1 cont K1 3. 4 Ñ2 V B Dn Ds2 D1–6 T4 G1 2 5 ins after 65 .

1184* सा चित्रलेखया प्रोक्ता उषाहितचिकीर्षया ।
क्रियतामेवमित्याह चित्रलेखा सखीं प्रियाम् ॥
तत कुशलहस्तत्वाद्यथालेख्यं समन्ततः ।

[ Before line 1, Ñ2 ins वैशपायन . — ( L 1 ) V2 सा चित्रलेखा संप्राप्ता ( for $^{a}$ ) K1 Ds D4 प्रिय- ; B1 -हर्ष- ( for -हित- ) G1 उत्पपात चिकीर्षया ( for $^{b}$ ) — ( L. 2 ) B1 सखीं शुभाम् , G1 5 प्रिया सखीम् ( by transp ) — Ds1 om line 3 — ( L 3 ) T4 [आ]लिख्य ( for [आ]लेख्य ). ]

While T1 2 G3 4 M ins after 65 , D6 T4 G1 5 ins. after line 2 of 1184* an addl colophon [ *Adhy. name :* D6 M4 बाणयुद्धम् ; T1 2 G1 3 उषास्वप्न( G3 °सुप्त )दर्शनम् . — *Adhy no* · T1 G3 246 , T2 G1 248 ; T4 216 ; G4 249 ; G5 247 ; M1–3 210 , M4 209 ].

66 Before 66, T1 2 G3 M1–3 ins. वैशंपायन उवाच — $^{b}$ ) Ś1 नृपान् , T1 G3 M अमून् ( for तु तान् ). — $^{c}$ ) T1 2 G1 3–5 M पटे चित्र- ( for चित्रपट्ट ). Ś1 सर्वान् ( for मुख्यान् ).

67 G3 om 67–71. — $^{a}$ ) D3 प्रसार्य ( for प्रास्तीर्य ). Ś1 तं पट्टं , D4 पट्टं त ; T1 2 G1 4 5 M च पट ( for पट्टं सा ). — $^{b}$ ) T2 G1 3–5 M स्वलंकृतम् , T4 G2 कृतं स्वयम् ( for स्वयंकृतम् ). — After $67^{ab}$, T1 2 G1 4 5 M ins. :

1185* अत्युज्वलं महाचित्रं पिङ्गवर्णविभूषितम् ।
[ M पट ( for पिङ्ग- ). ]

68 G3 om 68 ( cf v l 67 ) — $^{a}$ ) V3 ततो ( for एते ). — $^{d}$ ) T2 G1 5 गन्धर्वाणां ( for राक्षसानां ) Ñ2 K1. 3. 4 V1 2 Dn D1–3 5 T4 G2 समन्ततः ( for च सर्वश· ) D4 रक्षसां च समन्तत — After 68, K1 3 4 Ñ2 V B D T4 G1. 2 5 ins

1186* गन्धर्वासुरदैत्यानां ये चान्ये भोगिनः स्मृता· ।

[ D4 गन्धर्वाप्सरसा चैव ; G1 5 राक्षसासुरदैत्याना ( for $^{a}$ ). Ds D3 भोगिना ( for °नः ) V1 सुताः ( for स्मृताः ). V3 B3

किंनरोरगयक्षाणां राक्षसानां च सर्वशः ॥ ६८
मनुष्याणां च सर्वेषां ये विशिष्टतमा नराः ।
तदेतान्पश्य सर्वांस्त्वं यथाभिलिखितान्मया ॥ ६९
यस्ते भर्ता यथारूपो यथाभिलषितः सखि ।
तं त्वं प्रत्यभिजानीहि स्वप्ने यं दृष्टवत्यसि ॥ ७०
ततः क्रमेण सर्वांस्तान्दृष्ट्वा सा मत्तकाशिनी ।
अतीत्य च यदून्सर्वान्ददर्श यदुनन्दनम् ॥ ७१
तत्रानिरुद्धं दृष्ट्वा सा विस्मयोत्फुल्ललोचना ।
अब्रवीच्चित्रलेखां तामयं चोरः स वै सखि ॥ ७२
येनाहं दूषिता पूर्वं स्वप्ने हर्म्यगता सती ।
सोऽयं विज्ञातरूपो मे कुतस्त्यस्तस्करः शुभे ॥ ७३
चित्रलेखे वदस्वैनं तत्त्वतो मम शोभने ।
गुणशीलाभिजनतो नाम किं चास्य भामिनि ॥ ७४

चित्रलेखोवाच ।

अयं त्रैलोक्यनाथस्य नप्ता कृष्णस्य धीमतः ।
भर्ता तव विशालाक्षि प्राद्युम्निर्भीमविक्रमः ॥ ७५

C 9998
B 2 118 72
P 2 118. 72

D5 ये च नागवरात्मजा ( for $^{b}$ ) ]

69 G3 om 69 ( cf v 1 67 ). — $^{a}$ ) Ś1 मानुषाणां ( for मनुष्याणां ) — $^{b}$ ) K2 Ñ1 T2 G1 M -तरा ( for -तमा ) Ś1 G4 भुवि ( for नराः ) T1 ये विशिष्टास्तु दानवा — $^{c}$ ) Dn1 D5 T1 2 4 G1 4 5 M तान्, G2 damaged ( for तद् ) T4 देवान् ( for एतान् ) K1 D4 तु, Ñ2 तान् ( for त्वं ) — $^{d}$ ) Ś1 [अ]भिलषितान्, V2. 3 B3 D6 विलिखितान्; Bom Poona eds G(ed) [ए]व लिखितान् ( for [अ]भिलि° ) T1 2 G1. 4 5 M यथारूपं म( M1 2 °पान्म )या कृतान्

70 G3 om 70 ( cf v 1 67 ) — $^{b}$ ) G2 हि लिखितः ( for [अ]भिलषित ) K Ñ1 2 V B Dn Ds D1 2 5 6 T4 मयाभिलिखितः सखि, Bom Poona eds स मया लिखितः सखि — $^{c}$ ) K2 Ñ2 B1 D6 T1 2 G1 M -जानीष्व ( for °हि )

71 G3 om. 71 ( cf v 1 67 ) — $^{a}$ ) Ś1 तान्सर्वान् ( by transp ), D3 दृष्ट्वा तान् — $^{b}$ ) D3 सर्वान् ( for दृष्ट्वा ). Ś1 [इ]मान्; T1 M [उ]षा ( for सा ) K1 2 4 D3–5 -का- ( K1 -गा )मिनी ( for -काशिनी ) — After 71$^{ab}$, Ñ2 V B Ds ins

1187* देवदानवगन्धर्वविद्याधरगणानथ ।
[ V3 B2 -गन्धर्वान् ( for °र्व- ) ]

— $^{c}$ ) T4 बहून् ( for यदून् ). — $^{d}$ ) T1. 2 G1 4 5 M दृष्ट्वा विष्णुं ( T2 ततो दृष्ट्वा ) सनातनम् — After 71, D6 T1 2 G1. 2. 4 5 M ins.

1188* बलभद्रमथो दृष्ट्वा प्रद्युम्नमथ सात्यकिम् ।
ददर्श यदुसिंह तं पौत्रं विष्णोर्महात्मनः ।
अनिरुद्धं रणे रुद्ध पञ्चबाणमिव स्थितम् ॥
पटे स्थितं ततो दृष्ट्वा वीरं चित्रात्मना यदुम् ।

[ ( L. 1 ) M1–3 ततो ( for अथो ) — ( L 3 ) T1 M–3 अव- ( for इव ). ]

72 $^{a}$ ) K2 मत्वा ( for दृष्ट्वा ) — $^{b}$ ) Cal ed विस्मयास्फुल्ललोचना. — $^{c}$ ) K1 3. 4 Ñ2 V1. 2 B2 3 D ( except D6 ) T1. 4 उवाच ( for अब्रवीत् ). K1 D4 सा ( for ताम् ). — $^{d}$ ) K1 Ñ2 V1 2 B1 3 Ds D2–4 G4 5 मे, D6 Cal ed ते ( for वै )

73 $^{ab}$ ) V2 Bs D6 स्वप्ने पूर्वं ( by transp ) T1 2 G1. 3 M1–3 येन त्वालिङ्गिता चास्मि ( for $^{a}$ ) K1 Ñ2 V3 B1 Ds D3 6 T1 2 G1 3 4 M सखि ( for सती ) — $^{c}$ ) G4 ऽयं ( for मे ) — $^{d}$ ) T1 2 G1 3 4 कृतघ्नस्; M कुतोऽयं ( for कुतस्त्यस् ) N ( except Ś1 ) G2 कुतोऽयं ( K2 V1 3 B3 D2 6 कोऽयं वै ) रतितस्कर, T4 G5 कुतस्त्योऽयं हि तस्करः.

74 $^{b}$ ) Ś1 वद ( for मम ) T1 2 G1 3–5 क्षिप्रमेव वरान- ( T1 °ङ्ग )ने, M क्षिप्रं मम वरानने — $^{c}$ ) G1 M4 कुल- ( for गुण- ) — $^{d}$ ) Ñ1 कामिनि, D2 शोभने ( for भामिनि ) — After 74, Ś1 K1 2 Ñ2 V B Ds D1 2 4–6 T4 G1 2 4. 5 ins.

1189* तत पश्चाद्विधास्यामि कार्यस्यास्य विनिश्चयम् ।

[ G5 तत पश्चाद् ( for कार्यस्यास्य ) K2 D1 5 विनिर्णयम् ( for °श्चयम् ) ]

75 T1 G M G(ed) ins after the ref T2 after 74:

1190* देवदेवो जगन्नाथ साक्षाच्चक्रगदाधरः ।
दानवानां रणे हन्ता विष्णुर्जिष्णुर्जगत्पतिः ॥
यो विक्रमं जगन्नाथस्त्रैलोक्यं सचराचरम् ।
निजैकपदपद्मे यो निलीनमकरोद्विभु ।
तस्यायं देवदेवस्य शङ्खचक्रगदाभृतः ॥

[ ( L 1 ) T1 G3 M1–3 ( all also as in text ) शङ्ख- ( for चक्र- ) — ( L 4 ) M निजैकपादकमले ( for $^{a}$ ) T1 M प्रभुः ( for विभु ) ]

— $^{a}$ ) Ś1 अयं हि लोके विख्यात — For 75$^{ab}$, T1. 2 G M subst.

1191* पौत्रः कृष्णस्य विख्यातः सर्वलोकेषु भामिनि ।

— $^{c}$ ) T2 G1 विशालाक्ष ( for °क्षि ) Ś1 नाम्नानिरुद्धो भर्ता ते — G3 om ( hapl. ) 75$^{d}$–78$^{a}$

76 G3 om. 76 ( cf. v 1, 75 ). K2. 4 om. 76$^{ab}$, — $^{a}$ )

73 न ह्यस्य त्रिषु लोकेषु सदृशोऽस्ति पराक्रमे ।
73 उत्पाट्य पर्वतानेष पर्वतैरेव शातयेत् ॥ ७६
धन्यास्यनुगृहीतासि यस्यास्ते यदुपुंगवः ।
त्र्यक्षपत्न्या समादिष्टः सदृशः सज्जनः पतिः ॥ ७७

उषोवाच ।

यद्येनं मे विशालाक्षि भर्तारममरोपमम् ।
अद्य नानयसि क्षिप्रं प्राणांस्त्यक्ष्याम्यहं शुभे ॥ ७८
उषाया वचनं श्रुत्वा चित्रलेखाब्रवीद्वचः ।
श्रोतुमर्हसि कल्याणि वचनं मे शुचिस्मिते ॥ ७९
यथा बाणस्य नगरं रक्ष्यते देवि सर्वतः ।
द्वारकापि तथा भीरु दुराधर्षा विशेषतः ॥ ८०
न च शक्यमविज्ञातैः प्रवेष्टुं द्वारकां पुरीम् ।
आत्मानं मां च रक्षस्व पितरं च विशेषतः ॥ ८१

उषोवाच ।

अनिरुद्धस्य वदनं पूर्णचन्द्रनिभं सखि ।
यद्यहं तं न पश्यामि यास्यामि यमसादनम् ॥ ८२

---

$K_2$ $V_1$ $Dn_1$ $D_5$ $G_{2\ 5}$ $M_4$ [अ]स्ति ( for [अ]स्य ). — $^{b}$) $K_3$ $D_5$ $T_4$ $M_{1\ 3}$ ऽस्य ( for ऽस्ति ) — $^{d}$) $G_5$ $M_4$ **पर्वतान्** ( for °तैर् ).

77 $G_3$ om 77 ( cf v l 75 ) — $^{b}$) $D_8$ **यस्यास्ते पतिरीदृश** , $T_{1\ 2}$ $G_{1\ 2\ 4\ 5}$ M **यस्या भर्तायमीदृश** — $^{d}$) S ( $G_3$ om , $T_3$ missing ) **सदृश स** ( $G_{1\ 4}$ °**शस्तु** ) **जगत्पतेः**.

78 $G_3$ om 78$^{a}$ ( cf v l 75 ) After the ref , $K_{1\ 3\ 4}$ $\tilde{N}_2$ V B D $T_4$ $G_{1\ 2\ 4\ 5}$ ins

1192* त्वमेवात्र विशालाक्षि योग्या भव वरानने ।
अशक्या हि गतिश्चान्या अगत्या मे गतिर्भव ॥
अन्तरिक्षचरा च त्वं योगिनी कामरूपिणी ।
उपायशिल्पकुशला क्षिप्रमानय मे प्रियम् ॥
उपायश्चिन्त्यतां भीरु अप्रतर्क्यं प्रिये सुखम् । [5]
सिद्धार्था संनिवर्तस्व येनोपायेन सुन्दरि ॥
भवेदापत्सु यन्मित्रं तन्मित्रं शस्यते बुधैः ।
कामार्ता चास्मि सुश्रोणि भव मे प्राणधारिणी ॥

[ (L 1) $K_1$ $D_{3\ 4}$ चैव , $V_3$ $B_3$ $D_6$ मम ( for भव ) — (L 2) $K_{3\ 4}$ $B_{1\ 2}$ Dn $D_{1\ 5}$ $G_2$ न शक्या हि , $D_8$ अन्यत्रापि ( for अशक्या हि ) $D_3$ अन्यत्रापि गतिर्नान्या ( for $^{a}$ ). — (L 3) $V_{1\ 2}$ $B_{1\ 2}$ $D_8$ $D_1$ -चरी ; $V_3$ $B_3$ $D_6$ -गता ( for -चरा ) $D_5$ अन्तरिक्ष चरित्वा त्व ( for $^{a}$ ) $V_2$ चारिणी ( for -रूपिणी ) — (L 4) $D_{1\ 5}$ $G_2$ उपायस्यास्य कुशला ( for $^{a}$ ) $D_8$ पतिम् ( for प्रियम् ) — $G_1$ om lines 5-8 — (L. 5) $K_1$ $D_4$ ( marg as above ) सप्रतीक्षे , $\tilde{N}_2$ $D_8$ सप्रतर्क्यं , $D_3$ सप्रत्येव ( for अप्रतर्क्यं ) — (L 7) $K_3$ कथ्यते ( for शस्यते ) ] — $^{a}$) $T_2$ $G_1$ **अद्य** ( for **यदि** ) — $^{c}$) $D_1$ $T_{1\ 2}$ [आ]**नयसे** ( for °**सि** ) $K_4$ **अद्यैव चेन्नानयसि** — $^{d}$) $\acute{S}_1$ [अ]**हं प्रियान्**, $T_{1\ 2}$ G M **शोभने** ( for [अ]**हं शुभे** )

79 $^{b}$) **इदम्** ( for **वच** ) — $K_2$ om 79$^{cd}$

80 $^{a}$) $\acute{S}_1$ $K_{1\ 3,4}$ $\tilde{N}_2$ $V_2$ Dn $D_8$ $D_{1\ 3-5}$ $T_{1\ 4}$ $G_{2\ 4\ 5}$ **नगरी** ( for °**रं** ). — $^{d}$) $D_{1\ 5}$ **सुरैरपि** ( for **विशेषतः** ) — After 80, N ( except $\acute{S}_1$ $\tilde{N}_1$ ) $T_4$ $G_{2,\ 4\ 5}$ ins.

1193* अयस्मयप्रतिच्छन्ना गुप्तद्वारा च सा पुरी ।
गुप्ता वृष्णिकुमारैश्च तथा द्वारकवासिभि ॥
प्रान्ते सलिलसंयुक्ता विहिता विश्वकर्मणा ।
रक्ष्यते पुरुषैर्घोरैः पद्मनाभस्य शासनात् ॥
शैलप्राकारपरिखादुर्गमार्गप्रवेशिनी । [5]
सप्तप्राकाररचिता पर्वतैर्धातुमण्डितैः ॥

[ L 1) $K_3$ अश्मसघ- , $D_2$ अयोमयै , $D_4$ अश्मयन्त्र- ; $D_4$ यस्माद्यदु ( for अगसाय- ) $K_2$ सदा ; $D_6$ तथा ( for च सा ). — (L 2) $K_2$ वृता ( for गुप्ता ) $D_{2\ 3}$ [अ]न्यैर्द्वार ( for द्वारक- ) $K_2$ $\tilde{N}_2$ $V_3$ $B_2$ $D_6$ तथा द्वाराभिरक्षिभि , $K_3$ द्वारकावासिभिस्तथा ( for $^{b}$ ). — (L 3) $D_2$ -सपूर्णा ( for -सयुक्ता ) — (L 4) $K_{3\ 4}$ Dn $D_8$ $D_{1\ 5}$ ऽवहितैर् ( for पुरुषैर् ) $K_2$ $V_3$ $B_{2\ 3}$ $D_6$ रक्ष्यते ( $K_2$ °क्षिता ) पुरुषव्याघ्रै ( for $^{a}$ ). — (L 5) $K_{1\ 2\ 4}$ Dn $D_4$ -प्रदर्शिनी , $K_2$ $G_{4\ 5}$ प्रवेशना ; $D_{3\ 5}$ -प्रदर्शनी ( for -प्रवेशिनी ).

81 $^{a}$) $\acute{S}_1$ **न शक्यमपरिज्ञातैः** , $K_2$ $V_3$ $B_3$ $D_3$ **शक्या सा न ह्यवि**° — $^{b}$) $K_2$ $B_2$ $T_2$ $G_{1,\ 4,\ 5}$ M **प्रवेष्टुं द्वारका पुरी**. — After 18$^{ab}$, $T_{1\ 2}$ G M ins

1194* नानुयोक्ष्यसि मां देवि साहसेऽस्मिंस्तु कर्मणि ।
ततो विरम बुद्धिं त्व दुःप्रापात्स्वप्नवस्तुनः ॥

[ (L 1) $T_2$ $G_{1,\ 3}$ -युङ्क्ष्व च ( for -योक्ष्यसि ). — (L 2) $T_2$ $G_{1\ 2\ 4\ 5}$ ततो विरम दुर्बुद्धि ( $T_2$ $G_1$ बुद्ध्या त्वं ) ( for $^{a}$ ). ] — $^{c}$) $Dn_1$ **रक्ष त्वं** ( for **रक्षस्व** ) — $^{d}$) $T_{1,\ 2}$ $G_{1,\ 3}$ M **बाणं दैत्यपतिं शुभे**.

82 $\acute{S}_1$ $M_4$ om. the ref. After the ref., $\tilde{N}$ ( except $\acute{S}_1$ $\tilde{N}_1$ ) $T_4$ $G_{1\ 2\ 4\ 5}$ ins :

1195* तव योगप्रभावेण शक्यं तत्र प्रवेशनम् ।
किं मे बहुविलापेन श्रूयतां सखि कारणम् ॥

[ (L 1) $K_2$ सम्यक् , $D_4$ शिव ( for शक्यं ). — (L. 2) $K_1$ -वृथालाप , $D_{5\ 6}$ -प्रलापेन ( for वि° ). $B_1$ बहुना किं प्रलापेन , $D_4$ $G_{1\ 4\ 5}$ किमेव बहुलापेन ( for $^{a}$ ). $K_2$ $V_3$ $B_3$ $D_6$ बहुना किं प्र( $V_3$ $B_3$ वि )लापेन प्रतिज्ञा श्रूयतां मम. ]

यदि त्वं मे विजानासि सख्यं प्रेम्णा च भाषितम् ।
क्षिप्रमानय मे कान्तं प्राणांस्त्यक्ष्यामि वा प्रियान् ८३
चित्रलेखोवाच ।
एषा गच्छाम्यहं भीरु प्रविश्य द्वारकां पुरीम् ।
भर्तारमानयाम्यद्य तव वृष्णिकुलोद्वहम् ॥ ८४
सा वचस्तथ्यमशिवं दानवानां भयावहम् ।
उक्त्वा चान्तर्हिता क्षिप्रं चित्रलेखा मनोजवा ॥ ८५
तृतीये तु मुहूर्ते सा नष्टा बाणपुरात्तदा । C 10023 B 2 118. 96 P 2 118. 96

— $^b$) K$_{1\,3\,4}$ Ñ$_{1\,2}$ B$_{1\,2}$ D (except D$_6$) T$_4$ G$_{4\,5}$ -समप्रभम् (for -निभ सखि) — $^c$) Ñ$_1$ च न, V$_3$ B$_3$ D$_6$ नैव (for तं न) — $^d$) D$_{1\,5}$ गच्छेयं, G$_{4\,5}$ गच्छामि (for यास्यामि) — After 82, N (except Ś$_1$ Ñ$_1$) T$_4$ G$_{2\,4\,5}$ ins

1196* दूतमासाद्य कार्याणां सिद्धिर्भवति भामिनि ।
तस्माद्दौत्येन मे गच्छ जीवन्ती मां यदीच्छसि ॥

[ (L 1) K$_2$ कल्याणि, B$_1$ कार्याणि (for °णा) — (L 2) K$_2$ Ñ$_2$ V$_3$ B$_1$ Dn T$_4$ G$_{4\,5}$ गच्छ त्व, B$_2$ गच्छस्व, D$_3$ ता गच्छ (for मे गच्छ) K$_2$ मा जीवय यशस्विनि (for $^b$) ]

83 $^a$) K$_2$ Dn मे (for त्वं) Ś$_1$ अभि-, K$_2$ Dn$_2$ त्वं वि-, K$_3$ न वि-, K$_4$ D$_5$ मे न, Ñ$_1$ T$_1$ G$_3$ मेऽभि, T$_2$ G$_{1.4}$ नाभि (for मे वि) — $^b$) K$_{1\,2}$ सखी-; Dn सत्यं; D$_2$ सखि, D$_3$ T$_2$ G$_{4\,5}$ सख्या, T$_1$ G$_3$ सख्या (for सख्यं). Ś$_1$ G$_{4\,5}$ [अ]भि-, Dn D$_{1\,2\,5}$ सु- (for च) — $^d$) K$_2$ [अ]ह न चेत्, Ñ$_1$ तेऽग्रत (for वा प्रियान्) K$_{1\,3\,4}$ Ñ$_{2.3}$ V B D T$_4$ G$_{2\,4\,5}$ तवा(G$_4$ त्वाम)स्मि शरणं गता — After 83, N (except Ś$_1$ Ñ$_1$) T$_4$ G$_{2\,4\,5}$ ins

1197* जीवितस्य हि संदेहं क्षयं चैव कुलस्य च ।
कामार्ता हि न पश्यन्ति दूषणं वै कुलस्य च ॥
प्रयत्नो युज्यते कार्येष्विति शास्त्रनिदर्शनम् ॥
त्वं च शक्ता विशालाक्षि द्वारकाया प्रवेशने ।
संस्तुतासि मया भीरु कुरु मे प्रियदर्शनम् ॥ [5]

[ (L 1) K$_2$ Ñ$_2$ B$_3$ स्वजनस्य (for [ए]व कुलस्य) — (L 2) D$_5$ प्रणश्यन्ति (for न पश्यन्ति) D$_5$ (marg) Bom Poona eds G(ed) कामिन्यो मदविह्वला (for $^b$) — After line 2, Ñ$_2$ V$_1$ Dn ins.

1197A* यद्धि युज्यते कर्म तत्तदिष्टं हि कामिनाम् ।
[ Dn कामैस् (for कर्म) ]

— (L 3) K$_2$ प्रपन्नो मुह्यते कार्येषु (for $^a$) D$_4$ कार्य- (for शास्त्र-). K$_2$ विनिर्णय (for निदर्शनम्) — V$_3$ om. lines 4–5 — (L 4) V$_1$ तत्त्व (for त्व च) K$_2$ B$_3$ D$_6$ द्वारवत्या°, D$_4$ G$_5$ °काया (for °काया) K Ñ$_2$ V$_3$ Dn D$_{1\,3-5}$ G$_4$ om. line 5 — (L 5) D$_6$ कुरुष्व (for कुरु मे) ]

84 K$_1$ Ñ$_{2.3}$ V B Dn Ds D$_{1-3\,5}$ T$_4$ G$_{2\,4\,5}$ ins after the ref · D$_4$ cont after 1197*

1198* सर्वथा संस्तुता तेऽहं वाक्यैरमृतकल्पकैः ।
कारिता च समुद्योगं प्रियैः कान्तैश्च भाषितैः ॥

[ (L 1) K$_2$ प्रस्तुता (for सं°), G$_2$ त्वेवं, G$_5$ वै त्वं (for तेऽहं) Ñ$_2$ V$_1$ -कल्पिपभि, D$_{4\,5}$ (marg) G$_{2\,4}$ -कल्पितै G$_5$ -सोदरैः (for -कल्पकैः) K$_2$ कर्तव्ये मितभाषिणि (for $^b$). — (L 2) K$_2$ सखि (for प्रियैः) ]

— $^a$) M$_{1-3}$ उषे (for एषा) — $^b$) K$_{1\,3\,4}$ Ñ$_{2\,3}$ V$_{1\,2}$ B$_3$ Dn Ds D$_{3\,4\,6}$ T$_4$ G$_5$ क्षिप्रं तां, K$_2$ प्रवेक्ष्ये, D$_1$ क्षिप्रतो; D$_2$ क्षिप्रं तद्, D$_5$ T$_1$ क्षिप्रं वै (for प्रविश्य). V$_3$ G$_4$ क्षिप्रं त्वां (G$_4$ वै) द्वारकां प्रति, B$_{1\,2}$ क्षिप्रं द्वारवती पुरीम् — $^d$) V$_1$ वृष्णिवंश (for तव वृष्णि) K$_1$ Ñ$_{1\,2}$ B$_{1\,2}$ T$_{1\,2}$ G$_{1\,3}$ M -कुलोद्भवम् (for °द्वहम्) — After 84, N (except Ś$_1$ K$_1$ Ñ$_1$) T$_4$ G$_{2\,4\,5}$ ins

1199* अनिरुद्धं महाबाहु प्रविश्य द्वारकां पुरीम् ।

85 V$_3$ om 85$^{ab}$ — $^a$) K$_{3\,4}$ Dn D$_{1-5}$ एवं च; D$_6$ T$_{1\,2}$ G$_{1-3}$ M अखिलं, G$_{4\,5}$ अतुलं (for अशिवं) — $^b$) K$_{3\,4}$ Dn$_1$ D$_{1\,5}$ (marg by corr as in text) यादवानां (for दान°) Ś$_1$ Ñ$_1$ महात्मनाम्, D$_3$ दुरात्मनाम् (for भयावहम्) T$_{1\,2}$ G$_{1\,3-5}$ M दानवेश्वरकन्यकाम् (G$_3$ °का°). — After 85$^{ab}$, D$_4$ ins

1200* यादवानां तथैवाहं कुलोद्भूतसमुद्भवम् ।

— $^c$) V$_3$ B$_3$ D$_{2\,6}$ इत्युक्त्वा, D$_4$ उक्त्वेव (for उक्त्वा च) K$_{1\,2}$ इत्युक्त्वान्तर्हिता तत्र — $^d$) G$_2$ जवेन सा (for मनोजवा) — After, 85, N (except Ś$_1$ K$_2$ Ñ$_1$) T$_4$ G$_{2\,4,\,5}$ ins

1201* सखीभि सहिता ह्यूषा चिन्तयन्ती स्थिता तु सा ।

[ D$_2$ हृष्टा, D$_3$ [अ]प्यूषा, D$_4$ तृषा, G$_5$ चोषा (for ह्यूषा). K$_1$ D$_4$ स्थिता च सा, Ds$_2$ G$_2$ स्थिता नु सा, D$_2$ स्थिता तदा, D$_3$ स्थिता शुभा, Bom Poona eds G(ed) तु सा स्थिता (for स्थिता तु सा). V$_3$ B$_{1\,2}$ D$_6$ चिन्तयामास त पतिम् (for $^b$) ]

86 $^a$) Ñ$_2$ मुहूर्तेन (for °र्ते सा). G$_{4\,5}$ तृतीयेन मुहूर्तेन — $^b$) K$_2$ गत्वा, D$_4$ त्यक्त्वा, T$_2$ गता (for नष्टा) Ś$_1$ बाणपुरे, K$_3$ °सुता (for °पुरात्) Ñ$_2$ सा चचाल पुरात्तदा; D$_2$ सखीप्रियचिकीर्षया — After 86$^{ab}$, Ñ$_2$ V B Dn Ds D$_{2\,6}$ T$_4$ G$_{2\,4\,5}$ ins

1202* सखीप्रियं चिकीर्षन्ती पूजयन्ती तपोधनान् ।
[ D$_4$ चित्ते सदाशिव देव (for $^a$) ]

— $^c$) K$_2$ तत्क्षण (for क्षणेन) — $^d$) Ś$_1$ वृष्णि- (for कृष्ण-)

87 G$_2$ om (hapl) 87$^{ab}$. — $^a$) T$_{1,\,2}$ G$_{3-5}$ M कैलासशिखरप्रख्यैः — $^b$) G$_2$ प्राकारैर् (for प्रासादैर्) — $^c$) Ś$_1$ तत्र, T$_{1,\,2}$ G$_{1,\,3}$ M एका, Bom. Poona eds G(ed) रम्यां

क्षणेन समनुप्राप्ता द्वारकां कृष्णपालिताम् ॥ ८६
कैलासशिखराकारैः प्रासादैरुपशोभिताम् ।
ददर्श द्वारकां चैव दिवि तारेव संस्थिताम् ॥ ८७

इति श्रीहरिवंशे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

# १०८

वैशंपायन उवाच ।
ततो द्वारवतीमध्ये प्राकारैरुपशोभितम् ।
ददर्श भवनं यत्र प्राद्युम्निरवसत्सुखम् ॥ १
ततः प्रविश्य सहसा भवनं तस्य तन्महत् ।
ददर्श मध्ये नारीणां तारापतिमिवोदितम् ॥ २
क्रीडाविहारे नारीभिः सेव्यमानमितस्ततः ।

---

( for चैव ) — $^{d}$ ) K1 तारोपम-, K2–4 V B1 3 Dn Ds1 D1 4–6 T4 G2 तारामिव, B2 तारासुप-; G4 तारेव सु- ( for °व सं- )

COLOPHON om in Ñ1 T3 missing — *Mention of the Epic* Ds2 — *Mention of Khila* N ( Ñ1 om ) S ( T3 missing ) — *Adhy name* Ś1 उषाहरणम्, K1 3 4 Ñ2 V1. 2 Dn Ds D3–5 बाणयुद्धम्, K2 द्वारकायां चित्रलेखागमनम्, V3 B D6 चित्रलेखागमनम्, D1 चित्रलेखाप्रयाणे बाणयुद्धम्, D2 उषाचित्रलेखासवादः । चित्रलेखाद्वारकागमनम्, T1 G1. 3 चित्रलेखाद्वारकाप्रवेशः ; T2 चित्रलेखाद्वारकापुरीप्रवेश — *Adhy no* (figures, words or both) K3 170, V1 175, V2 174, V3 Dn Ds2 173, D1 66, D3 191, T1 G3 247, T2 G1 249, T4 217, G2 241, G4 250, G5 248, M1–3 211, M4 210 — *Śloka no* K1 135, Dn1 127, D3 120, D4 122

## 108

☞ This adhy is missing in T3 ( cf. v 1 99 21 )

1 After the ref, all Mss ( except Ś1 Ñ1 ) ins a passage given in App I ( No 33 ) — K1 2 Ñ2 V B Dn Ds D1–5 S ins after App I ( No 33 ) D6 after $1^{ab}$ :

1203* ततो द्वारवतीमध्ये कामस्य भवनं शुभम् ।
तत्समीपेऽनिरुद्धस्य भवनं सा स्म पश्यति ॥
सौवर्णवेदिकास्तम्भं रुक्मवैदूर्यतोरणम् ।
माल्यदामावसक्तं च पूर्णकुम्भोपशोभितम् ॥
बर्हिकण्ठानतग्रीवं प्रासादैरेकसंचयैः । [5]
मणिप्रवालसंस्तीर्णं दिव्यगन्धर्वनादितम् ॥

[ Ñ2 om line 1. — ( L 1 ) M4 गता ( for ततो ). D1 कृष्णवेश्मसमीपे तु ( for $^{a}$ ) — ( L. 2 ) K1 V1. 2 प्रविश्य च, Ñ2 प्रपश्यति, B3 [अ]नुप°, D1 4 5 विवेश ह, D6 G2 व्यपश्यत, M1–3 ह्यपश्यत, M4 [अ]प्यपश्यत ( for स्म पश्यति ) Dn भवन तत्प्रविश्य सा, T1 2 G1 3–5 सदन साप्य( G1 सा ह्य-, G4 5 सा वि )पश्यन ( for $^{b}$ ) — K2 om lines 3–6 — ( L. 3 ) D3 सुवर्ण- ( for सौ° ) B1 ( marg as above ) रूप्य- ( for रुक्म- ) — ( L 4 ) M3 4 -सिक्त ( for -सक्तं ). G3 माल्यदामोपसिक्त च ( for $^{a}$ ) — ( L 5 ) Ñ2 V1 3 B Dn Ds D1 2 4–6 T4 -कण्ठनिभ-, T1 G2 3 M4 कण्ठोन्नत- ( for -कण्ठानत- ) K1 ग्रीव- ( for -ग्रीवं ). D3 नीलकण्ठनिभग्रीवैः ; T2 G1 4. 5 बर्हिकण्ठोन्नतग्रीव- ( for $^{a}$ ). D4 अर्क- ( for एक- ). G3 M -सयमै ( for -सचयै ) D1 2 5 6 प्रासादैरकैसंनिभैः ; T1 2 G1 3–5 °दैरुपशोभितम् ( for $^{b}$ ) — ( L 6 ) K1 B1 D6 T1 -सकीर्ण ; Ñ2 V1 2 B2 3 Dn Ds D2 3 T4 G2. 5 -विस्तीर्ण, D4 -निस्तीर्ण- ( for -संस्तीर्णं ) V3 Dn1 T1 4 G2. 4 M4 देव- ( for दिव्य- ) D4 -दिव्यगन्धमनोहरम् ( for $^{b}$ ). ]

— K2 T1. 2 G1–3 M om 1. V2 B1 2 D5 om $1^{ab}$ — $^{b}$ ) K1. 3 4 Ñ2 3 V1 3 B3 Dn Ds D1–4. 6 T4 G4. 5 प्रासादैर् ( for प्राकारैर् ). — $^{c}$ ) Ś1 सदनं ( for भवनं ) Ñ2 V1 D3 तत्र ( for यत्र )

2 Ñ2 repeats $2^{ab}$ after 1204* — $^{a}$ ) K2 Ñ2 ( second time ) तद्वेश्म ( for सहसा ) — $^{b}$ ) K3 सानिरुद्धं सुतेजसम् ; Ñ2 ( second time ) अनिरुद्धस्य तेजसम् ( sic ), T1 2 G1–3 M प्राद्युम्नेर्भवनं महत् — K1 3 4 V B D S ( T3 missing ) ins after $2^{ab}$ Ñ2 after the first ocurrence of $2^{ab}$ :

2204* तत्रानिरुद्धं सापश्यच्चित्रलेखा वराप्सरा ।

[ D5 [अ]प्सरोवरा, G2 वराङ्गना ( for °प्सराः ) ]

— $^{c}$ ) K1 3 4 Ñ2 3 V B D T4 G2 4. 5 मध्ये परमनारीणां. — $^{d}$ ) T1 2 G1 3 ताराधिपम् ( for °पतिम् ). G3 ताराधिपतिवर्चसम्

3 $^{b}$ ) D6 रोच्यमानम् ( for सेव्य° ). — $^{d}$ ) G1 च परया

पिबन्तं मधु माध्वीकं श्रिया परमया युतम् ।
वरासनगतं तत्र यथैवैलविलं तथा ॥ ३
चिन्तयाविष्टदेहा सा चित्रलेखा मनस्विनी ।
कथं कार्यमिदं कार्यं कथं स्वस्ति भवेन्मम ॥ ४
सान्तर्हिता चिन्तयित्वा चित्रलेखा यशस्विनी ।
तामस्या छादयामास विद्यया शुभलोचना ॥ ५
हर्म्ये स्त्रीगणमध्यस्थं कृत्वा चान्तर्हितं तदा ।
उत्पपात गृहीत्वा सा प्राद्युम्निं युद्धदुर्मदम् ॥ ६
सा तमध्वानमागम्य सिद्धचारणसेवितम् ।
सहसा शोणितपुरं प्रविवेश मनोजवा ॥ ७ C 10080 B 2 119 55 F 2 119 55

---

( for परमया ) — $K_2$ reads $3^{ef}$ after 1205* — $^e$) $K_4$ परासन- ( for वरा° ) — $^f$) $Ś_1$ $V_2$ [ऐ]डविडं ( for [ऐ]लविलं ) $D_4$ यथा वै धनदं तथा, $D_6$ ( marg ) $G_2$ M साक्षात्काममिवोदितम्, $T_{1\ 2\ 4}$ $G_{1\ 3-5}$ साक्षात्काममिव स्थितम् ( $T_4$ °वापरम् ). — After 3, K $Ñ_{2\ 3}$ V B D ( except $D_3$ ) $T_4$ $G_{2\ 4\ 5}$ ins

1205* वाद्यते समतालं च गीयते मधुरं तथा ।
न च तस्य मनस्तत्र तमेवार्थमचिन्तयत् ॥
स्त्रिय सर्वगुणोपेता नृत्यन्ते तत्र तत्र वै ।
न चास्य मनसस्तुष्टिं चित्रलेखा प्रपश्यति ॥
न चाभिरमते भोगैर्न चापि मधु सेवते । [5]
व्यक्तमस्य हि तत्स्वप्नं हृदये परिवर्तते ॥
इति तत्रैव बुद्ध्या च निश्चिता गतसाध्वसा
सा दृष्ट्वा परमस्त्रीणा मध्ये शक्रध्वजोपमम् ॥

[ $K_2$ om lines 1–2 $Ñ_2$ om line 1 — ( L 1 ) $T_4$ समतार; $G_5$ च समन्ताच् ( for समताल ) $D_2$ वाद्यते सुमहाताल ( for $^a$ ). $D_4$ गायन्त ( for गीयते ) $D_2$ परम ( for मधुर ) — ( L 2 ) $K_{1\ 4}$ त्वन्यम् ( for तमेव ). $V_3$ $B_3$ Ds व्यचिन्तयत् ( for अ° ) — After line 3, $K_1$ $Ñ_2$ $B_1$ $D_6$ ins

1205A* प्रियासु गीयमानासु नृत्यमानासु सर्वश ।

— ( L 4 ) $K_2$ तत्र, $B_2$ $T_4$ $G_5$ चात्र ( for चास्य ) $D_{1\ 5}$ तुष्टिश् ( for तुष्टिं ) $K_2$ [अ]स्य ( for प्र- ) — ( L 5 ) $K_{1,\ 3}$ $B_2$ [अ]पि, $K_2$ [ए]व, $K_4$ $D_{1\ 5}$ [अ]ति- ( for [अ]भि- ) $K_2$ स्त्रीभिर्; $V_{1,\ 2}$ $D_2$ भोगे ( for भोगैर् ) $V_3$ $B_1$ Ds [अ]ति- ( for [अ]पि ). — ( L 6 ) $K_2$ एव ( for अस्य ) V सुस्वप्नो, $B_{1,\ 3}$ Ds $D_6$ $T_4$ स स्वप्नो; $B_2$ G(ed) तत्स्वप्नो ( for °प्न ) $G_2$ वृत्तमस्य हि तत्स्वप्नो, $G_{4,\ 5}$ व्यक्तमस्याश्च तत्स्वप्नो ( for $^a$ ). $K_2$ $Ñ_2$ $V_3$ $B_3$ हृदि स- ( for हृदये ). — ( L 7 ) $D_{1,\ 5}$ $T_4$ बुध्वा ( for बुद्ध्या ) $K_2$ सा ( for च ) $K_4$ निश्चया, $D_5$ निश्चिन्ता ( for °ता ) — ( L 8 ) $Ñ_2$ $V_1$ Ds दृष्ट्वा सा ( by transp ) $K_2$ $D_2$ मध्ये चक्रधरोपमम् ( for $^b$ ) ]

4 $^a$) $K_{1\ 3\ 4}$ $Ñ_{2\ 3}$ V $B_{1\ 3}$ D $T_2$ $G_2$ -हृदया, $G_{1\ 3}$ -चित्ता सा ( for देहा सा ) — $Ś_1$ om ( hapl ) $4^c$–$5^b$ — $^c$) $K_3$ कथम् ( for कार्यम् ) — $^d$) $K_{1\ 3\ 4}$ $Ñ_2$ V B Dn Ds $D_{1\ 2,\ 4-6}$ $T_4$ $G_2$ इति; $K_2$ $D_3$ च मे; $M_4$ तथा ( for मम ).

5 $Ś_1$ om. $5^{ab}$ ( cf v l. 4 ). — $^a$) $D_6$ ( marg. ) $T_{1\ 2\ 4}$ G M चित्रलेखा ( for चिन्तयित्वा ) — $^b$) $T_4$ चिन्तयित्वा ( for चित्रलेखा ) $K_{1\ 2}$ $Ñ_1$ $B_2$ $D_1$ मनस्विनी ( for यश° ) $D_6$ ( marg ) $T_{1\ 2}$ G M विद्याधरसुता तदा — $^c$) $G_{1\ 5}$ तमप्याच्छादयामास — $^d$) $D_3$ निद्रया चारुलोचना, $T_{1,\ 2}$ $G_{1\ 3-5}$ M विद्यया च ( M °याथ ) नभोगता — K $Ñ_{2\ 3}$ V $B_{1\ 3}$ $D_{1\ 3-5}$ $T_4$ $G_{2\ 4\ 5}$ ins a passage given in App I ( No 34 ) after 5, $B_2$ Dn Ds $D_{2\ 6}$ after the first occurrence of $6^{ab}$, $T_2$ $G_1$ after 1214*

6 $B_2$ Dn Ds $D_{2\ 6}$ repeat $6^{ab}$ after App I ( No 34 ) — $^a$) $Ś_1$ $D_4$ $M_4$ हर्म्यं- ( for हर्म्ये ) $G_2$ -मध्ये तु ( for -मध्यस्थं ) — $^b$) $D_6$ ( both times ) $T_1$ दृष्ट्वा ( for कृत्वा ) $T_2$ $G_1$ [अ]न्तर्हिता ( for °तं ) $D_3$ च तम् ( for तदा ) $B_2$ $D_{2\ 6}$ ( all first time ) $G_2$ दृष्ट्वा ( $D_2$ हृत्वा ) चान्तर्हिता तदा — $^c$) $T_1$ तं ( for सा ) — $^d$) $D_2$ प्राद्युम्न ( for °म्निं )

7 $^a$) $K_1$ $V_{1\ 2}$ $D_{3\ 4}$ तदध्वानम्; $K_2$ $Ñ_1$ तदा° ( for तम° ) $T_1$ $G_{1\ 3\ 5}$ M आसाद्य ( for आगम्य ) — $T_2$ om $7^{bc}$ — $^b$) $T_1$ $G_{1\ 3-5}$ विद्याधरनिषेवितम् — $^c$) $T_1$ आनीय ( for सहसा ) — $^d$) $Ds_2$ महाजवा ( for मनो° ) — After 7, K $Ñ_{2\ 3}$ V B D $T_4$ $G_{2\ 4\ 5}$ G(ed) ins

1206* अदर्शनं तमानीय मायया कामरूपिणी ।
अनिरुद्ध महाभागा यत्रोषा तत्र गच्छति ॥
उषायादर्शयच्चैनं चित्राभरणभूषितम् ॥
चित्राम्बरधर वीरं कन्दर्पसमरूपिणम् ॥

[ ( L 1 ) $G_5$ तन्मानीय ( for तमा° ) $K_2$ $B_{1,\ 2}$ $D_3$ ददृशुर्न च ता ( $B_2$ ता ) नार्यो ( for $^a$ ) — ( L 2 ) $T_4$ तमानीय ( for महाभागा ) $K_2$ अनिरुद्धसम यान्ती, $Ñ_2$ $V_3$ B $D_6$ °द्धसमेता सा, $D_3$ °द्ध समेता वै ( for $^a$ ) $K_2$ उषा प्राति सुयोगिनी ( for $^b$ ) — $K_2$ om line 3–4 — ( L. 3 ) $Ñ_2$ $V_{1\ 3}$ $G_2$ उषायै ( for °या ) $V_1$ $B_3$ -भूपणम्, $V_3$ $B_2$ -स्रजम् ( submetric ), $G_2$ - से ि म् ( for भूषि° ) $Ñ_2$ चित्रभूपणभूपितम्, $D_2$ सिद्धाभरण°, $D_6$ विचित्राभरणस्रजम् ( for $^b$ ) — $K_{3\ 4}$ om line 4 — ( L 4 ) Cal ed चित्रायुध- ( for °म्बर- ) $G_2$ देव ( for वीर ) $D_3$ -विग्रहम् ( for रूपिणम् ) $D_{1,\ 5}$ G(ed.) रहस्यमररूपिणम् ( for $^b$ ) ]

$G_{2\ 4\ 5}$ cont. $T_{1,\ 2}$ $G_{1,\ 3}$ M ins after 7. $T_4$ after line 2 of 1206*

1207* तृतीये तु मुहूर्ते सा प्राप्ता बाणपुरं तदा ।

तत्रोषा विस्मिता दृष्ट्वा हर्म्यस्था सखिसंनिधौ ।
प्रवेशयामास तदा संप्राप्तं स्वगृहं ततः ॥ ८
प्रहर्षोत्फुल्लनयना प्रियं दृष्ट्वार्थकोविदा ।
त्वरिता कामिनी प्राह चित्रलेखां भयातुरा ॥ ९
सखीदं वै कथं गुह्यं कार्यं कार्यविशारदे ।
गुह्ये कृते भवेत्स्वस्ति प्रकाशे जीवितक्षयः ॥ १०

उषां ता दर्शयामास पश्यैनं यद्यसौ भवेत् ॥
एवमुक्ता तदा कन्या बाणस्य दुहिता ततः ।

[ G4 om line 1 T4 om lines 2–3 G2 om line 2 —(L 2) G4 5 उषा तामब्रवीच्चैव (for $^{a}$). —(L 3) T1 नृप (for तत ) ]

8 $^{a}$) K2 तं चोषाभिगतं दृष्ट्वा, D3 तथोषाधिगतं दृष्ट्वा, T4 तत्रोषां विस्मितां दृष्ट्वा, G3 तुतोष विस्मितां दृष्ट्वा, M4 तत्रोषा विस्मयाविष्टा — $^{b}$) T4 हर्म्यस्थां (for °स्था) T1 2 G2 3 M1–3 -संवृता (for -संनिधौ) M4 हर्म्यस्था सह संवृता — $^{c}$) K1 3 4 Ñ2 3 V1 3 B Dn Ds D1 4–6 T4 G2 च तं, D2 च तौ (for तदा) — $^{d}$) Ś1 वयस्या, K1 3 Ñ2, 3 V1 B2 Dn Ds D1 2 4 5 G2 तदा सा, K2 D3 स्वागतं, Ñ1 V2 तं यत.; B1 3 D6 सा तदा, M4 संयता (for संप्राप्तं) K4 तदा सान्तर्गृहं तत. — After 8, Ñ2 ins

1208* प्रवेशितेऽनिरुद्धे तु प्रहृष्टा सहिता तया ।
सखीजनसमायुक्ता लज्जमाना शुचिस्मिता ॥

9 $^{a}$) Ds हर्षेणोत्फुल्लनयना, D6 T2 प्रहृष्टो° — $^{b}$) Ñ1 D2 च, Ñ2 D3 [अ]थ (for [अ]र्थ) — After $9^{ab}$, N (except Ś1 Ñ1 D1, 2) T4 G2 4 5 G(ed) ins

1209* सा हर्म्यस्था तमर्घ्येण यादवं समपूजयत् ।
चित्रलेखां परिष्वज्य प्रियाख्यानैरयोजयत् ॥

[ (L. 1) K1 2 Ñ2 3 V2 Ds D3 4 स्व- (for सा). — K2–4 D1 om line 2. — (L. 2) V3 B3 D6 प्रयुज्य च, Dn1 Ds2 अतोषयत्, Dn2 प्रतोष्य च, Cal ed नियुज्य च (for अयोजयत्) D5 G(ed) प्रियाख्यानेष्वयोजयत् (for $^{b}$) ]

— Ñ1 om $9^{c}$–$10^{b}$ — $^{c}$) V3 B1 3 Ds D6 त्वरितं (for °ता) Ś1 T1 G3 M4 भामिनी (for का°) K1 2 D3 4 T2 त्वरितं भामिनी प्रा(K2 °नीमा)ह — $^{d}$) K3 भयाकुला, V2 T2 G1, 3–5 M भयान्विता (M2 °ताम्), D4 भयातुराम् (for °तुरा).

10 Ñ1 om. $10^{ab}$ (cf. v 1 9) — $^{a}$) K1 D4 वद (for [इ]दं वै) Ñ2 V2 3 B Ds D6 T4 G2, 4 5 परं, D3 कृतं (for कथ). T1, 2 G1 3 M कार्यं (for गुह्यं). — $^{b}$) T1 G3 M कार्याकार्य-, Bom Poona eds. कार्यं गुह्ये; G(ed) कार्यं गुह्यं (for कार्यं कार्य-) — $^{c}$) Ś1 स्वस्ति भवेत् (by transp) — $^{d}$) D2 M3 -क्षयम् (for -क्षय:) — $^{d}$) G2 प्रकाशे जीविते भयम्. — After 10, T4 ins an addl colophon mentioning adhy no 218 — T4 ins after the addl colophon K Ñ3 V1 2 B Ds2 D1–5 G2, 4, 5 after 10 Ñ2 V3 Dn Ds1 D6 after the first occurrence of $11^{abcd}$ :

1210* चित्रलेखाब्रवीद्वाक्यं शृणु त्वं निश्चयं सखि ।
कृतं पुरुषकारं हि दैवं नाशयते सखि ॥
न वै देव्याः प्रसादस्ते अनुकूलो भविष्यति ।
अप्रमादात्कृतं गुह्यं न कश्चिज्ज्ञास्यते नर ॥
सख्या वै एवमुक्ता सा पर्यवस्थितचेतना ।
एवमेतदिति प्राह सानिरुद्धमिदं वच ॥
दिष्ट्या स्वप्नगतश्चोरो दृश्यते सुभगो जन. ।
यत्कृते तु वय खिन्ना दुर्लभप्रियकाङ्क्षया ॥
कच्चित्तव महाबाहो कुशलं सर्वतोगतम् ।
हृदयं हि मृदु स्त्रीणां तेन पृच्छाम्यह तव ॥
तस्यास्तद्वचनं श्रुत्वा उषाया· श्लक्ष्णमर्थवत् ।
सोऽप्याह यदुशार्दूल शुभाक्षरतरं वचः ॥
हर्षविप्लुतनेत्रायाः पाणिनाश्रु प्रमृज्य च ।
प्रहस्य सस्मितं प्राह हृदयग्राहकं वच. ॥
कुशलं मे वरारोहे सर्वत्र मितभाषिणि ।
त्वत्प्रसादेन मे देवि प्रियमावेदयामि ते ॥
अदृष्टपूर्वश्च मया देशोऽयं शुभदर्शने ।
निशि स्वप्ने मया दृष्टं सकृत्कन्यापुरं महत् ॥
एवमेवमहं भीरु त्वत्प्रसादादिहागतः ।
न च तद्रुद्रपत्न्या वै मिथ्या वाक्यं भविष्यति ॥
देव्यास्तु प्रीतिमाज्ञाय त्वत्प्रियार्थं च भाविनि ।
अनुप्राप्तोऽस्मि चाद्यैव प्रसीद शरणं गतः ॥

[ Before line 1, D1 ins चित्रलेखा, D6 T4 वैशंपायन.. —(L. 1) D1 निश्चलं (for °य). V3 B1 D6 शृणु त्वं सखि निश्चयम्, G4, 5 शृणु त्वं सखि मद्वच· (for $^{b}$) — K2 om. (hapl) line 2 —(L. 2) K1 3, 4 Ñ2 3 V1 B2 Ds D1–5 कृत पुरुषकारेण, D6 कृत च पुरुपाकार (for $^{a}$) K3 Dn G4 5 ध्रुवम्, Ds D2, 4 T4 G2 क्षणात् (for सखि) — Ñ3 om. lines 3–8 —(L. 3) K2 स चेद्, K3 विधिर्; K4 D1, 5 विधेर्; Ñ2 V3 B Dn Ds1 D6 G2 यदि, V1, 2 T4 G4, 5 न चेद्, D3 न च (for न वै) K1 द्वेप (for देव्या·). K3 विधिर्देव्याः प्रसादात्ते, Ds2 यदि देव्या· प्रसाद ते, D2 तव देव्या· प्रसादेन (for $^{a}$) K4 G2 नानुकूलो, Dn2 Ds2 D5 ह्यनु°, D2 अनुकूलं, D3 प्रातिकूलो (for अनु°). — (L 4) D1 5 अद्य माया· (for अप्रमादात्) Ñ2 ज्ञायते (for ज्ञास्यते). D3 सखि, G4 सुर· (for नर.) —(L. 5) B1 D2 तया, G4 [अ]पि च (for वै). D3 वयस्ययैवमुक्ता सा (for $^{a}$) V3 -लोचना (for -चेतना). K3 गन्धर्वस्थितचेतना, T4 समुप° (for $^{b}$). —(L 6) K3 D3 एवम् (for एतद्). G4 एव तदिह च प्राह, G5 एवं तदिति हि प्राह (for $^{a}$). — V3 om (hapl.) lines 7–12. —(L. 7) K2 D3 दृष्ट:, B3 दृष्टा (for दिष्ट्या). K3 स्वप्ने (for

इत्युक्त्वा त्वरमाणा सा गुह्यदेशे स्वलंकृता । कान्तेन सह संयुक्ता स्थिता वै भीतभीतवत् ।

C 11000
B 2 119 76
P 2 119 76

स्वप्न- ) K2 दुर्दर्शी ( for दृश्यते ) Bom Poona eds G(ed) पति ( for जन ) D3 दृश्यतेऽद्य शुभानने ( for $^{b}$ ) —(L 8) Cal ed -काम्यया ( for -क ङ्क्षया ) — V2 om line 9 K2 reads and D2 repeats line 9 after line 12 —(L 9) G2 ते सु- ( for तव ) K2 D2 ( second time ) महाभागे ( for °बाहो ) —(L 10) D3 एवं ( for तेन ) K2 पृच्छाम्यह-मनामयम् ( for $^{b}$ ) — Before line 11, D2 ins वैशपायन उवाच —(L 11) K3 D4 सूक्तम् ( for श्लक्ष्णम् ) —(L 12) D3 नृप- ( for यदु- ) K2 हृदयग्राहक वच , D2 सुभाषित-तर वच , G4 5 शुभाक्षरमिद वच ( for $^{b}$ ). —(L 13) G4 5 हर्षैर् ( for हर्ष- ). K3 -नेत्राणि ( for °या ) D2 तु , G5 स- ( for [अ]श्रु ). V1 विमृज्य ( for प्र° ) —(L 14) G5 विस्मित ( for स° ) D3 प्रहस्य स्मितहृदयो ( for $^{a}$ ) — K2 om line 15 —(L 15) D2 त्वा दृष्टा ( for सर्वत्र ) Ñ2 [अ]मृत- , V3 प्रिय- , G4 स्मित- ( for मित- ) D3 [इ]त्याह ता प्रियभाषिणीम् ( for $^{b}$ ) —(L 16) V3 B2 3 त्वत्प्रदानान्न सदेह , G2 4 5 °सादाच्च मे देवि ( for $^{a}$ ) —(L 17) B1 देशोऽय ; D3 चित्रेऽपि ( for च मया ) D2 अदृष्टश्च मया देश ( for $^{a}$ ) D2 श्रुतो ( for देशो ) Ñ2 V1 Ds प्रिय- ( for शुभ- ) V2 -दर्शन ( for °ने ) B1 न श्रुतश्च कदाचन ( for $^{b}$ ) —(L 18) Bom Poona eds G(ed) यथा ( for मया ) K1 2 D4 T4 G4 दृष्ट ( for दृष्ट ) D3 निशि स्वप्नो मया दृष्ट ( for $^{a}$ ) K2 4 D1 5 -पुरे च या ( K2 य ), K3 -पुर च यत्, Ñ2 V1 2 Ds1 पुर तव , Ds2 -पुरे तव , D2 -पुर च ते , D3 -पुरे मया ( for -पुर महत् ) —(L. 19) Cal ed एव हि ( for एवम् ) G4 एव ह्यह हि ते भीरु ( for $^{a}$ ) —(L 20) D3 तद्भव- , G2 रुद्रस्य ( for तद्रुद्र- ) —(L 21) Ñ2 V1 3 आस्थाय ( for आज्ञाय ) G5 देव्या· प्रीतिं मयि तु सा ( for $^{a}$ ) D3 भाषितम् ( for भाविनि ) —(L 22) K1 D3 4 अत्र , D5 आशु ( for अनु- ) Ds [ए]-वाद्य ( by transp ) K2 तत्प्राप्तो ह्यहमद्यैव ( for $^{a}$ ) — After line 22, D6 ins an addl colophon mentioning adhy name बाणयुद्धम्. ]

B1 2 Ds2 D2 T4 G2 4, 5 cont Ds1 ins. after the second occurrence of $11^{cd}$

1211* इत्युक्त्वा रमयामास सोऽनिरुद्धो महायशाः ।

[ B2 Ds2 D2 इत्युक्त्वा वरयामास ( for $^{a}$ ) D2 T4 G2 4 5 महामना ( for °यशा· ) ]

— After the above, D2 reads line 1 of 1212*

11 Ñ2 V3 Dn Ds1 D6 reads $11^{abcd}$ for the first time before 1210*. Before $11^{ab}$, D6 ins **वैशंपायनः** — $^{a}$ ) Ñ1 **रममाणा** ( for **त्वर°** ) K2 **इत्युक्त्वा त्वरमाणस्य** — $^{b}$ ) Ś1 Ñ1 V2 3 ( both times ) B2, 3 G5 M1, 2 **गुह्ये देशे**, K2 **रहोदेशे** ( for **गुह्यदेशे** ). B1 **स्वयं गता** ; D3 T1 2 G1, 3 M1–3 **स्वलंकृते** ( for °**ता** ) — K Ñ3 V1 2 B Ds2 D1–5 T2 4 G1 3–5 G(ed) ins after $11^{cd}$ Ñ2 V3 Dn D6 after the second occurrence of $11^{cd}$ Ds1 after 1211*

1212* ततश्चोद्वाहधर्मेण गान्धर्वेण समीयतु· ।
अन्योन्यं रेमतुस्तौ तु चक्रवाकौ यथा दिवा ॥
पतिना सानिरुद्धेन मुमुदे तु वराङ्गना ।

[ D4 reads line 1 after 1211* —(L 1) T2 G1, 3–5 ततश्चौद्वाहिक सर्व ( for $^{a}$ ) V3 B1 2 समेत्य च ( for समीयतु ) —(L 2) K3 D2 4–6 रमतुस् ( for रे° ) K2 इवेशितम् , B1 इवाप्सु च , D3 यथा मुदा ( for यथा दिवा ) — D6 om line 3 —(L 3) K2 D3 अनिरुद्धेन पतिना ( for $^{a}$ ) ]

Ñ2 V B Dn Ds D6 cont T2 4 G1 3–5 G(ed.) ins after line 2 of 1212*.

1213* कान्तेन सह संयुक्ता दिव्यस्रगनुलेपना ।

[ Ñ2 V1 3 -स्रग्गन्ध- Bom Poona eds G(ed) -वस्त्रानु- ( for स्रगनु- ) ]

D6 T2 4 G1 3–5 G(ed) cont T1 G2 M ins after $11^{cd}$

1214* एकदेशे गृहस्यास्य प्रच्छन्ने चैव भामिनी ।
करेणुर्द्विरदेनेव वरयामास संगता ॥
पपौ तस्य मुखं साध्वी समालिङ्ग्य यथाक्रमम् ।
नेत्रे चुचुम्ब सा देवी बाणस्य दुहिता यदुम् ॥
भूयो भूय समाश्लिष्य यथेष्टं मदमोहिता ।
न तृप्तिमाययौ सा तु समालिङ्ग्य यदूत्तमम् ॥

Colophon

वैशंपायनः ।

तामस्या विद्यया युक्तः प्राद्युम्निरथ तत्क्षणात् ।
चिन्तयामास तं दृष्ट्वा गृहे स्त्रीजनमद्भुतम् ॥
कोऽयं विधिर्मम महान्न जाने त्वस्य कारणम् ।
स्वप्नोऽयं किं मया दृष्ट उताहो विभ्रमो मम ॥
जागर्म्यहं न मे स्वप्नो न च मे विभ्रमो महान् ।
केयमग्रे स्थिता सुभ्रूर्लतेव च सुपुष्पिता ॥
उद्भ्रान्तहरिणापाङ्गी भ्रूलताभङ्गभाषिणी ।
पीनस्तनोरुजघना ताम्रपादकराधरा ॥
नीलकुञ्चितकेशाढ्या मधुरस्मितभाषिणी ।
मम नेत्रपथाक्रान्ता चन्द्रलेखेव शारदी ।
किमिद नात्र जानामि केनेदं प्रतिपादितम् ॥
दृष्ट्वास्य ववृधे कामस्तामुषां मदमोहिताम् ।
सा च तत्पुरत साक्षात्पानं कर्तुं समुद्यता ॥
अथ तामिङ्गितैर्ज्ञात्वा श्रुत्वा चैव यथार्थत· ।
रमयामास रमणी कामतस्तां मनोरमाम् ॥
सा चापि तं समासाद्य हर्षभीताकुलेक्षणा ।
कामतो रमयामास रोमाञ्चोद्गतकर्कशा ॥
लीलासंलापललितैर्ललना तं समाचरत् ।

